अनवद्यानुपमवेदचतुष्टयविधानवेधःश्रीहेमचन्द्रगुरुभ्रातृश्रीप्रद्युम्न-
सूरिचरणचंचरीकश्रीचन्द्रसेनसूरिसूत्रिता स्वोपज्ञा–

# श्रीउत्पादादिसिद्धिः



प्रकाशयित्री—श्रीजामनगरवास्तव्यश्रेष्ठिधारशीभाइतनुजलक्ष्मीचन्द्रतनुजश्रेष्ठिचुनीलालविहितार्थ-
साहाय्येनमालवान्तर्गतश्रीरतलामपुरीया श्रीऋषभदेवजीकेशरीमलजीत्यभिधा श्वेतांबरसंस्था ॥

मुद्रयिता—श्रीफकीरचन्द मगनलाल बदामी, धी 'जैन विजयानन्द' प्रीन्टींग प्रेस,
कणपीठ बजार—सुरत.

प्रतय ५०० वीरसंवत् २४६३ पण्यं २-०-० विक्रमसंवत् १९९२ क्राइस्टसन् १९३६

प्राप्तिस्थानं श्रीजैनानन्दपुस्तकालय गोपीपुरा, सुरत.

# श्रीउत्पादादिसिद्धेर्द्वात्रिंशिकाया उपक्रमः

समाददतु सज्जना उन्मुद्याप्र्यमाणमिदं श्रीउत्पादादिसिद्धिप्रकरणं, कर्त्तारश्चास्य जगद्विश्रुतयशसः सिद्धहैमव्याकरणाद्यनूनानवद्य-वेदचतुष्टयविधानवेधसः कलिकालसर्वज्ञपदाङ्कितश्रीहेमचन्द्राचार्यस्य गुरुभ्रातुःश्रीप्रद्युम्नाचार्यस्यान्तिषद्ः श्रीचन्द्रसेनसूरयः,विषयश्चास्य नाम्नैव प्रकरणस्य प्रादुर्भवति पटुचक्षुष्काणां, परं श्रीजैनशासनजीवातुरिदं त्रयमुत्पादादिरूपं भिन्नं अभिन्नं भिन्नाभिन्नं वा? वस्तुनोऽपि कथंविधं च अनङ्गीकारे चैतस्याः पदार्थस्वरूपस्यैव व्याहतिः के के दोषा हतपरैः परैरस्मिन्नुद्भाविताः? कथं च नित्यानित्यैकान्तवादिभिर्नैतदुररीकर्त्तुं पार्यते? कथं च तत्स्वीकृतपदार्थानामनंगीकारेऽस्य न यथार्थता? इत्याद्यनूनमैदंपर्यं प्रतिपादयन्तः श्रीमन्तः त्रयाणामेषामविनाभावादिकमुदीरयन्तः सामान्यविशेषोभयात्मकतां भेदाभेदात्मकतां निरूपितवंतः,असाधारणतया क्षणिकं अपोहवादं समवायं भेदाभेदैकान्तं निरस्य जैनशासनोपज्ञायकानां सर्वज्ञतां प्रसेधितवन्तः। सत्तासमयश्चैषां त्रयोदशशताब्दीरूप इति तु कलिकालसर्वज्ञसंबन्धितया स्पष्ट एव, परं ग्रन्थकर्त्तार इमे प्रभुषु अत्यादृताः, अत एव 'अपर्ययं वस्तु समस्यमान'मित्येतत् काव्यमन्ययोगद्वात्रिंशिकासत्कमुदाहृतवन्तः, प्रान्त्यभागे च तत्रभवद्भ्रातृतामालम्ब्यैव स्वगुरूनाख्यातवन्तः। अन्याश्चानेकाः कृतयः शुभभवतां भवतां भविष्यन्ति, अत्रैव तावत् द्विचत्वारिंशत्तमे पृष्ठे अत एवोक्तमन्यत्रास्माभिरेवेत्युक्त्वा 'जिन! त्वय्यादित्ये निहितनिखिलध्वान्त उदिते०' इत्याद्युदाहृतं, काव्यं चेदमीक्षित्वा ग्रंथं चैनं पर्यालोचयन्तः चतुरा अवश्यमनुमास्यन्ति श्रीमतामनेकग्रन्थकारितामिति स्खलनाशुद्धियाचनापुरस्सरं निवेदयन्ति

आनन्दसागराः, वीरसंवत् २४६३ आश्विनकृष्णा एकादशी जामनगरात् १९९३

# श्रीउत्पादादिसिद्धेर्विषयानुक्रमः



॥३॥

[ इति विषयानुक्रमः ]

साक्षिणः

साक्षिणः

११९ नान्वयो भेदरूपत्वात्
१२२ घटमौलिसुवर्णेषु
,, वाग्रूपता चेत् क्रामेत
,, न सोऽस्ति प्रत्ययो लोके
१२५ बोधात्मता चेच्छब्दस्य
,, न च स्यात्प्रत्ययो लोके
१३१ व्यक्तौ चैकत्र सा व्यक्ता
१३२ द्रव्यपर्यायसामान्य०
१३३ दोहिवि नएहिं नीयं
,, सामान्यं नान्यदिष्टं चेत्
,, अथातुल्येऽपि भिन्नत्वे
१३४ विषयेण हि बुद्धानां
,, ता हि तेन विनोत्पन्ना
१३८ मधुरं न हि सर्वं स्यात्

१३९ न हि प्रविष्टमात्राणां
१४७ द्रव्यं पर्यायवियुतं
,, नान्योऽन्यव्याप्तिरेकान्ते०
,, अन्योऽन्यमिति यद्भेदं
१५० अपर्ययं वस्तु समस्यमानं
१५१ तापाच्छेदान्निकषात्
१५२ नाम च धातुजमाह
१५३ नीलादिचित्रविज्ञाने
१५८ न नरः सिंहरूपत्वात्
,, अर्थान्तराभिसंबन्धात्
१६२ द्रव्यपर्यायरूपत्वात्
(२४ श्लोकाः)
,, एकं जातमजातं च
१६५ अयमेवेति यो ह्येषः

१६६ नास्तीत्यपि च संवित्तिः
,, भेदाभेदोक्तदोषाश्च
,, गुडश्चेत् कफहेतुः स्यात्
,, प्रत्येकं यन्निदानं यत्
,, शक्त्यपेक्षं च यत्कार्यं
१६६ कटुकाकटुकः पाके
,, कषायमधुरं ग्राहि
,, किंचिदम्लं तु संग्राहि
,, मूत्रोन्मिश्रा यन्नितात्मा
,, विरोधसंनिधिर्दोषः
,, भागा एव हि भासन्ते
,, अन्योऽन्यप्रत्ययापेक्षाः
,, यन्निवेशेन ये भावाः
,, अस्पष्टरूपा गम्यन्ते

१६७ एकान्तिकावनन्यत्वात्
(७) साक्षिणः
,, नाभेदो भेदरहितः (६)
१८१ यत्रैव जनयेदेनां
१८७ धर्माधर्माकाशपुद्गलाः
२०५ अक्षाश्रितत्वमध्यक्षे
,, यदर्थवेदनं ज्ञान०
२०९ आशंकेत हि यो मोहाद्
,, यत्राप्यतिशयो दृष्टः (९)
,, सर्वज्ञो दृश्यते तावद्
२१० न च मन्त्रार्थवादानां (९)
,, प्रमाणपंचकं यत्र (१९)
२११ ज्ञानवान् मृग्यते कश्चित् (८)

॥६॥

आज्ञा यस्य परैरलङ्घ्यमहसः साधुस्थितेः कारणं, यन्मुद्रामधिगम्य नीतिनिपुणाः सद्यो लभंते श्रियः।
तं सिंहासनचक्रचामरलसच्छत्रध्वजोद्भासितं, सेवे श्रीजिनराजमीप्सितपदप्राप्त्यै निबद्धादरः ॥ १ ॥ ( टीकामंगलं )

## श्रीसिद्धहैमविधानवेधसः श्रीहेमचंद्राचार्यस्य गुरुभ्रातृव्यश्रीचन्द्रसेनसूरिसूत्रितं

## श्रीउत्पादादिसिद्धिप्रकरणं

यस्योत्पादव्ययध्रौव्ययुक्तवस्तूपदेशतः। सिद्धमाप्तस्वभावत्वं, तस्मै सर्वविदे नमः ॥१॥ (पृष्ठे २)
यदुत्पादव्ययध्रौव्ययोगितां न बिभर्त्ति वै। तादृशं शशशृंगादिरूपमेव परं यदि ॥२॥६॥
न यत् सत्ताऽभिसंबन्धाद्, न शक्तेर्नोपलब्धितः। विनोत्पादव्ययध्रौव्यैर्वस्तुत्वमुपपद्यते ॥३॥३०॥
उत्पादो वस्तुनो भावो, नाशस्तस्य व्ययो मतः। ध्रौव्यमन्वितरूपत्वमेकं नान्योऽन्यवर्जितम् ॥४॥३०॥
अविनाभावि यद्येन, न तत्तेन विरुध्यते। वृक्षत्वेनेव चूतत्वमिहाप्येवं व्यवस्थितिः ॥५॥३४॥
नासतः सर्वथा भावो, न नाशः सर्वथा सतः। नान्वयोऽपि विनैताभ्यां, प्रमाणे प्रतिभासते ॥६॥३७॥
उत्पादो यदि दृष्टत्वादिष्टः प्रामाणिकैः परैः। तद्रूपपरिणामोऽयं, तदेष्टव्यस्ततो न किम्? ॥७॥३८॥
यदसत् तन्न केनापि, क्रियते वियदब्जवत्। उपादानं न चेह स्यात्, सर्वं सर्वत्र वा भवेत् ॥८॥४५॥
कार्यकारणभावादिव्यवस्थाऽप्यत्र दुर्घटा। शक्तीनां नियमोऽप्येष, स्यात् सत्त्वेन विना कथम्? ॥९॥४९॥

उत्पादादि-
सिद्धिः

भिन्नो भावादभिन्नो वा, नाशः किं वा स एव न ? । भेदे वस्तूपलभ्येत, तादवस्थ्यप्रसङ्गतः ॥१०॥५१॥
अभेदे भाव एवायमभावः केवलोऽथवा । ततः सहावभासेत, भावो यद्वा कदाऽपि न ॥११॥६०॥
अभावेऽपि च नाशस्य, वक्तुमेतदसाम्प्रतम् । न तस्य किञ्चिद्भवति, न भवत्येव केवलम् ॥१२॥६०॥
विद्युदाद्यपि नात्यन्तं, नाशित्वेन प्रकाशते । अन्धकाराद्युपादानभावेनास्यैव सम्भवात् ॥१३॥८२॥
न चैवं तस्य रूपस्य, नाशे पूर्वसमुद्भवः । तदन्यस्यापि तन्नाशस्वभावस्य प्रसूतितः ॥१४॥८६॥
कर्मतत्फलसम्बधबन्धमोक्षाद्यसङ्गतिः । स्फुटैव सर्वथोच्छेदे, सन्तानः स्वः परो न वा ? । ॥१५॥८७॥
इन्द्रियाधीनजन्मेयमभेदग्राहिणी मतिः । प्रामाण्यं बाधवैकल्यादश्नुते भेदबुद्धिवत् ॥१६॥१०४॥
यदभेदस्य भेदेन, भवनं सोऽयमन्वयः । एकान्तेन न नित्यत्वं, प्रमाणानुपपत्तितः ॥१७॥११९॥
भावा ज्ञेयस्वभावाश्चेन्नित्यं तज्ज्ञानसम्भवः । त(अ)थाज्ञेयस्वभावास्ते, कदा तज्ज्ञानसम्भवः? ॥१८॥१३९॥
सहकारिव्यपेक्षाऽपि, नित्यैकान्ते न युज्यते । नाधेयं नापनेयं वा, रूपं तैस्तस्य किञ्चन ॥१९॥१३९॥
वस्तुतोऽचिन्त्यशक्तित्वादे(त्वमे)व चेदिष्यते परैः। द्रव्यरूपस्य पर्यायैरैक्यं दृष्टं न किं मतम् ?॥२०॥१४१॥
न हि द्रव्यातिरेकेण, पर्यायाः सन्ति केचन । द्रव्यमेव ततः सत्यं, भ्रान्तिरन्या तु चित्रवत् ॥२१॥१४४॥
पर्यायव्यतिरेकेण, द्रव्यं नास्तीह किञ्चन । भेद एव ततः सत्यो, भ्रान्तिस्तद्ध्रौव्यकल्पना ॥२२॥१४४॥
नाभेदमेव पश्यामो, भेदं नापि च केवलम् । जात्यन्तरं तु पश्यामस्तेनानेकान्तसाधनम् ॥२३॥१४५॥

सुखदुःखादिसम्बन्धो, युज्यते कथमन्यथा ?। व्यर्थः श्रमस्ततोऽन्येषां, दुस्तर्काकुलचेतसाम् ॥२४॥१६७॥
ननूत्पादादयो धर्मा, भिन्नाः स्युर्धर्मिणो यदा। नीरूपत्वं तदा तस्य, वाच्यं वा लक्षणान्तरम् ॥२५॥१७४॥
अभेदे युक्तता न स्यात्, अस्याभेदव्यपेक्षणात्। सम्बन्धशब्दो नायं यद्, न द्वयेन विना स तु ॥२६॥१७४॥
किं चोत्पादादियोगित्वमुत्पादादेर्यदेष्यते। अनवस्था तदा मृग्यं, तेनान्यद्वस्तुलक्षणम् ॥२७॥१७४॥
सत्त्वं हि वस्तुनो रूपं, सदिति प्रत्ययो यतः। सत्त्वरूपवियोगेन, नोत्पादादेरपि स्थितिः ॥२८॥१७४॥
यदुत्पादव्ययध्रौव्ययुक्तं तेभ्यः परं न तत्। किन्त्वभेदांशमाश्रित्य, तेषामेव तथा स्थितिः ॥२९॥१७४॥
भिन्नशब्दप्रवृत्तिश्च, भेदांशस्यापि संभवात्। निरपेक्षौ न चान्योऽन्यं, भेदाभेदाविमौ क्वचित् ॥३०॥१८४॥
वस्तुनस्तन्न नैरूप्यं, न चान्यदपि दूषणम्। सदिति प्रत्ययोऽप्येष, तत एवोपजायते ॥३१॥१८५॥
बोधरूपादयोऽप्येतत्रैरूप्याभेदवर्तिनः। कथञ्चित्तेन जैनेन्द्रं, सुदृशं वस्तुलक्षणम् ॥३२॥१८७॥

卐卐卐 श्रीउत्पादादिसिद्धिप्रकरणं समाप्तम्। 卐卐卐




॥ श्री ॥

सिद्धहैमश्रीहेमसूरिसहोदरश्रीप्रद्युम्नसूरिशिष्यचन्द्रसेनसूरिसूत्रिता स्वोपज्ञा

# उत्पादादिसिद्धिः

## ( उत्पादादिद्वात्रिंशिकावृत्तिः )

**आज्ञा यस्य परैरलङ्घ्यमहसः साधुस्थितेः कारणं, यन्मुद्रामधिगम्य नीतिनिपुणाः सद्यो लभंते श्रियः।**
**तं सिंहासनचक्रचामरलसच्छत्रध्वजोद्भासितं, सेवे श्रीजिनराजमीप्सितपदप्राप्त्यै निबद्धादरः ॥ १ ॥**

इह हि परोपकारकरणं नाम महीयसे पुण्यायेत्यविप्रतिपत्तिविषयोऽयमास्तिकानां, स च परोपकारः प्रकारान्तरसम्भवेऽपि तत्त्वोपदेशात्मकः प्रशस्यतरः, यतः 'सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धि'रिति सुप्रसिद्धं, ज्ञानस्य च सम्यक्त्वमिदमेव यद् यथाऽवस्थितवस्तुस्वरूपावभासः, स चानादिकुवासनावासितान्तःकरणानां तथाविधादृष्टप्रतिहतसामर्थ्यविशेषाणामङ्गिनां न प्रभवति, तथाऽपि केषाञ्चित्तथाभव्यत्वपरिपाकवशादवाप्ततद्विधयोग्यताविशिष्टस्वभावानां कदाचित्संभवत्यपीति तदुपचिकीर्षयोत्पादव्ययध्रौव्यलक्षणं प्रमाणोपपन्नं वस्तुस्वरूपमुपदिदर्शयिषुरिदमुत्पादादिसिद्धिनामकं प्रकरणमारब्धुकामोऽभीष्टदेवतानमस्कारमाचार्य आह–

यस्योत्पादव्ययध्रौव्ययुक्तवस्तूपदेशतः। सिद्धमाप्तस्वभावत्वं, तस्मै सर्वविदे नमः ॥ १ ॥

प्रकृतिरियं शिष्टानां यदिष्टे वस्तुन्यभीष्टदेवतानमस्कारपुरस्सरं प्रवृत्तिः, निर्विघ्नाभिप्रेतसिद्धिश्च तत्फलं, यतो धर्म्मनिबन्धनेयं, धर्मस्य चाद्यं कारणं भगवन्नमस्कार इति भवत्येवातः सा, यत्रापि दृष्टैवाभिप्रेतसिद्धिः केवलं न नमस्कारः तत्र भगवदुक्त एवापरः कोऽपि प्रकारस्तन्निबन्धनमवसीयते, ननु किं भगवन्नमस्कारादेव धर्मः? किं वा सुगतादिनमस्कारादपि?, यद्याद्यः पक्षस्तदा "विधूतकल्पनाजालगभीरोदारमूर्त्तये। नमः समन्तभद्राय, समन्तस्फुरणत्विषे ॥१॥" इत्यादिस्वस्वदेवतानमस्कारपुरस्सरं प्रवर्त्तमानानां कथं कुतीर्थिकानामभिप्रेतसिद्धिः ?। अथ द्वितीयः पक्षः तर्हि सुगतादिनमस्कारोऽपि किं न क्रियते?, अथ यस्य येष्टा देवता स तां नमस्करोति, तदप्रमाणकं, पक्षपातमात्रं न प्रेक्षापूर्वकारितां लक्षयति, ताच्छील्यतोऽप्यु(प्यनु)पपन्नवस्तुविषया प्रवृत्तिः शिष्टत्वं (न) न प्रतिहन्ति, न ह्यनुपपन्नविषये प्रकृतितोऽपि प्रवर्त्तमानस्तस्करादिरशिष्टो न भवति, अत्रोच्यते, भगवन्नमस्कारादेव धर्म्मः, या तु स्वस्वदेवतानमस्कारपुरस्सरं प्रवर्त्तमानानां कुतीर्थिकानामभिप्रेतसिद्धिः सा धर्मनिबन्धना न भवति, तर्हि किंनिबन्धना ?, विघ्नासम्भवनिबन्धनेति ब्रूमः, तदसम्भवश्च तत्प्रबन्धानां मिथ्याज्ञानहेतुत्वेनाश्रेयोभूतत्वात्, श्रेयोभूतं हि सम्भवद्विघ्नं भवति, ततस्तत्र विघ्नोपघाताय यत्नः क्रियमाणस्तत्फलः संभवति, यत्तु न स्वयं श्रेयोभूतं तत्र विघ्नः स्वत एव न संभवति, तदुक्तम्— श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥१॥" तस्मादश्रेयोभूततैव कुतीर्थिकशास्त्राणां, परिसमाप्तिसम्भवेऽपि निजनिजदेवतानमस्कारप्रसूतधर्मादियमिष्टसिद्धिरमीषामिति व्यामोह एवैष मन्दमतीनां, किञ्च-यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः, ततः सुगतादिनमस्कारेऽपि यद्येष संपद्येत तदा दुर्गदुर्गतिदुःखपरम्पराहेतूनां तत्प्रबन्धानामा-

दित एवोत्थानं न स्यात्, न हि समुद्भूतोऽयं धर्मो भगवान् नरकादिकारणे कदाचित्पुरुषं प्रवर्त्तयतीति युक्तं, यदिवा व्यवहारमात्रतः स्वर्गफले कीर्त्तिफलपरिमाणे चानर्थबहुलमज्ञानकष्टादिसम्भवं किमपि पापानुबन्धि पुण्यं तत्प्रबन्धपरिसमाप्तिहेतुः सम्भावनीयं, न पुनरिष्टदेवतानमस्कारसमुद्भूतो धर्म्मः, प्रमाणानुत्पत्तेरेवेति, यथा च सर्वमपि जैनशास्त्रं यथाऽवस्थितवस्तुस्वरूपावगमहेतुत्वाच्छ्रेयोभूतं कुतीर्थिकशास्त्राणि च मिथ्यावगमहेतुत्वादश्रेयोभूतानि तथा द्वयमपि अवगाह्यानुपप्लुतधियः स्वयमेव विवेक्तुमलमिति किमत्र ब्रूमः ?, इदमेव तावत्परिभावयन्तु सावधानेन चेतसेति, भगवन्नमस्कारे कृतेऽपि नेष्टसिद्धिरिति त्वसम्भाव्यमेव, यदि तथा प्रणिधानं स्यात्, अविकलकारणं हि कार्यमुत्पादयत्येवेति न क्वचिद्व्यभिचार इति अलमतिचर्चया ॥ अक्षरार्थो व्याख्यायते–यस्य भगवतः उत्पादव्ययध्रौव्ययुक्तवस्तूपदेशादाप्तस्वभावत्वं सिद्धं तस्मै सर्वविदे नमोऽस्त्विति, तदनेनेदमुक्तं भवति–न तथाविधग्रामेयकाणामिव निजनिजकुलक्रमा[या]गतैकव(के)र(द्वि)व(कर)न्यायेनायमुपास्यः, किन्त्वाप्तस्वभावत्वपरीक्षणात्, उक्तञ्च सिद्धहेमप्रणेतृभिः श्रीहेमचन्द्रसूरिभिः स्तुतिषु–"न श्रद्धयैव त्वयि पक्षपातो, न द्वेषमात्रादरुचिः परेषु । यथावदाप्तत्वपरीक्षया तु, त्वामेव वीर ! प्रभुमाश्रिताः स्म ॥१॥" आप्तत्वं च रागादिविगमाविर्भूतमात्मनो रूपम्, 'आप्तो रागादिसंक्षया'दिति वचनात्, तच्च यथाऽवस्थितवस्तुतत्त्वोपदेशादस्य भगवतोऽस्माभिरवगम्यते, तथाहि–अपौरुषेयस्तावदुपदेश एव न संभवति, यतोऽयं वचनाद्, वचनं च ताल्वादिव्यापारे सत्यवश्यमुपलभ्यमानं तदभावे चानुपलभ्यमानमजन्मकमन्यजन्मकं वा कल्पयितुमशक्यमतिप्रसङ्गात्, ताल्वादिव्यापारेण व्यज्यत एव शब्दो न जन्यत इति न संसहामहे, यतः ताल्वादिव्यापारेऽपि यदि कदाचिच्छब्दो नोपलभ्येत तदा व्यङ्ग्यधर्मानुविधानात्किञ्चिद्व्यञ्जकमपि कल्प्येत, व्यङ्ग्यस्य हि घटादेरेष धर्मो यदुत प्रदीपादौ व्यञ्जके सत्यपि न सर्वदोपलम्भः,

तात्वादिव्यापारे तु नियमेनोपलभ्यमानस्य शब्दस्य व्यङ्ग्यत्वकल्पनायां कुम्भादेरपि कुलालादिव्यङ्ग्यताप्रसङ्गः, कुड्यादिदेशनाव्यावर्णनं तु सुगतसुतानां सर्वत्र कार्यकारणभावव्यवस्थामुन्मूलयति, अन्यकारणजन्मनोऽन्यतोऽप्युत्पत्तिसम्भवे सर्वत्रानाश्वासप्रसङ्गात्, धर्मकीर्त्तिनाऽपि चाभ्यधायि–"विलक्षणाया अपि सामग्र्या अविलक्षणकार्योत्पत्तौ न कारणभेदाभेदाभ्यां कार्यभेदाभेदावित्यहेतुकौ विश्वस्य भेदाभेदौ स्यातां, तथाहि न भेदाद्भेद इति भेदादपि नाभेदः तद्व्यतिरिक्तश्च न कश्चिद्भावस्वभाव इत्यहेतुकत्वाद्भावानां नित्यं सत्त्वमसत्त्वं वा स्यात्, अपेक्षया हि भावाः कदाचित्सत्त्वा भवन्ति, व्यवस्थावांश्च साध्येषु साधननियोगो न स्यात्, कारणशक्तिप्रतिनियोगे हि किञ्चिदेव कस्यचित्साधनायोपादीयेत, नापरं, तस्यैव तत्र शक्तेरन्यस्य चाशक्तेः, तयोस्तज्जननेतरस्वभावत्वेन भेदात्, तज्जननस्वभावविलक्षणादपि तस्योत्पत्तौ न तज्जननशक्तिनियम" इति, यत्किञ्चित्स्यात्, तज्जननशक्तिसाम्ये तु तदेवेति न कार्यदृष्टं कारणं व्यभिचरतीति, ततस्तात्वादिव्यापारे यादृशं वचनात्मकं कार्यमुपलब्धं तादृशं तदभावे कथं भवितुमुत्सहेत ?, न चैतत् तादृशं, तात्वादिव्यापारजन्यवचनादन्यादृशत्वोपगमादिति चेत्, स्यादन्यादृशं, यदि (कण्ठ्यादिवर्णात्मकं न तत्) कण्ठ्यतालव्यादिवर्णात्मके तु तत्र तादृशा विशेषास्तात्वादिव्यापारादेव, तात्वादिव्यापारश्च पुरुषाधीनवृत्तिरेवेति कथमपौरुषेयस्तत्त्वोपदेशः ?, नाप्यनाप्तपुरुषप्रभवः, अनाप्तो हि सम्यगुपदेशप्रवृत्तिनियमकारणाभावाद्यत्किञ्चनवाद्येव स्यात्, तस्मात्पारिशेष्यादाप्तानन्तरीयक एवायं तत्त्वोपदेशः सर्वप्रमाणप्रसिद्धतया रमणीयरूप इति तदुपदेष्टुः सिद्धमाप्तस्वभावत्वम्, इह च प्रपञ्चं सर्वज्ञसिद्धावभिधास्यामः, उपदिशति च भगवान् समुत्पन्नपरमज्ञानः प्रथममेव गणधराणामुत्पादादिपदत्रयीमित्यागमे सुप्रसिद्धम्, एतद्विशेषणद्वारेण च प्रकरणार्थोऽप्युपक्षिप्तः, तथाहि–अनन्तज्ञानाद्यनेकविशेषणसद्भावेऽपि यदयमिदं विशेषणं भगवतः

प्रशास्ति तत्प्रकरणार्थोऽयमेवेति ख्यापनार्थमेव संभाव्यते इति, अभिधेयादिमत्त्वमप्यस्य प्रकरणस्यात्र प्रकाशितम्, उत्पादादीनामेव वस्तुलक्षणभूतानां प्रकरणेनाभिधास्यमानत्वात्, तन्न निरभिधेयमिदं, नापि निष्प्रयोजनं, यतः श्रोतॄणामनन्तरप्रयोजनमेतदभिधेयप्रतीतिरेव, प्रतिपादयितुश्च तत्प्रत्यायनं, परंपरं तु द्वयोरपि निःश्रेयसाधिगमः, यत उक्तम्–"सम्यग्न्यायपरिज्ञानाद्धेयोपादेयवेदिनः। उपादेयमुपादाय, गच्छन्ति परमां गतिम् ॥१॥" तथा–"साधुन्यायोपदेशेन, यः सत्त्वानामनुग्रहम्। करोति न्यायबाह्यानां, स प्राप्नोत्यचिराच्छिवम् ॥२॥" एतच्च सामान्येन पातनायामेवाविष्कृतमस्माभिः, सूत्रे तु सुखावसेयत्वान्न प्रदर्शितं, सम्बन्धोऽप्युपायोपेयलक्षणः सुप्रसिद्धः, तथाहि–प्रकरणमुपायः, तदभिधेयाधिगम उपेयं, परम्परया तु प्रकरणार्थपरिज्ञानमुपायः, परमपदावाप्तिश्चोपेयं, ततः परं तु प्रयोजननिष्ठैवेति नोपायान्तरमुपेयान्तरं वा किञ्चित्, यश्चात्र विशेषाक्षेपपरिहारः स शास्त्रकारैरनेकधा विधीयत इति नास्माकमत्यादरः, तथा न केवलमितः प्रकरणादुत्पादादिसमध्यासितवस्तुस्वरूपावगम एव भवति, किन्त्वाप्तेऽपि भगवति सकलभुवनाभ्युदयसम्पादनदक्षे प्रतीतिरुपजायते, तदुक्ततत्त्वस्य प्रमाणसंवादितया तथा प्रतीतिहेतुत्वात्, एतदुत्तरत्र प्रकटयिष्यामः, उत्पादव्ययध्रौव्याणि च न प्रत्येकं वस्तुनो लक्षणं, किन्तु समुदायेन, लक्षणं च पररूपव्यावर्त्तनक्षमोऽसाधारणो धर्मः, लक्ष्यते तादात्म्याल्लक्ष्यमनेनेति लक्षणं, ननु यथा प्रमाणादिप्रतिपक्षः प्रमाणाभासादिरुपलभ्यते न तथाऽवस्तु व्यावर्त्येत ?, सत्यमेतत्, किन्तु यदेव केनचित् क्वचित्कदाचित् केनापि प्रमाणेन नोपलब्धं केवलमभिधेयसत्तामात्रसमाविष्टमभिधेयं, तदवधिविवक्षयाऽपि व्यवहारिणः परं व्यवहारं प्रवर्त्तयन्ति, अन्यथा 'शक्तिर्हि भावलक्षण'मित्यादि किमपि स्वाभिमतं वस्तुलक्षणं परेऽपि प्रतिपादयितुं कथमुत्सहेरन् ?, तन्नायं तत्त्वव्यवस्थायामुपयोगी पर्यनुयोगः ॥ केवलं यद् वस्त्विति व्यवहारपथमवतरति तत् केन

लक्षणेन तथा स्यादिति चिन्तायां जिनप्रणीतमेतद्वस्तुलक्षणमुपदर्श्यते, अन्यथा तदयोगात्, तदाह—

**यदुत्पादव्ययध्रौव्ययोगितां न बिभर्त्ति वै। तादृशं शशशृङ्गादिरूपमेव परं यदि ॥२॥**

यन्नोत्पद्यते न व्येति ध्रौव्ययोगितां च न बिभर्त्ति तादृशं यदि परं शशशृङ्गादिरूपमेव स्यात्, न किञ्चिदित्यर्थः, शशशृङ्गं खरविषाणमित्यादयो हि शब्दा अवस्तुमात्रनिवेशिनश्चकासतीति, यदा पुनः शशविषाणं नास्तीत्यादिव्यवहारः प्रवर्त्त्यते तदा विषाणमन्यत्रोपलब्धं शशस्य प्रतिषिध्यते, तच्छिरोऽवयवानां तद्रूपतापरिणामविरहश्च तदा तथा व्यवहारनिबन्धनं, भावस्यैवान्यापेक्षया अभावत्वव्यवस्थापनात्, तदेवमुभयथाऽपि शब्दानां व्यवहारोपलम्भाद् अवस्तुमात्रनिष्ठोऽत्र शशशृङ्गादिरूपमेवेत्यादि व्यपदेश इति, वैशब्दस्त्ववधारणे, ननु किमिदं स्वस्तावेव काकपदमुद्बोढं?, प्रस्थितस्य वरविसरणं, प्रथममुपन्यासार्हस्य साध्यस्यैवानुपन्यासः?, सत्यमेतत्, किन्त्वेवं मन्यते–सिद्धान्ते सुप्रसिद्धमिदं वस्तुनो लक्षणं, नाधुना विधेयं, केवलं ये कुतीर्थिकाः स्वदर्शनानुरक्तान्तःकरणा वस्तुनो लक्षणान्तरमाचक्षते ये जैनलक्षणं च प्रति विप्रतिपद्यन्ते तद्व्यामोहापोहायैष नः प्रयासः, स च व्यामोहापोह इत्थमपि शक्यः कर्त्तुं, तथाहि–यदुत्पादादियोगिताविकलं तादृशं यदि परं शशशृङ्गादिरूपमेवेत्युक्ते नापरं वस्तुलक्षणं, अपि तूत्पादादियोग एवेति सामर्थ्यादेव परे ग्राहयितुं शक्यन्ते, स्वमतानुसारिणः प्रति कस्तर्ह्यस्योपयोग इति चेत् परव्यामोहापोहशक्तिप्रादुर्भावः, स्वमतानुसारिणो ह्यागमिकवचनादधिगच्छन्तोऽपीदं वस्तुलक्षणमेतच्छास्त्रावगाहपक्षपातेन परेषां न्यायवचनमुदीरयन्तः सन्तः कुहेवाकसमुत्थव्यामोहापोहाय समर्थाः संपद्यन्त इति, तस्मात् साभिप्रायमेवं सूत्रनिर्देश इति।



**सत्तासंबंधात् वस्तुनः सत्त्वस्य निरासः**–ननु तथाऽपि सत्तासम्बन्धाद् वस्तु सत्, ततस्तदेव वस्तुलक्षणं किं न स्यात्?,

असदेतत्, यतः सत्ताऽभिसम्बन्धात् पूर्वं वस्तु सत् अथासत् ?, यदि सत् किं सत्ताऽभिसंबन्धेन ?, प्रकारान्तरेणैवास्य सत्त्वात्, अथासत् तर्हि जितं बन्ध्याभिः स्वतन्त्रप्रभावादेव वस्तुभूतस्तनन्धयमाप्नुवतीभिः, ननु नित्येषु तावत्पूर्वापरभावानभ्युपगमः, अनित्येषु (हि सः) प्रागसत एव सत्ताकारणसामर्थ्यात्, न च वन्ध्यास्तनन्धयादिषु तत्प्रसङ्गः, तदुत्पत्तौ कस्यचित्सामर्थ्याभावात्, एतदप्यसत्, तदुत्पत्तिकालेऽपि हि यदि भावस्य किञ्चित्स्वरूपसत्त्वमस्ति तदा व्यर्थस्तदपरसत्तायोगः, सदिति प्रत्ययनिमित्तं हि स परिकल्प्यते, यदि च भावस्य स्वरूपमपि सद्रूपं तदा सदिति प्रत्ययं किं न जनयेत् ?, न हि भावस्य स्वरूपमेव स्वावभासिनि प्रमाणे नावभासत इति युक्तम्, अथोत्पत्तिकालेऽपि भावस्य न किञ्चित्स्वरूपसत्त्वं, कस्तर्हि विशेषो ? येन घटादिभावस्तत्सम्बन्धात्सद् भवति, न वन्ध्यास्तनन्धयादिरिति ?, अथ पूर्वं वस्तु न सत् नाप्यसत्, सदसत्तर्हि नियमतः, एतदपि न तत्त्वत इति चेत् किं तदन्यतोऽतिरिक्तं ?, तथाविधबुद्धिग्राह्यमीदृशमेव किमपि तदिति चेत् ननु न्यायमार्गमतिक्रम्येदानीं किमपि मायावादमभ्युपपेतः, न सत् नासत् नापि सदसत् तथाऽपि बुद्धिरिति मायावाद एवैषः, नाभ्युपेतश्चायं त्वया न्यायमुद्रावलम्बिना, स्वकीयसत्त्वं च प्रति वक्ष्यामः, तस्माद्वन्ध्यासुतादेरपि वस्तुत्वप्रसङ्गादतिव्याप्तिः, अव्याप्तिश्च सत्तादीनामन्तरेणापि सत्ताऽभिसम्बन्धवस्तुत्वाभ्युपगमात्, किञ्च–केयं सत्ता नाम ?, सामान्यमिति चेत्, तथा च सामान्यं द्विविधं–परमपरं च, तत्र परं सत्ता महाविषयत्वात्, सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेवेत्यादिना सिद्धान्ते समर्थितमेव, एतदसत्, विचाराक्षमत्वात्, तथाहि–सामान्यं व्यक्तिभ्यो भिन्नमभिन्नं भिन्नाभिन्नमेव वा ?, न तावद्भिन्नाभिन्नं, अस्याद्वादिनां तद्विरोधात्, तथा (न केनापि भिन्नं न) केनाप्यभिन्नं, ननु निरंशस्य सामान्यस्य कथमेतत् ?, किञ्च–यमात्मानं पुरोधायेदं सामान्यमदो विशेष इति व्यवस्थाप्यते तेनात्मना यदि भेदस्तदा भेद एव,

अथाभेदस्तदाऽभेद एव, अथ तत्रापि भेदाभेदौ तर्ह्यनवस्था,न चेदृशं वस्तु शतशाखमध्यक्षमीक्षामहे, तन्न तत्ताभ्यो भिन्नाभिन्नं,नाप्यभिन्नं, तासां नानात्वे तस्यापि नानात्वोपपत्तेः, तदेकत्वे वा तासामेकताप्रसङ्गात्, नापि भिन्नम्, असामान्यरूपतापत्तेर्दण्डादिवत्, अनेकसम्बन्धात्सामान्यमिति चेत् सङ्ख्याकार्यद्रव्यादेरपि सामान्यरूपताप्रसङ्गः, अनुस्यूताकारतया यत्प्रतीयते तत्सामान्यं, नान्यदिति चेत् ननु किमिदमात्मरूपानुस्यूतमुतान्यरूपानुस्यूतं ?, तावदनुगमाभावान्न प्रथमः पक्षः, नापि द्वितीयः यतोऽन्यरूपानुस्यूतताऽपि किमन्येन सह तादात्म्यमुतान्यस्य समवायः ?, तद्यदि तादात्म्यं पूर्ववद्दोषप्रसङ्गः, अथ तत्र समवायः तदयुक्तं, समवायाभावात्, तदभावं प्रदर्शयिष्यामः, भवतु वा कश्चित्समवायः, परं स सर्वव्यापी गोत्वं गोपिण्डेषु यथा सम्बन्धयति तथा कर्कादिपिण्डेर(ष्व)पि सम्बन्धयेत्, अवान्तरसम्बन्धपरिकल्पनायामनवस्था, किञ्च–सामान्यं विशेषेषु वर्त्तमानं किमेकदेशेन वर्त्तेत किं वा सामस्त्येन ?, न तावदेकदेशेन,निर्देशत्वात्सामान्यस्य,नापि सामस्त्येन, एकस्मिन्नेव विशेषे परिसमाप्तिप्रसङ्गात्,किञ्च–केयं वृत्तिः आधेयता वा स्यात् व्यक्तिर्वा भवेत् ?, नाधेयता, निष्क्रियत्वात्सामान्यस्य, गुरुणो हि द्रव्यस्य पततः स्थितिकरणादाधारः स्यात्, नाप्येतद्भिन्नाभिन्नस्थितिकरणे स्थाप्यस्य युज्यते, तथाहि–यदि स्थितिर्भिन्ना स्थापकेन क्रियते तदा स्थित्यर्थान्तरभूतस्य स्थाप्यस्य किमागतं येन स्थिरः ?,तत्सम्बद्धस्थित्युत्पादादिति चेत्, न, समवायादिसम्बन्धप्रतिषेधात्, तथा अभिन्ना स्थितिः क्रियते तर्हि स्थाप्य एव क्रियते इत्यापन्नं, न चास्य किञ्चित्कर्त्तव्यं, स्वहेतुभ्य एव तस्योदयात्, भेदाभेदपक्षश्च नाभ्युपगतः, तन्नाधेयता वृत्तिः। नापि व्यक्तिः,यतो व्यक्तिरावरणापगमे ज्ञानजनकत्वमुच्यते, न च नित्यस्य तत्संभवति, तथाहि–यदेव ज्ञानजनकत्वावस्थायामस्य रूपं तदेव व्यक्त्यवस्थायामपीति प्रागिव न जनयेत्,यद्वा न व्यक्त्यवस्थायामप्येकरूपत्वाज्जनयेत्,अथ कारकान्तरमपेक्ष्य

जनयति, ननु कारकान्तरेण सामान्यस्य किं जनकत्वं क्रियते ? किं वा ज्ञाप्यते ?, तद्यदि क्रियते सुस्थितमस्य नित्यत्वं, अथ ज्ञाप्यते सिद्धं तर्हि जनकत्वं कारकान्तरमन्तरेणापि, ततः को दोषः ? इति चेत् कार्योत्पत्तिप्रसङ्गः, कारकत्वेऽपि कार्यं न जनयेत्, अहो ! राजाऽऽज्ञा गरीयसी देवानांप्रियस्य, इतोऽपि न विद्यते सामान्यं, तदुपलम्भकप्रमाणाभावात्, नन्वस्ति प्रमाणम्—अनयोः सादृश्यम्, एषां सारूप्यं, तेन सदृशोऽयं, असौ वाऽनेन सदृश इत्यादि ज्ञानमप्रतिपन्नसामान्यस्य नोत्पद्यते, अस्ति चेदं ज्ञानं बाधाविकलं जातिज्ञापकमिति, तदयुक्तं, यतस्तेन निमित्तभूतेनेदं विज्ञानमुत्पद्यते कर्मतापन्नेन वा ?, तत्र यदि निमित्तभूतेन तदा ता एव व्यक्तयः समानाकारपरिणतास्तन्निमित्तं सन्तु, अलं सामान्येन, अथ कर्मतापन्नेन, तन्नैवावभाति, न ह्यशेषसाधारणमेकं सामान्यमध्यक्षमीक्षामहे, तन्न किञ्चित्सामान्यं, ततस्तद्रूपायाः सत्ताया अभावात् समवायस्य च निराकरिष्यमाणत्वात्, असम्भविवस्तुप्रतिपादनादसम्भवदोषदुष्टमपीदं पराभिमतं वस्तुलक्षणमिति ।

**शक्तिभावत्वनिरासः**—अपरस्त्वाह—शक्तिस्तर्हि भावलक्षणमस्तु, तथा च धर्मकीर्त्तिः—'शक्तिर्हि भावलक्षणं, सर्वशक्तिविरहोऽभावलक्षण'मित्यवोचत्, शक्तिश्चार्थक्रियाकारित्वं, सर्व एव ह्यर्थक्रियार्थिनः पुरुषाः, ततस्तैस्तदेव वस्तुनो रूपं विचार्यते यदर्थक्रियायामुपयोगि, नापरं, प्रयोजनाभावात्, यदुक्तम्—"अर्थक्रियाऽसमर्थस्य, विचारैः किंञ्चि(स्वि)दर्थिनाम् । षण्ढस्य रूपवैरूप्ये, कामिन्याः किं प्रयोजनम् ?॥१॥" अर्थक्रियाकारित्वं च क्रमयौगपद्याभ्यां, तथाहि—क्रमेणाङ्कुरादि कार्यमुत्पद्यमानमुपलभ्यते, तदभावे यौगपद्येन, उभयनिषेधे तु केवलभूतलग्राहि प्रत्यक्षं प्रकारान्तराभावं निश्चाययति, तच्च क्रमयौगपद्यं नित्याद्व्यावर्त्तमानमर्थक्रियाकारित्वलक्षणं सत्त्वमादाय निवर्त्तमानं क्षणिकेष्वेवावतिष्ठते, तथाहि—तन्नित्यं क्रमेण कार्यं कुर्यात् यौगपद्येन वा ?, न तावत्क्रमेण, सकलसामर्थ्योपेतस्यै-

HB, p. 63, 12

क्षण एव समस्तकार्यकरणप्रसङ्गात्, सहकार्यपेक्षा च समर्थस्य न विद्यते, असामर्थ्ये वा पूर्वमसमर्थस्य सहकारिसन्निधाने सामर्थ्योत्पत्तावनित्यत्वप्रसङ्गः, सहकारिणा सामर्थ्यमुत्पाद्यमानं भावाद्भिन्नं वाऽभिन्नं वा स्यात्?, अभेदपक्षे नित्यत्वहानिः, भेदपक्षे तु तस्मादेव कार्योत्पत्तिः स्यात्, न भावात्, तथा च भावस्यावस्तुत्वं, तन्न क्रमेण कर्तृत्वं, नापि योगपद्येन, प्रथमक्षण एव कृतत्वाद्द्वितीयादिक्षणेषु न किञ्चित्कर्त्तव्यमस्तीति सर्वसामर्थ्यरहितस्य व्योमोत्पलस्येवासत्त्वं, पुनः करणे वा क्रमपक्ष एव स्यात्, तत्र चोक्तो दोषः, न च कृतकरणमस्ति, तन्न यौगपद्येनापि करोतीति क्षणिकेष्वेवाऽर्थक्रियाकारित्वं, प्रयोगश्च—यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा इमे इति, तथा च ध्रौव्यासम्भवादयुक्तं जैनलक्षणमिति मन्यते, तदेतदप्यसमीचीनं, यतो यथैकान्तनित्येष्वर्थक्रिया न संभवति तथैकान्तक्षणिकेष्वपि,तत इदमर्थक्रियाकारित्वं कूटस्थनित्यात् क्षणिकाच्च व्यावर्त्तमानमुत्पादव्ययध्रौव्यवत्येव वस्तुन्यवतिष्ठते, तथाहि—क्षणिकं वस्तु क्रमेण वा कार्यं कुर्यात् यौगपद्येन वा?, न तावत्क्रमेण,स हि देशक्रमेण वा स्यात् पङ्क्तिव्यवस्थितानां पिपीलिकादीनामिव,कालक्रमेण वा पत्रकाण्डनालादीनामिव?,तत्र नैकस्मिन् देशे कार्यं कृत्वा देशान्तरे क्षणिकं वस्तु तत्करोति, तत्रैव तस्य ध्वंसात्, नाप्येकस्मिन् क्षणे कृत्वा द्वितीये विदधाति, क्षणिकत्वहानिप्रसङ्गात्, किञ्च—क्रमः कार्यान्तरासाहित्यं कैवल्यमङ्कुरादेः, यौगपद्यं तु कार्यान्तरसाहित्यं, तथा च लोको वदति—क्रमेण यवाङ्कुरा उत्पन्नाः, तदभावे यौगपद्येनेति, तत्र यदि सामग्रीलक्षणं कारणमाश्रित्य क्रमयौगपद्यमिष्यते तन्न संभवति, एकमेव हि कार्यं सामग्री जनयति, नापरं, तन्न कार्यान्तरसाहित्यलक्षणं यौगपद्यं तत्रास्ति, नापि क्रमः, द्वितीयकार्यजनकत्वाभावेन, किञ्च—एकमपि कार्यं सामग्री कथं जनयति?, यतः समग्रा एव सामग्री, ते च नानास्वभावाः सन्तः कथमेकत्र कार्ये उपयुज्येरन्?, एककार्योपयोगे वा सर्वेषामेकरूपता, यतः सामर्थ्यं वस्तु-

लक्षणं, तदेककार्यप्रादुर्भावादेकरूपमेवात्र कल्पयितुं युक्तं, तदेकत्वे च समग्राः कथं भेदभाजो भवेयुरिति विभाव्यतां?, तयैककार्यप्रादुर्भावेऽपि समग्राणां स्वभावभेदो दृश्यते, दृष्टे च नानुपपन्नं नाम, तर्हि न शक्तिर्भावलक्षणं, किन्त्वन्यदपि किञ्चित्, यत् सद्भावादर्थक्रियैकत्वेऽपि समग्राणां भेद इत्यव्याप्तिर्न, नापि सहकारिकारणमाश्रित्यार्थक्रिया संभवति, यतः तानि स्वं स्वं कार्यमुपादानभावेन जनयन्ति, परस्परकार्यं च सहकारिभावेनेत्यभ्युपगम्यते, एतच्च निरंशैकवस्तुवादिनो न संभवति, एकस्योपादानसहकारित्वभेदेन सांशताप्रसङ्गात्, अन्यथावैकरूपतोपादेया तत्तत्कार्ययोः, अथ यद्यपि रूपं येनैव स्वभावेन रूपं जनयति तेनैव रसादिकमपि तथाऽपि रूपरसादीनामुपादानभेदकृतः स्वभावभेदो, न सहकारिकृतः, तदप्यसत्, एवं हि रूपादिरूपस्वभावभेदस्य रूपादिमात्रादेव सिद्धेः सहकारिभावेन क्व कस्योपयोगः स्यात्? येन सामग्र्या जनकत्वं भवेत्, एतच्च सौगतैरभ्युपगतमस्ति, यतः स्फुटमेव हेतुबिन्दुव्याख्यायां–नन्वेकस्याः सामग्र्या अनेककार्यभावे भवतु सामग्र्यन्तरजन्येभ्यो भेदः, परस्परतस्तु कथं?, तदतद्रूपहेतुजन्यत्वाद्धि भावास्तदतद्रूपिण इष्यन्ते, तदत्र यदा चक्षूरूपमनस्कारेभ्यो विज्ञानजन्म तदा चक्षूरूपयोरपि भावात् विज्ञानेनाभिन्नहेतुजत्वाद्विज्ञानात्मना विज्ञानस्य वा तद्रूपता कथं न प्रसज्येत?, आह च–'तदतद्रूपिणो भावा'इत्यादि पूर्वपक्षमुत्थाप्य प्रतिपादितमर्चटेन, नैष दोषः, तेषां स्वभावभेदेन निमित्तोपादानतया तदुपयोगात्, मनस्कारो हि विज्ञानस्योपादानकारणं,चक्षुषस्तु स्वविषयज्ञानजननयोग्यस्य सहकारि कारणं, एवमितरत्रापि वाच्यं, ततोऽन्यादृशी सामग्री चक्षुःक्षणस्य जनिका, अन्यादृशी च विज्ञानादेरिति तद्वैलक्षण्यादेव कार्यवैलक्षण्य'मिति एष तद्ग्रन्थः, न च काल्पनिकः कारणानां स्वभावभेदः, कार्याणामपि काल्पनिकभेदापत्तेः, ततोऽसौ यदन्यत्प्रतिपादयति तेन स्वमेव स्वभावात् विडम्बयति, तथाहि–तेनैकस्वभावस्यैकानेकक्रियाकारित्वं

समर्थयितुं जैनं प्रतिपादितं, यतस्तत्रैव तद्ग्रन्थो यथा 'पटादयो हि विभक्तपरिणामाः अनेकं कार्यं कुर्वन्तो दृष्टाः, न च धर्मिरूपेण भिद्यन्ते, एकस्यानेकक्रियाविरोधाभावाच्च, न ह्यत्र कारणमेव कार्यात्मतामुपैति, यत एकस्य कारणात्मनः एककार्यरूपतोपगमे तदन्यरूपाभावात् तदन्यकार्यात्मतोपगतिर्न स्यात्, किन्त्वपूर्वमेव कस्यचिद्भावे प्रागविद्यमानं भवेत्, तत्र विषयेन्द्रियमनस्कारा-णामितरेतरोपादानाहितरूपभेदानां सन्निधौ विशिष्टस्वेतरक्षणभावे प्रत्येकं तद्भावभावानुविधानादनेकक्रियोपगमो न विरुध्यते, यत एकक्रियायामपि तस्य तद्भावभावितैव निबन्धनं, सा चानेकक्रियायामपि समानेति, ननु तत्संनिधौ विज्ञानलक्षणकार्यसम्भवे तज्ज-ननस्वभावतैवैषामधिक्रियते, कार्यस्वभावापेक्षया कारणस्य जनकरूपताऽवस्थानात्, न विज्ञानजननस्वभावेभ्यः प्रत्येकं तदन्यका-र्यसम्भवः, सद्भावे वा तेषां तदन्यजननस्वभावता स्यात्, ततश्च विज्ञानमेव न कुर्युः, तदन्यजननस्वभावत्वात्, नैष दोषः,तेषाम-नेककार्यक्रियास्वभावत्वात्, तथाहि–ते तदवस्थायां प्रत्येकं विशिष्टसजातीयेतरक्षणजननात्मकास्तेषां तत्सत्तानान्तर्यदर्शनात्, तत्र विज्ञानजननस्वभावेनैवेति तस्या जननस्वभावता व्यवच्छिद्यते, तस्या एव प्रतियोगित्वात्,नान्यजननस्वभावता,न चासती तेषाम-नेकात्मता स्याद्, एकस्यैवात्मातिशयस्यानेककार्यहेतुत्वात्, न हि तदन्यापेक्षया विपर्ययव्यावृत्तिमुपादायानेकेन शब्देनाभिधी-यमानं वस्त्वनेकरूपतां प्रतिपद्यते, प्रतिविशिष्टस्यैकस्यैवात्मनस्तथाऽभिधानात्, यथा रूपं सनिदर्शनं सप्रतिघमिति, न ह्यत्र स्वभा-वभेदनिबन्धना ध्वनयः सामानाधिकरण्याभावप्रसङ्गात्, तन्निमित्तानामेकत्र भावाददोष इति चेत् न, तेषां तदेकोपकारानपेक्षिणां तदयोगात्, अपेक्षायां वा कथमेकमनेककार्य( कृत् न) स्यात् ?, अनेकेनैवात्मनोपयोगादिति चेत् न,सामानाधिकरण्याभावदोषस्य तदवस्थताप्रसङ्गात्, न च नीलादीनामात्मभेदमध्यक्षमीक्षामहे, नापि कार्यभेदादेवात्मभेदानुमानं, प्रतिबन्धाभावात् तद्ग्राहकप्रमा-

अनेककार्य-
करणता

णाभावात् प्रत्यक्षतो नैककार्याणामपि भावानामेकात्मतयैवोपलक्षणात्, यथा प्रदीपादीनां, नानुमानतः,तत्रापि विपर्यये बाधकप्रमा-णाभावात्, एकस्यानेकक्रियानभ्युपगमे च योज्यं,रूपरसगन्धस्पर्शविशेषाणां क्वचित्संभवनियमः प्रमाणपरिदृष्टः स न स्यात्, भिन्न-निमित्तानां सहभावनियमायोगात्, तन्निमित्तानामपि तदेककारणानायत्तजन्मनां नियतसाहित्यसम्भवात्, तदेकधर्मिस्वभावतयै-कत्र सहभावनियम इति चेत्, न, एकस्यानेकस्वभावताया एव चिन्त्यत्वात्, एकस्यानेकस्वभावतां चानुभवतः तद्वदनेकताया दुर्नि-वारत्वात्, अन्यथा धर्मधर्मिणां कथं नैकान्तिको भेदः?, तथाहि–यमात्मानं पुरोधायायं धर्मी पर्यायाश्चैत इति व्यवस्थाप्यते यदि तस्य भेदस्तदा भेद एवेत्यनेकस्याप्येककार्यता न स्यात्, न हि परस्परोपादानकृतोपकारानपेक्षा विषयेन्द्रियमनस्काराः सहैकका-र्यारम्भिणो युक्ताः, न चैकमेव किञ्चित्क्वचिज्जनयति, तत्र च सर्वत्र कार्यकारणभाव एवोत्सीदेत्, अनेकस्यैकस्य चैकानेकक्रिया-विरहात् प्रकारान्तराभावाच्च, नाप्यहेतुकमेव विश्वं, देशकालनियमायोगात्, तस्मादेकसामग्र्यधीनजन्मनामेव सहभावनियमो भावा-नामेककार्यक्रियानियमो वा, ततश्च स्वसन्तानक्षणमितरोपादानक्षणं च युगपदुपकुर्वतः कथमेकस्यानेककार्यता न स्यात्?, ततः कथं कार्यभेदाद्भेदः कल्प्यते?, द्रव्यपर्यायाणां चैकस्वभावतामाचक्षाणः एकस्यानेककार्यतां प्रतिक्षिपतीति कथं नोन्मत्तः?, स्वभावस्यैव वस्तुत्वात्,अन्यथा तस्य निःस्वभावताप्रसङ्गात्, एकस्वभावत्वे च द्रव्यपर्यायाणां तत्कार्यभेद एकवस्तुनिबन्धन एवे"त्यादि, तदमुं ग्रन्थं पूर्वदर्शितस्वाभ्युपधमविरुद्धमभिदधानः स्फुटमुन्मत्तः प्रज्ञाविकलो वा, यदि परं पर एव, अपिच–यद्यपि पटादयोऽनेकं कार्यं कु-र्वन्तो दृष्टा न च धर्मिरूपेण भिद्यन्ते तथाऽपि धर्मरूपतया भिद्यन्ते, न खलु केवलधर्मिरूपतैव वस्तुनः, किन्तु धर्मिधर्मोभयरूपतेति न कश्चिद्दोषः, गुणप्रधानभावेन हि कदाचित्कथञ्चिद्विवक्षा, न पुनरेकरूपोपादाने तदितररूपाभाव एवेति,'न ह्यत्र कारणमेव कार्य-

कार्येऽने-
कात्मता

रूपतामुपैती'त्यादि तु 'प्रतिपादयन् कारणात्कार्यप्रसूतिमेव निरुणद्धि, ततो गडुप्रवेशेऽक्षितारिकाविनिर्गमोऽस्य, कार्यरूपतोपगतिपक्षे हि तत्स्वभावत्वाद् यावत्तद्रूपतया न परिणतं कारणं तावन्नास्त इति युक्तः कारणात्कार्योदयः, यदा तु तत्स्वसत्तामात्र एव सदा व्यवस्थितं लेशेनापि कार्यात्मनाऽनात्मस्वभावं विभजति तदा ततः कार्यमुत्पन्नमिति तत्प्रमापकपरिग्रहेणापि प्रेक्षापूर्वकारिणः प्रत्येतुमप्रभविष्णवः, नहि श(क्तम)पि कारणमनुपाख्ये(यं) च, नापि विशेषमुपकल्पयितुमलमेतदनुपाख्यत्वविरोधादिति परमार्थतस्तदशक्तमेव प्राप्तं, ततस्ततः कथं कार्योत्पादः प्रेक्षावद्भिः प्रत्येय इति ?, न च कार्यतोपगतिर्न स्यादित्यत्रापि काचिद्युक्तिरस्ति, यतस्तद्रूपतोपगतिपक्षेऽप्यस्वभावक्रोडीकृतं कारणं तत्स्वभावतया तदन्यकार्योत्पादनेन प्रवर्त्तमानं केनापि निवारयितुमशक्यं, तत्स्वभावविकलं तु परिणामानभ्युपगमेऽपि न किञ्चिदुत्पादयितुमर्हति, यद्यपि ह्यपूर्वमेव कस्यचिद्भावे प्रागविद्यमानं कार्यं भवेत् तथाऽपि कारणस्य तादृशः कोऽपि स्वभावः समस्ति यतस्तद्भवति, अन्यथा तन्निर्हेतुत्वप्रसङ्गात्, एवं च कार्यदर्शनाद् यथा जनकः सस्वभावो व्यवस्थापयति, कथमिति चेदुच्यते–यदा विषय इन्द्रियोपादानस्य स्वभावभेदमादधाति इन्द्रियं च विषयोपादानस्य तदा इन्द्रियादेः स्वोपादानात्किञ्चिद्रूपं जातं किञ्चिच्च विषयादेः एवमितरेष्वपि वाच्यमिति कथं नानेकस्वभावता कारणस्य ?, न च यदेवेन्द्रियस्य स्वोपादानाद्रूपं भवति तदेव विषयादिभ्योऽपि, स्वोपादानादेव तत्सिद्धावशेषकारणकल्पनावैयर्थ्यप्रसङ्गात्, अथ न वै भावानां काचित्प्रेक्षापूर्वकारिता येनायमेकोऽपि समर्थः किमस्माभिरित्यपरे निवर्त्तेरन्, ते हि निरभिप्रायव्यापाराः स्वहेतुपरिणामोपनिधिधर्माणस्तत्प्रकृतेस्तथा भवन्तो नोपालम्भमर्हन्ति, एतदप्यचारु, यतो यद्यपि क्षितिबीजानां भावानां न काचिदपि प्रेक्षापूर्वकारिता समस्ति तथाऽपि सकलज्ञः सुगतः किमार्यसत्यचतुष्टयादिदेशनया आत्मानमायासयति ?, किमस्यापि नास्ति प्रेक्षापूर्व-

कार्येऽनेकात्मता

कारिता ?, किमयमात्मदेशनाजन्यक्षणस्वोपादानमात्रादेव तत्क्षणाविर्भूतविशेषसामर्थ्यात्तदा तथोत्पत्सुतां नाधिगच्छति येनास्यां प्रवर्त्तते ?, यदि सोऽप्रेक्षापूर्वकारी न निवर्त्तते तथाऽप्ययं महात्मा निवर्त्तते, अथ स्वहेतुभ्यः सोऽपि तदा तथाविध एवोत्पन्नो येन न शक्नोति निवर्त्तितुं, न हि न काचिदस्य परोपचिकीर्षा, केवलं प्रतिपाद्यसन्तानः स्वोपादानमात्रादेव विशिष्टक्षणजनकः समुत्पन्नोऽतस्तमन्तरेणापि तदा तं तथाविधं जनयितुं प्रभवति, परं सुगतोऽपि यावन्नोक्तं किञ्चित्तावन्नासितुं पारयतीति काऽस्य परोपचिकीर्षा स्यात् येन भक्तिप्रह्वमनोभिर्भवद्भिरयमुपास्येत, समर्थमेव हि तदा तदा तत्तदुपादानमपि तादृशमेकांशमुत्तरोत्तरक्षणमुत्पादयितुमिति विषयेन्द्रियादेरितरेतरसहितो विशेषस्तस्य चित्रस्वभावतामेवाविष्करोति, अत एव तत्संनिधौ विशिष्टस्वेतरक्षणभावे प्रत्येकं तद्भावभावानुविधानादनेकक्रियोपगमो न विरुध्यते, अन्यथा तु तद्विरोधः पुरन्दरेणाप्यशक्यः परिहर्त्तुम्, अनंशैकस्वभावेभ्यो विभिन्नेभ्यः कारणेभ्यः कार्यस्यापरापरस्यैवोत्पत्तिप्रसङ्गात्, नन्वेतद्दूषणं परिहृतमेव धर्मकीर्त्तिना, 'ते समर्थाः किं नापरापरं जनयन्तीति चेत्, न, तत्रैव सामर्थ्यात्, तस्यैवैकस्य जनने समर्था इति, नापरापरजनन'मिति हेतुबन्दौ तेनाभिहितं, सत्यमभिहितमेतत्, किन्त्वेतत्तेनापि न निरूपितं, किं तेषां सामर्थ्यमेकमेव किं वाऽनेकम् ?,एकत्वे सर्वसहकारिणामेकरूपताप्रसङ्गः, सामर्थ्यलक्षणत्वादेव वस्तुनः, अथानेकं किं तर्हि कार्यमपि पृथक् पृथगनेकं भवेत् ?, अथ भिन्नमपि तुल्यं सामर्थ्यमित्येककार्योदयः, तदप्यसत्, एवं हि कार्यमपि तुल्यं स्यात्, न पुनरेकमेव, तस्मादनिरूपिताभिधानमेव परस्य, एतेन–'कस्माज्जनकाद्व्यावर्त्तमानस्तद्रूपो न स्यान्नातत्कार्य' इत्याद्यपि पराकृतमपहस्तितमवगन्तव्यं, उक्तवदतद्रूपस्य तत्कार्यत्वविरोधात्, एकेनैव कारणेन तत्कार्यं कर्त्तव्यं, अनंशत्वे सति ततो भावस्यैव न्याय्यत्वात्, अपरस्य तज्जननस्वभावविलक्षणस्वभावयुक्तत्वात्, तस्माद्यत एवानेकक्रियायां तस्य

तद्भावभाविता तत एव तच्चित्रस्वभावतेत्याचक्ष्महे, ननु जैनपक्षेऽपि यदि ते सहकारिप्रत्ययाश्चित्रास्तर्हि कार्याण्यपि चित्रस्वभावानि भवन्तु, भिन्नानि तु कथं भवन्ति ?, नैष दोषः,यतो न ते परस्परस्वरूपमिश्रेण चित्राः सहकारिणः, किन्त्वात्मभूतानेकधर्मयोगात्, तथाभूता विचित्रता कार्याणामप्यस्ति, यतो यद्यपि तानि नान्यकार्यरूपतां बिभ्रति तथाऽप्यात्मभूतानेकधर्माध्यासितशरीराण्येवोपजायन्ते, यथा घटो मृत्पिण्डान्मृदात्मा, तस्मादेव च कुलालव्यापारात्संस्थानात्मा, सूत्राचक्रादिविभक्तात्मा, प्रधानं चोपादानकारणमेवेत्यपरकारणजन्या विशेषा मृदमेवावलम्बन्ते इति धर्म्मिरूपतयाऽसावेकोऽवभासते, सर्वकार्येष्वप्ययमेव न्यायः, ननु तत्संनिधौ विज्ञानलक्षणकार्यसम्भवेत्यादिस्त्वाशङ्काग्रन्थः सङ्गतः, परिहारस्त्वसमीचीनः, यतस्ते निरंशैकस्वभावाध्यासितमूर्त्तयस्तदवस्थायां कथं विशिष्टसजातीयेतरक्षणजननात्मकाः ?, ननूक्तं 'तेषां तत्सत्तानान्तर्यदर्शनादि'त्यादि, उक्तमेतत्, किन्तु न युक्तं, यतः कारणगतः स्वभावः कार्ये क्वचिदुपयुज्यते वा न वा ?, यदि सर्वथा नोपयुज्यते न किञ्चित्कस्यचित्कारणं स्यात्, प्रागभावमात्रस्य तु जगदुदरविवरवर्त्तिभिरशेषक्षणैरपि साधारणत्वाद्वाहुलेयसारमेयादेरपि बोधिसत्त्वादिकारणत्वप्रसङ्गात्, अथैतद्दोषभयादुपयुज्यत इति ब्रूयात् तर्हि किमंशेनोपयुज्यते सर्वात्मना वा ?, प्रथमे कृतान्तप्रकोपः, वस्तुनो निरंशत्वाभ्युपगमात्,द्वितीये त्वेकमेव कार्यमुत्पद्येत, तत्स्वभावस्य सर्वात्मना तत्रैवोपयोगात्, ततो यथा तस्याजननस्वभावता व्यवच्छिद्यते तथाऽन्यजननस्वभावताऽपि व्यवच्छिद्येत, तस्यामपि प्रतियोगित्वात्, अथ न व्यवच्छिद्यते तर्हि कथमस्य न चित्रता ?, ततः कथं नत्वेषामनेकात्मता ?, एकश्चात्मातिशयोऽनेककार्यहेतुस्तदोपपन्नो यदा चित्रसामर्थ्याध्यासितः स स्यात्, यदि च तदन्यापेक्षया विपर्ययव्यावृत्तिमुपादायानेकेन शब्देनाभिधीयमानं वस्त्वनेकरूपतां न प्रतिपद्यते तर्ह्यनेकेन शब्देन शतशः प्रतिपादयन्तु भवन्तः, केवलं चित्रकार्याणि ततस्तावन्न भवन्ति यावन्न

चित्रसामर्थ्ययोगिताप्रविष्टस्यैकस्यैव तथाऽभिधानं तत्त्वतोऽसदभ्युपगतमेव समर्थयंते, चित्रस्वभावयोगितामन्तरेणापरस्य प्रतिवैशिष्ट्यस्यैव दुरुपपादत्वात्, न च 'रूपं सप्रतिघं सनिदर्शन'मित्यत्रापि न स्वभावभेदः, सामानाधिकरण्याभावप्रसङ्गात्, यथा हि घटपटवदेकान्तभेदे न सामानाधिकरण्यमेवमेकान्ताभेदेऽप्येकमेव रूपमिति द्वितीयस्य कस्यचिदभावात् कस्य केन सामानाधिकरण्यमुपपद्यतां ?, तस्मात्स्वनिमित्तभावादेवेत्थं शब्दाः प्रवर्त्तन्ते, कारणानपेक्षिणां तदयोगादित्यादि दूषणमस्मन्मते(न)सावकाशं, यतस्तदत्यन्तभिन्न एकः कश्चित्तदुपकाराय(न)प्रभवतीति, किं त्वीदृशमेव तद्वस्तु यन्नैकमेव नाप्यनेकमेव, किन्त्वेकानेकरूपं भेदाभेदसिद्धेरिति न्यक्षेण वक्ष्यामः, न च न नीलादीनामात्मभेदमध्यक्षमीक्षामहे, एकस्यापि वर्णसंस्थानादिना चित्रस्वभावस्य भावस्य प्रत्यक्षेण प्रतिभासनात्, नापि कार्यभेदादपि नात्मभेदानुमानं, प्रतिबन्धभावात्, तद्ग्राहकप्रमाणसद्भावात्, प्रत्यक्षतोऽनेककार्याणां भावानामनेकात्मकतयोपलक्षणात्, नहि प्रदीपादय एकस्वभावाध्यासिततनवयेव पतङ्गदहनाद्यनेकक्रियायां व्याप्रियमाणाः समुपलभ्यन्ते, तथाहि—उष्णस्पर्श इति स्वज्वालावलीढं कोमलकलेवरशलभं भस्मसात्करोति, भास्वरस्वरूप इत्यन्धकारमपहरति, कांश्चित् परमाणून् नीलादिरूपतया परिणमय्य विसृजतीति धूमं जनयति, परिणामिपुद्गलस्कन्धद्रव्यात्मकश्चेति पर्यायान्तरभूतं स्वोत्तरक्षणमुत्पादयतीत्यनेकस्वभावः प्रदीपादिः प्रत्यक्षः, किञ्च—यः कारणे कार्योत्पादनशक्तयः फलानुमेया इति प्रतिपद्यते स कथं प्रत्यक्षेणै(ण।ने)कात्मतोपलक्षणेऽप्येकस्वभावतां भावानामाचक्षीत ?। अन्यच्च—यदा हेतुबिन्दौ कार्यहेतुप्रस्तावे धर्मकीर्त्तिः 'तस्मात्कार्यं स्वभावैर्यावद्भिरविनाभावि कारणं तेषामेव हेतु'रित्यादि प्रतिपादयति, अर्चटश्च 'यत एवं तस्मात् कारणस्थैः स्वभावैर्यावद्भिरग्नित्वद्रव्यत्वादिभिरविनाभावी'ति व्याख्यां प्रथयति तदा कारणानेकात्मकतां कथं प्रतिक्षिपेत ?, न च व्यावृत्तिभेदादयमदोष इत्युत्तरं,



HB, p.63, 18f.

तत्रानेकदोषाणामुत्तरत्र प्रदर्शनात्, अनुमानसिद्धा च कारणानेकात्मता, विपर्यये बाधकप्रमाणसद्भावात्, अनेकात्मताविरोधे ह्येका-त्मता, तस्यां च कार्यानुत्पादप्रसङ्गात्, बाधकं प्रमाणं, कथमिति चेत्, उच्यते,यदा हि सर्वथैकस्वभावता भावानां तदा नीलं नील-स्वभावनिष्ठं, एतावतैव वस्तुस्वरूपं पर्याप्तं कथमुदयमासादयेत् यदि तस्य कार्यजननयोग्यतालक्षणं स्वभावान्तरं न भवेत्?, एक-स्यानेकक्रियानभ्युपगमे च योऽयं रूपरसस्पर्शविशेषाणां क्वचित्सहभावनियमः प्रमाणपरिदृष्टः स न स्यात्, यदि भिन्ननिमित्तत्वेना-यमुपपद्येत, ननूक्तं भिन्ननिमित्तानां सहभावनियमायोगादिति, उक्तमेतत्, किन्त्वेकान्तवदित्ययुक्तं, स्याद्वादं च वयमङ्गीकुर्महे, तस्मा-त्कथञ्चित्स्वभावभेदे तदेकधर्मिस्वभावतयैकत्र सहभावनियमः,तथाहि–न रूपरसादिपरमाणवः प्रतिभासन्ते, किन्त्वेकरूपमेव तद्द्रव्य-मनेकरूपानुविद्धमवभासते, ततः सहभावनियमः, सर्वथैकस्वभावे च कारणे कार्यमप्येकमेवाजनीति केन कस्य सहभावनियमः स्यात्?, न चैकस्यानेकस्वभावता चिन्त्या, स्याद्वादनीत्या सूपपन्नत्वात्, न च सर्वथैकः कश्चित्सर्वथाऽनेकस्वभावतां वाऽनुभवति येनैकस्या-नेकस्वभावतामनुभवतस्तद्वदनेकताया दुर्निवारत्वं, न च यमात्मानं पुरोधायायं धर्मी धर्माश्रैत इति व्यवस्थाप्यते सोऽंशः सर्वथेतर-रूपनिरपेक्ष एव विवक्ष्यते, किन्तूपसर्जनीभूतमितरत् तदपि रूपं तत्र समस्त्येवेति कथं यदि तस्य भेदस्तदा भेद एवेत्यादि दूष-णावकाशः?, एवमन्यदप्यसम्बद्धमेवं परस्यैव प्रलपितमित्युपेक्षणीयं, द्रव्यपर्यायाणां चैकस्वभावतामाचक्षाण एकस्यानेकक्रियां प्रति-क्षिपन्नोन्मत्तः स्याज्जैनः यदि स्यात्पदलाञ्छनामेकस्वभावतां न प्रतिजानीते, तथा प्रतिजानानं पुनरधिक्षिपन् पर एव परमुन्मत्तः, तन्न परमते कथञ्चिदर्थक्रिया संभवतीत्यसम्भवदोषदुष्टमेव पराभिमतं वस्तुलक्षणमिति। यदि पुनरुत्पादव्ययध्रौव्य युक्तं सदित्यभ्यु-पगम्यते तदेदमपि संभवति, यतस्तदेव द्रव्यं केनचिद्रूपेणोत्पद्यते केनचिद्विपद्यते केनचिच्चावतिष्ठत इत्युत्पादव्ययध्रौव्यवत्येव वस्तु

न्यर्थक्रियाऽपीति कथमेतत् प्रतिक्षेप्तुं शक्येत इति, अत्र बहु वक्तव्यं तद्यथाऽवसरं वक्ष्यामः ॥

'उपलब्धिः सत्ते'ति कश्चित्, ततः सैव वस्तुलक्षणमित्यपि न न्यायानुपाति, यतः केयमुपलब्धिः ?, किं ज्ञानम्, अथ ज्ञानविषयता ?, प्रथमपक्षे अर्थावस्तुत्वप्रसङ्गः, ननु विज्ञानवादिनामियं सिद्धसाध्यता, विज्ञानमात्रस्यैव तैरभ्युपगमात्, नन्वर्थस्य विशददर्शनेनानुभूयमानस्य कथमभावः ?, स्वप्नदर्शनवदपारमार्थिकमिदं दर्शनमिति चेत् किमेतदस्यापारमार्थिकत्वम् ? इति वाच्यम्, अर्थशून्यत्वमिति चेत् इतरेतराश्रयत्वं, तथाहि—अर्थशून्यत्वे सत्यपारमार्थिकत्वं, अपारमार्थिकत्वे चार्थशून्यत्वमिति, येन चार्थो न दृष्टः स कथं ब्रूयादर्थो नास्तीति ?, परप्रसिद्ध्येति चेत् तत्रापि प्रष्टव्योऽसि—पराभ्युपगमः प्रमाणमप्रमाणं वा भवतः ?, यदि प्रमाणमयुक्तोऽर्थप्रतिषेधः, अप्रमाणत्वे तु न तदाश्रयणेन तत्त्वव्यवस्थापनं प्रमाणविदः साधीयः, यदि चानुभवसिद्धस्यापि स्वप्नदृष्टान्तावष्टम्भेनार्थस्याभावः प्रतिपन्नः तर्हि ज्ञानसद्भावः कथमभ्युपेतः ?, अपिच—स्वप्नानुभवस्यार्थस्य किमप्रतिभासमानत्वादसत्त्वमुतार्थक्रियाविरहात् ?, न तावदाद्यः कल्पः, तदा तस्यानुभूयमानत्वात्, उपलब्धिः सत्तेति चाभ्युपगमात्, स्वप्नदशायां ज्ञानस्वरूपनिष्ठस्तथाऽवभासरूपः स सत्यः, जाग्रदनुभूतोऽपि यदि तथा स्यात् न नः काचित्क्षतिः, ज्ञानरूपत्वादवभासस्येति चेत्, कोऽयं तथाऽवभासो नाम ?, किं चिद्रूपतामात्रं ? किं वा नीलाद्युल्लेखिताऽस्य प्रवृत्तिः ?, प्रथमपक्षे चिद्रूपतामात्रमनुभूयते, न नीलादिरूपता, द्वितीये तु पक्षे यदि नीलाद्यर्थो न समस्ति कथं नीलाद्युल्लेखेन विज्ञानस्य प्रवृत्तिः?, अनाद्यविद्यावासनानिर्मितैवेयमिति चेत् ननु सा वासना केनचिद्विज्ञानेन स्वस्वरूपपृथग्भूता कथञ्चिदपि तावदधिगन्तव्या, तथा च यद्यर्थोऽप्यधिगम्येत तदा न किञ्चिदयुक्तं संपद्येत इति किमयं नाभ्युपगम्यते ?, स्वापाद्यवस्थायामर्थाभावेऽपि तथाऽवभासो दृष्ट इति चेत्, न, स्वप्नप्रत्ययेष्वपि जाग्र-

दृशानुभूताद्यर्थविषयं स्मरणमनुभवोल्लेखेन प्रवर्त्तते, अन्यथाऽत्यन्ताननुभूतस्य किं न कस्यचिदर्थस्य तत्र प्रतिभासः ?,अथार्थक्रियाऽभावात्स्वप्नदशायामर्थस्यासत्त्वं, जाग्रद्दशायामर्थक्रियासद्भावात्सत्त्वमस्तु, विसंवादादसत्त्वमिति चेत् कोऽयं विसंवादः ?, ज्ञानान्तरेणाग्रहणमिति चेत् तर्हि जाग्रद्दशायां संवादसद्भावात्सत्यत्वमस्तु, बाधितत्वादसत्यत्वमिति चेत् किमिदं बाधितत्वं ?, नेदमिति प्रत्ययोत्पत्तिरिति चेत् जाग्रत्प्रत्ययेषु बाधकाभावात्सत्यत्वमस्तु, नहि सत्यस्तम्भादिप्रत्ययेषु बाधकोत्पत्तिरस्ति, अथ स्वप्नप्रत्ययेष्वर्थक्रियाकारित्वं संवादोऽबाधितत्वं च दृष्टं, न च सत्यत्वमुपगतमर्थवादिना तेन, न तत्सत्यत्वे निबन्धनमिति चेत् न, सर्वाऽपि भ्रान्तिरनिबन्धना, यथा मरीचिकासु जलभ्रान्तिः, तेन न सर्वथैवार्थस्यासत्त्वं, न च भ्रान्तिप्रत्ययेषु अभ्रान्ता अर्थक्रियादयः सन्ति। किञ्च–अर्थप्रतिषेधः प्रमाणेन क्रियते किं वा अप्रमाणेन ?,अप्रमाणमकिञ्चित्करमेवेति कथं तेन तत्प्रतिषेधः?, प्रमाणं तु कथमर्थस्य प्रतिषेधकं ?, किं विनाशकत्वेन ? किं वा विपरीतार्थोपस्थापकत्वेन ? किं वा अग्राहकत्वेन ?, प्रथमपक्षे सिद्धोऽर्थो, न ह्यसिद्धस्य विनाशः संभवति, द्वितीयेऽपि पक्षे अर्थोऽर्थस्य बाधक इति कथं नार्थसिद्धिः ?, अग्राहकं तु सन्देहकारि भवतु कथं प्रतिषेधकं ?, दृश्यस्य कथं न ? इति चेत्, ननु पूर्वदृष्टस्यैकज्ञानसंसर्गिण्युपलभ्यमाने आरोपाद्दृश्यत्वं, न चायमत्यन्तादृष्टस्य प्रकारः(शः)संभवति, ज्ञानात्मन्युपलभ्यमाने सत्यदृष्टस्यापि तादात्म्येन भवतु ज्ञानात्मना तस्य प्रतिषेधः, भिन्नस्य तु कथम् ?, अनुपलम्भादिति चेत् तत्किं नीलाद्याकारोऽनुभूयते न वा ?, अथ अस्त्ययमाकारः, किन्तु ज्ञानात्मैव, जडस्य प्रकाशायोगात्, उक्तञ्च–"न जडस्यावभासोऽस्ति, भेदाभेदविकल्पनात्।" इति, तथाहि–प्रकाशस्य भेदे जडस्य किमागतम् ?, अभेदे तु जडमेव तन्न स्यात्, न ह्यभिन्नप्रकाशतां दधाना स्तम्भादयो जडा भवितुं युक्ताः, तन्न भिन्नविषयं ज्ञानमिति, तदप्यसत्, यतः कोऽयं प्रकाशः ? किं ज्ञानम् ?

अथ ज्ञानविषयता?, प्रथमपक्षे स्यादिदं, केवल तत्रोक्तो दोषः, द्वितीयपक्षे तु कथमर्थस्य ज्ञानता?, न हि तद्विषयतां प्रतिपद्य-
मानैस्तद्रूपैरेव भवितव्यमिति भावानां नियमहेतुमुपलभामहे, अन्यथा सुगतज्ञानविषयतां प्रतिपद्यमानैरशेषज्ञानक्षणैरपि सुगतज्ञा-
नरूपतैव प्रतिपन्नेत्येकमेव सुगतज्ञानमवशिष्यत इति ग्राह्यग्राहकप्रतिपाद्यप्रतिपादकादिसकलव्यवहारोच्छेदः, अर्थवत्सन्तानान्तरा-
णामप्यसिद्धेः, तथा च व्यवहारकक्षाऽप्रवेश एव परस्योपपन्नः, ग्राह्यं न तस्य ग्रहणं न तेन, ज्ञानान्तरग्राह्यतयाऽपि शून्यः। तथा-
ऽपि विज्ञानमयः प्रकाशः, प्रत्यक्षपक्षस्य तवाविरासीत् ॥१॥ तथा प्रेतवत्पुनः सन्तानानियमः सिद्धः, तथा नरकवत्पुनः सर्वं सिद्ध-
मित्यादि न किञ्चित्केनचित् कदाचित्क्वचिदपि वाच्यमिति, यदि पुनरचिन्त्यशक्त्यादिना सुगतविज्ञानं तद्रूपतामप्रतिपाद्यमानमपि
सन्तानान्तरक्षणादि स्वविषयीकुर्यात् नन्वर्थोऽपि तद्विषयतां प्रतिपाद्यमानस्तद्रूपतां कथं भजेत्? इति विभाव्यम्। अपिच–लोके-
ऽपि नायं नियमः यथा तेन प्रकाश्यमानं तदेव भवति, न हि प्रदीपेन प्रकाश्यमानाः स्तम्भादयः प्रदीपा भवन्ति, अथ तेऽपि प्रका-
शस्वभावास्तदानीमेवोपजायन्ते, न चकास्ति तावदन्धकारेऽपि स्तम्भादिः,प्रकाशपर्यायता तु प्रदीपाद्भवति,तथेहाप्यर्थस्य प्रकाशपर्या-
यता ज्ञानाद्भवतु, ननु पूर्वमर्थास्तित्वे किं प्रमाणं?, निषेधे किं प्रमाणं?, अस्तु तर्हि संशयः, नैतदेवं, यतः किमेकमेव ज्ञानं क्षण-
मात्रावस्थायि तेन पूर्वोत्तरक्षणयोरर्थसत्तां न प्रतिपद्यते? किं वाऽनेकानि परस्परकर्मरूपतां न प्रतिपद्यन्ते तेन न विदन्ति?, प्रथ-
मपक्षे क्षणादूर्ध्वं न किञ्चिदनुभवेत्,तच्चासत्,मरणपर्यन्तमनुभवस्याबाधितस्योत्पत्तेः, द्वितीये तु पक्षे ज्ञानानां परस्परा(न)नुगमेऽपि
आत्मना देशकालाकाराद्यविपरीतोऽनुभूय(वेद्य)त एवेति कथं तस्य प्रतिषेधः?,एतेन 'सहोपलम्भनियमादभेदो नीलतद्धियोः। द्विच-
न्द्रादिवत्, तथा 'दर्शनोपा तर्हि (दर्शनोपगते)तस्य,ग्रहणात्तद्ग्रहे ग्रहात्। दर्शनं नीलनिर्भासं,नार्थो बाह्योऽस्ति केवलः ॥१॥' इत्या-

द्यपि यदुच्यते परैस्तत्प्रतिक्षिप्तमवगन्तव्यं, सोदर इव सहशब्दस्यैकत्ववाचित्वात्, ज्ञानार्थयोश्च भेदस्य प्रतिपादितत्वात्। अथ निरालम्बनाः सर्वे प्रत्ययाः प्रत्ययत्वात् स्वप्नप्रत्ययवदित्याद्यनुमानादर्थाभावः तर्हि ज्ञानात्मवेदनमपि प्रत्ययः सोऽपि निरालम्बनः स्यात्। अथ शून्यवाद्ययमपि सिद्धसाध्यतां मन्येत तर्हि तस्याप्यर्थनिरासे साधनमस्ति वा न वा?, यद्यस्ति कथं शून्यम्?, अथ नास्ति कथं तन्निरासः?, किञ्च–ज्ञानशून्यवादिनोरनुमानं गृहीतव्याप्तिकमगृहीतव्याप्तिकं वा प्रवर्त्तेत?, यद्यगृहीतव्याप्तिकं कथमनुमानं?, व्याप्तिग्रहणं तु न तेनैव, इतरेतराश्रयत्वप्रसङ्गात्, ज्ञानान्तरेण तु व्याप्तिग्रहणे कथमद्वैतं शून्यं वा?, अद्वैतं हि तदा स्यात् यदा स्वमात्रनियतं विज्ञानं भवेत्, यदा तु तदात्मव्यतिरिक्तमपि किमपि गृह्णाति तदाऽर्थमपि स्वव्यतिरिक्तं गृह्णीयादिति कथं तत्सिद्धिः?, तन्न किञ्चित्साधनमर्थस्य निरासे परस्य, अनुभवसिद्धस्य चार्थक्रियाकारिणः सकलजन्तुसाधारणस्यार्थस्य निषेधे ज्ञानशून्यत्वयोरपि न व्यवस्थितिरिति। उक्तञ्च–ज्ञानशून्यवतोर्नास्ति, निरासेऽर्थस्य साधनम्। सच्चित्सिद्धिप्रतिक्षेपे, कथं तत्त्वव्यवस्थितिः?॥१॥"

अथायमर्थः किमवयविरूपः? किं वा परमाणुरूपः?, तत्र न तावदवयविरूपो, यतोऽसाववयव्यवयवेभ्यो भिन्नो वा स्यादभिन्नो वा?, यदि भिन्नस्तदाऽनुपलम्भादसत्त्वमेवास्य, तथाहि–यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदसदिति व्यवहर्त्तव्यं, यथा खरविषाणादि, नोपलभ्यते चोपलब्धिलक्षणप्राप्तोऽप्यवयवेभ्यो व्यतिरिच्यमानमूर्त्तिरवयवीति व्यापकानुपलब्धिः, परैरवयविनो दृश्यत्वाभ्युपगमात् नासिद्धविशेषणता हेतोः, ऊर्ध्वाधोमध्यभागव्यतिरिक्तवपुषस्तस्याप्रतिभासनात् न स्वरूपासिद्धता, न च (असमानदेशत्वं चोद्यं) समानदेशत्वेऽपि रूपरसयोर्वातातपयोश्च स्वरूपभेदवतोर्भेदेनोपलक्षणात्, अथ दूरदेशस्यावयवाप्रतिभासेऽप्यवयविनः प्रतिभासात्कथं नासिद्धता?, तदसत्, तस्यास्पष्टाकारस्यावस्तुत्वेन तत्प्रतिभासस्य भ्रान्तत्वात्, वस्तुत्वे वाऽन्यस्य निकटदेशस्य सोऽस्पष्टाकारः

सुतरामवभासेत, अथाकारद्वयमवयविनः स्पष्टमस्पष्टं च,तत्र निकटस्थः स्पष्टमुपलभते,दूरस्थस्त्वस्पष्टमिति, ननु यद्यस्पष्ट आकारोऽवयविदेशस्तदा निकटस्थ आकारद्वयमुपलभेत, अथान्यदेशस्तदाऽऽत्मनः पृष्ठतस्तं पश्येत्। किञ्च—एतदाकारद्वैतमवयविनः केन गृह्यते ?, न तावद् दूरदेशज्ञानेन, तत्र निकटदेशज्ञानविषयस्पष्टरूपानवभासनात्, अस्पष्टरूपप्रतिभासं हि तदनुभूयते,नापि निकटदेशज्ञानेन, स्पष्टरूपावभासवेलायां हि नापरोऽस्पष्ट आकारस्तत्र प्रतिभाति, तन्नावयविन आकारद्वययोगः। अथ दूरदृष्टमवयविस्वरूपं परिस्फुटमवगम्यते ? आहोश्वित्परिस्फुटरूपतया अपरिस्फुटं ?, तत्र यद्याद्यः पक्षस्तदाऽपरिस्फुटरूपसम्बन्धित्वमेवावयविनः प्राप्नोति, परिस्फुटरूपस्यापरिस्फुटरूपप्रवेशेन प्रतिभासनात्, अथ द्वितीयस्तदा स्फुटरूपसम्बन्धित्वमेव स्यात्, अस्फुटरूपस्य स्पष्टरूपानुप्रवेशेन प्रतिभासनात्, तन्न स्वरूपद्वयावगमोऽवयविनः, न चैकस्य विरुद्धधर्मद्वययोग उपपत्तिमान्, ततः स्फुटास्फुटयोरेकत्वप्रतिभानमभिमानमात्रं, व्यक्ताव्यक्ताकारात्मत्वे चावयविनो व्यक्ताव्यक्ताकारवच्छेदप्रसङ्गः, तन्नावयवी दूरदेशस्थावयवाप्रतिभासेऽपि प्रतिभाति, किञ्च-किं कतिपयावयवप्रतिभासे सत्यवयवी प्रतिभातीत्युपगम्यते आहोश्वित्समस्तावयवप्रतिभासे ?, यद्याद्यः पक्षस्तदा जलमग्नमहाकायस्तम्भादेरुपरितनकतिपयावयवप्रतिभासेऽपि समस्तावयवव्यापिनः स्तम्भावयविनः प्रतिभासः स्यात्,तन्न प्रथमपक्षः, नापि द्वितीयः, मध्यपरभागवर्त्तिसमस्तावयवप्रतिभासासम्भवेनावयविनोऽप्रतिभासप्रसङ्गात्,अथ भूयोऽवयवग्रहणे सत्यवयवी गृह्यत इत्युपगमः,तस्मिन्नपि समस्तावयवव्यापिनोऽवयविनोऽग्रहणमेव,तथाहि—अर्वाग्भागभाव्यवयवग्राहिणा प्रत्यक्षेण पर(५००)भागभाव्यवयवाग्रहणमिति न (समस्तावयवव्याप्यवयविग्रहणं)तेन तद्व्यापकस्यापि ग्रहीतुमशक्यत्वात्,ग्रहणे वाऽतिप्रसङ्गः स्यात्,न च व्यवहितावयवाप्रतिभासेऽप्यव्यवहितोऽवयवी प्रतिभातीति वाच्यं,(यथा)व्यवहितावयविस्वरूपावभासे तद्ग्राह्यान्यावयविस्वरूपस्याप्यवभासःस्यात् तथा तदन्यस्या-

पीति, सर्वस्य सर्वावयविग्रहणप्रसङ्गात्, तस्माद्व्यवहितावयवव्यापिरूपादर्वागवयवव्यापिनोऽवयविरूपस्य भेदप्रसङ्गः, तथाहि—यस्मिन् प्रतिभासमाने यन्न प्रतिभाति तत्ततो भिन्नं, यथा घटादप्रतिभासमानः पटः, न प्रतिभाति चार्वागवयवव्यापिरूपे प्रतिभासमाने परावयवव्याप्यवयविस्वरूपं, तत्कथं तत्ततो न भिन्नं ?, परभागावयवग्राहिणा तु प्रत्यक्षेण तद्व्याप्येवावयविस्वरूपं गृह्येत नार्वागवयवव्यापकमपि, पूर्वोक्तनीत्या, नापि स्मरणेनार्वाक्परावयवव्याप्यवयविस्वरूपग्रहः, प्रत्यक्षानुसारेण स्मृतेः प्रवृत्तेः, तदयमवयव्यवयवेभ्यो भेदेनानुपलभ्यमानः कथमुपगमयोग्यः स्यात् ?, किंच—अयमवयवेषु वर्त्तमानः सामस्त्येन वा वर्त्तेतैकांशेन वा ?, सामस्त्यवृत्तावेकस्मिन्नेवावयवे परिसमाप्तत्वादनेकवृत्तित्वं न स्यात्, एकद्रव्यं च द्रव्यं स्यात्, एकस्य चाणोर्विभागाभावान्नित्यत्वं च कार्यद्रव्यस्य स्यात्, एकस्य वा जनकत्वं, सामग्र्या एव जनकत्वात्, अवयवेषु चावयवीति प्रत्ययाभावः प्रसज्येत, वृत्तौ चैकैकस्मिन्नवयवे सामस्त्येन वर्त्तत इति तत्र सद्भाव उक्तः, पुनरन्यत्र तथैव न वर्त्तत इति, तत्रैवासद्भाव इति एकत्र युगपद्भावाभावयोर्विरोधः, नाप्यंशेन, निरंशस्य तस्योपगमात्, सांशत्वे वा ते ततो भिन्नाः स्युरभिन्ना वा ?, भिन्नत्वे पुनरप्यनेकांशवृत्तेरेकस्य सामस्त्यैकांशवृत्तिविकल्पानतिक्रमः, अभिन्नत्वेऽंशान्तर्गमेऽंशिनः तद्वद्भेदादभावप्रसङ्गः, अंश्यन्तर्गमेऽंशानां वा, ततो निरंशोऽंशी स्यात्, तत्र च पूर्वनीतितोऽनेकवृत्त्यभावः, अनेकवृत्तित्वे वा विरुद्धधर्माध्यासिता। अथावयविनोऽवयवेषु वृत्तिः तत्र समवायः, ननु सोऽपि समवायस्तेषु वर्त्तते वा न वा ?, यदि समवायस्य समवायान्तराभावात् न वर्त्तते तदा यावदसौ पुण्यादिषु पुरुषावयविनं सम्बधयति तावत्तन्त्वादिष्वपि किं न सम्बन्धयति ?, अवृत्तेरविशेषात्, अथ वर्त्तते तत्रापि यदि समवायो वृत्तिस्तदाऽनवस्था, अथानेकावयवाधेयत्वं तदा यदनेकवृत्ति तदनेकं यथा जलानलं, अनेकवृत्तिश्चायमिति प्रसङ्गापादनादेव तस्याभावः, तन्न भिन्नम-

वयविस्वरूपमवयवेभ्यो विचारभारगौरवं सहते, अभेदपक्षे त्ववयवमात्रमवयविमात्रं वा स्यादितरेतराव्यतिरेकात्, इतरेतरस्वरूपवत्, तन्नावयविरूपोऽर्थः प्रमाणोपपन्नः। नापि परमाणुरूपः, तेषामपि दिक्षट्कसम्बन्धेन षडंशप्रसङ्गात्, न च विशकलिताः परमाणवः प्रतिभासन्ते, एकघनाकारस्य संवेदनावभासस्यानुभूयमानत्वात्, तन्न बाह्योऽयमाकारः, किन्तु संवेदनमेव तथा तथा प्रकाशत इति, तदत्र प्रतिविधीयते, नन्वयं स्तम्भाद्याकारोऽनुभूयमानस्तावन्न किञ्चिदिति व्यवस्थापयितुमशक्यः, शशशृङ्गादिवदनुभवाभावप्रसङ्गात्, केवलमयं विज्ञानस्वरूपः किं वा बाह्यः? इति विचारस्तत्र प्रवर्त्तते, तत्र विज्ञानस्वरूपत्वे बहिर्मुखतया नायमनुभूयेत, यथा हि चिद्रूपतामात्रमन्तर्मुखतयाऽऽत्मनि सुखमनुभूयते तदव्यतिरेके स्तम्भाद्याकारोऽप्येवमनुभूयेत, अथ भ्रान्तिवशादयमव्यतिरिक्तोऽपि व्यतिरेकितया प्रकाशत इत्युच्यते तर्हि यथाऽयमनुभूयते तथा न सत्यः, यथा च सत्यस्तथा नानुभूयत इति कथं साकारां धिषणां योगाचारः प्रतिजानीते?, स्वच्छं संविन्मात्रमत एव तत्त्वमिति यदि माध्यमिकः प्रतिपद्येत तर्हि यद्ययमाकारो न विज्ञाने नापि बहिस्तदा शशविषाणवन्नानुभूयेतेत्युक्तं, नन्वनाद्यविद्यावासनावशादविद्यमानमप्युपदर्शयन्ती भ्रान्तिरियं प्रवर्त्तत इति कमुपालभेमहि?, अभ्रान्तिस्तर्हि कीदृशीति वाच्यं, चिद्रूपतामात्रमिति चेत् तत्कथं सिद्धमित्यपि वक्तव्यं, अनुभवादिति यद्यभिधत्से तदानीमनुभवः कदाचनापि न बहिर्मुखावभासशून्यं ज्ञानात्मानमवस्थापयति, तस्मात् स्तम्भाद्याकारो बाह्यस्तावदवश्यमभ्युपगन्तव्यः, स च यद्येकान्तेनावयविव्यतिरिक्तोऽभ्युपगम्येत तदा यदवयवव्यतिरिक्तावयविपक्षे दूषणं तत्सावकाशमासज्येत, न चैवमभ्युपगमः, अवयवा एव तथा परिणमन्तः कथञ्चिदेकरूपतामापन्नाः स्तम्भाद्यवयविरूपतया प्रकाशन्त इति हि जैना वर्णयन्ति, ततस्तेषामेकान्तव्यतिरिक्तावयविप्रतिषेधे सिद्धसाध्यता, कथञ्चिद्व्यतिरेकपक्षे च हेतोरसिद्धता, न हि येन रूपेण करचरणशिरोग्रीवादयो-

ऽवयवाः करचरणादिप्रतीतौ प्रकाशन्ते तेनैव पुरुषप्रतीतावपि, तत्साधारणपरिणामस्यैव तथाप्रतीतिहेतुत्वात्, यदि वाऽवयव्यवयवव्यतिरिक्तो न प्रकाशेत तदा परमाणव एव केवलाः प्रतिभासेरन्, न चेत्थमनुभवः, स्थूलरूपावभासिनः संवेदनस्यानुभूयमानत्वात्, ननु किमिदं स्थौल्यं ?, किं परमाण्वात्मकं? किं वा परमाणुजन्यं ?, न तावत्परमाण्वात्मकं, तद्धि पूर्वापरादिदिग्भेदमुपलभ्यते, न चैकस्य परमाणोरसावस्ति, बहूनां भविष्यतीति चेत् तदपि नास्ति, नहि निरंशपरमाणोः कश्चित्परमाणुः पूर्वः कश्चित्पश्चिमो दक्षिण उत्तरो वा संभवति, तथाहि–यस्यावधिभूतस्यांशस्यैकः परमाणुः पूर्वो दृष्टस्तस्यैवावधिभूतस्यास्यापरेणापि प्रत्यासन्नेन भवितव्यं, ततस्तदवधिरूपया प्रत्यासत्त्या यद्येकः पूर्वस्तदाऽपरोऽपि पूर्वः स्यात्, एवं शेषेष्वपि वाच्यं, तन्न परमाण्वात्मकं स्थौल्यं, नापि परमाणुजन्यं, यतः परमाणुभिः किं संयुक्तैर्जन्यते ?, किं न जनयन्ति ?, तत्र बाधकप्रमाणप्रतिपादनाद्वरमेष प्रतिभासधर्मः, अस्ति हि कश्चिद्वस्तुधर्मो यथा नीलत्वादिलक्षणः, कश्चिच्च प्रतिभासधर्मो यो बहुषु प्रतिभासमानेषु प्रकाशते यथा केशकलाप इति, तन्न किञ्चित्स्थौल्यम्, अत एव चोक्तम्–"नासंयुक्तैर्न संयुक्तैर्निरंशैः क्रियते महत्। अयोगे प्रतिभासोऽपि, सयोगेऽप्यणुमात्रकम् ॥१॥" तदेतदप्यसत्, यतः–कोऽयं प्रतिभासधर्म्मः ?, किं वस्तु ? किं वा अवस्तु ?, यदि वस्तु तदाऽवयविदूषणम्, अथावस्तु तदा कथमभ्रान्तमध्यक्षं प्रचयावभासि स्यात्, संस्थानापेक्षया चाभ्रान्तत्वं इष्टं, तत्र प्रत्यक्षं कल्पनापोढमभ्रान्तमिति न्यायबिन्दुसूत्रे, वर्णसंस्थानात्मके वस्तुनि यन्न भ्राम्यति तदभ्रान्तमिति धर्मोत्तरेणाभिधानात्, परमाणूनां च स्वस्वरूपमग्नानां संस्थानरूपाभाव एव, तस्मात्परमाणूनां कथञ्चित्साधारणाकारपरिणामादेव संस्थानात्मकता, वस्तुनः तदेव च स्थौल्यमिति नायं प्रतिभासधर्म एव, अत एव च तत्कथञ्चित्परमाण्वात्मकं परमाणुजन्यं च व्यवस्थितं, न च निरंशपरमाणोः कश्चित्परमाणुः पूर्वः पश्चिमो दक्षिण

उत्तरो वा न संभवतीत्यपि विचारचतुरचेतसां चेतश्चमत्करोति, यतो 'यस्यावधिरूपस्यांशस्यैकः परमाणुः पूर्वो दृष्टस्तस्यैवावधिभूतस्यांशस्यापरेणापि प्रत्यासन्नेन भवितव्यं ततस्तदवधिरूपया प्रत्यासत्त्या यद्येकः पूर्वस्तदाऽपरोऽपि पूर्वः स्यादि'त्याद्युक्तं तत्र केयं प्रत्यासत्तिः ?, किमेकक्षेत्रप्रदेशावगाढता ? किं वा परमाण्वन्तरव्यवधानायोग्यक्षेत्रावस्थायिता ?, तत्रैकक्षेत्रप्रदेशावगाढानां परमाणूनां पूर्वापरादिदिग्भेदो नेष्यत एव, द्वितीये तु पक्षे यद्येकः पूर्वस्तदाऽपरोऽपि पूर्वः कथं भवेत् ?, न ह्यपरः परमाणुः पूर्वावस्थितपरमाणुप्रदेशव्यवस्थित एवावधिभूतेन परमाणुना सह परमाण्वन्तरेण न व्यवधीयते प्रदेशान्तरव्यवस्थितः पुनर्व्यवधीयत इत्यत्र कश्चिद्धेतुः, तस्मात्स्वप्रदेशावगाढस्यापरपरमाणुव्यवधानायोग्यक्षेत्रावस्थिताः पूर्वापरादिदिग्भेदभाजो भवन्त्यपरे परमाणव इति न कश्चिद्विरोधः, अत एवोक्तम्–"एगपएसोगाढं सत्तपएसा य से फुसणा" इति। हरिभद्रसूरिणाऽप्युक्तमनुयोगद्वारवृत्तौ–"न ह्यंशतः स्पर्शना नाम काचिद्, अपितु नैरन्तर्यमेव स्पर्शनां ब्रूमः इति परमाणुद्रव्यमेकं सप्तप्रदेशस्पर्शमुपपद्यत इति", अत एव संयोगपक्षेऽपि न पिण्डस्याणुमात्रताप्रसङ्गः, यतो नैकप्रदेशावगाढत्वेनैव संयोगो भवति, किन्तु परमाण्वन्तरव्यवधानायोग्यप्रदेशावस्थायित्वेनापीति परमाणोः प्रदेशार्थतया नात्मभेदः, धर्मरूपतया पुनर्भिद्यत एव, यतो न येनैव स्वभावेनैकेन सह संयुक्तः स परमाणुस्तेनैव स्वभावेनापरेणापि, किन्तु कथञ्चिदन्येन, अत्र च विशेषविचारं 'यथाऽवसरं विधास्यामः, ततः परमाण्वात्मकं परमाणुजन्यं च स्थौल्यं सिद्धमिति। एतेन यदुच्यते परैः–यथा न किञ्चित्स्थौल्यं परमाणुभ्योऽन्यत्, किन्तु विततदेशाः परमाणव एव तथा प्रतिभासन्त इति, कथं नान्तरावभासस्तर्हीत्यपि न वाच्यं, यतः किमिदमन्तरं ? किमाकाशं ? किं वा विजातीयाणवः? किं वा रूपभेदो ? देशभेदो ? वेति, तत्राकाशविजातीयपरमाणुप्रतिभासाभावो न दोषाय, नहि परमाण्वप्रतिभासश्चाक्षुषोऽतीन्द्रियाकाशाप्रतिभासो

वा दोषमावहति, भिन्नरूपता तु प्रतिभासत एव, अन्यथा परमाणुमात्रप्रतिभासः स्यात्, देशोऽपि न स्वरूपादन्यः, सोऽपि स्वरूपेणैव व्याख्यातः, अन्यथा भिन्नरूपपरमाण्व[पि] प्रतिभासे न किञ्चित्प्रतिभासेत इत्यन्धमूकं जगत् स्यात्, उक्तञ्च–"भिन्नदेशस्वरूपाणामणूनामग्रहे सति। तत् स्थौल्यं यदि कल्पेत, नावभासेत किञ्चन ॥१॥" तथाहि–किं स्थौल्यमात्रं प्रतिभासते ? किं वा स्थौल्यविशेषः ?, तत्र यदि स्थौल्यमात्रं तदा नीलार्थी पीतेऽपि प्रवर्त्तेत, यद्वा न कुत्रचिदपि, विशेषानवधारणात्, अथ विशेषः स नीलपरमाणुप्रतिभासे सति नीलस्येदं न पीतस्येति प्रतिभासेत, तेषां च भिन्नस्वरूपाणां प्रतिभासानभ्युपगमे तेषां स्थौल्यमपि न प्रतिभासेत, न चैवं, ततः परमाणव एव विततदेशास्तथाऽवभान्ति नान्यत्किञ्चिदिति' तदपि प्रत्युक्तं। तथा भिन्नरूपता तु प्रतिभासत एवेति यदुच्यते तत्र कथं सा प्रतिभासते ?, किं कथञ्चित् ? किं वा सर्वथा ?, प्रथमपक्षे नो नो बाधा, द्वितीयपक्षस्तु न सङ्गतिक्षमः, यतः सर्वथा यदि भिन्नरूपता प्रतिभासते तदा सर्वेऽपि परस्परमसाधारणमाकारमाबिभ्राणाः परमाणवः प्रतिपन्ना इति कथमेष स्थूरानुभवः प्रवर्त्तेत ?, अस्य साधारणरूपोल्लेखितया संवेदनात्, केशकलापप्रतिभासोऽपि कथञ्चित्केशानां तद्रूपतया परिणामात्। किञ्च–येन केनचित् कदाचित्स्थूलाकारः प्रतिपन्नो भवति सोऽन्यत्रासन्तमपि कुतोऽपि विभ्रमात्तमध्यारोपयतीति भिन्नेष्वपि कदाचिदेकरूपताप्रतिभासः प्रादुःष्यात्, सर्वथा तु तदप्रतिपत्तावनुपपन्नोऽयमिति सम्यग्विभाव्यतां, किं वा बहुजल्पितेन ?, न साधारणाकारपरिणामव्यतिरेकेण परस्यापि किञ्चित्समञ्जसमित्ययमभ्युपेयः, तस्मात्परमाणव एव प्रतिभान्तीति नास्ति, तदुक्तं–" नैतदस्ति यतो नास्ति, स्थौल्यमेकान्ततस्ततः। भिन्नमस्ति समानं तु, रूपमंशेन केनचित् ॥१॥" यदेव तेषां केनापि प्रकारेण समानं रूपमयमेव जैनाभिमतोऽवयवीति तस्यानुपलभ्यमानत्वमसिद्धमित्यसिद्धो हेतुः, वस्तु च सर्वं सामान्यविशेषात्मकं अतस्तद् यदा तथा

क्षयोपशमवशादुपसर्जनीकृतविशेषं प्रधानीकृतसामान्यं च प्रतीयते तदाऽस्पष्टरूपतया प्रतिभाति, यदा तूपसर्जनीकृतसामान्यं प्रधानीकृतविशेषमाभाति तदा स्पष्टरूपतया प्रतिभासते, न पुनरेतयोः सर्वथा भेद एवाभेद एव वाऽस्ति केवल इति, तथाहि–यदेवास्पष्टरूपतया मयोपलब्धं तदेवेदानीं स्पष्टतया प्रतिभातीत्यनुभवस्तावत्प्रवर्त्तते, न च यद्यपरिस्फुटरूपतया परिस्फुटमवगम्यते तदाऽपरिस्फुटरूपसम्बन्धित्वमेव स्यादित्याद्यपि दूषणं, कथञ्चिदेवाभेदप्रतिभासनात्, तस्मादत्र व्यर्थमेव परो विजृम्भते, यदप्युक्तं 'किं कतिपयावयवप्रतिभासे सत्यवयवी प्रतिभातीत्युपगम्यते किं वा समस्तावयवप्रतिभास ?'इत्यादि, तदपि न सुन्दरं, यतो यावत्स्वेवावयवेषु प्रतिभासमानेष्ववयविविषयं संवेदनमुदयपदवीमासादयदनुभूयते तावत्स्वेवावयवेषु प्रतिभासमानेषु स प्रतिभासत इति ब्रूमः। तथाहि–जलमग्नमहाकायस्तम्भादेरुपरितनकतिपयावयवावलोकनेऽपि स्तम्भोऽयमुपलभ्यत इति व्यवहारः प्रतिपाणि प्रसिद्धः, यः पुनर्मध्यपरभागवर्त्तिसमस्तावयवप्रतिभासासम्भवेनावयविनोऽप्रतिभासनप्रसङ्गः स न युक्तः, मध्यपरभागवर्त्तिनामवयवानां सर्वथैवाप्रतिभासासम्भवात्, सन्ति परत्रापि केचिद्विभागाः इत्येवं मुकुलितरूपतया तेषामपि प्रतिभासात्, 'तथाऽर्वाग्भागभाव्यवयवग्राहिणा प्रत्यक्षेण परभागभाव्यवयवाग्रहणमिति तेन तद्व्याप्तिरवयविनो ग्रहीतुमशक्ये'त्याद्यपि न शोभनं, कथञ्चिदर्वागवयवग्राहिणाऽपि प्रत्यक्षेण परभागभाव्यवयवव्यापिनोऽवयविनः प्रतिभासनात्, तथा क्षयोपशमवशादेवमवभासप्रसूतेः, तेन यस्मिन्नवभासमाने यन्न प्रतिभासते तत्ततो भिन्नं, यथा घटादप्रतिभासमानः पट इत्यादि साधनमप्यसङ्गतं परस्य, कथञ्चिदर्वागवयवव्याप्यवयविग्राहिणाऽपि प्रत्यक्षेण परभागभाव्यवयवव्यापिनोऽवयविरूपस्य ग्रहणात्, तदेकाकारतया तेषां कथञ्चिदेकत्वादिति। कथञ्चित्तु भेदः समस्त्येवेति तदयमवयवी यथा दर्शितोऽस्माभिस्तथा कथं नाभ्युपगमार्हः ?। यच्च 'अवयव्यवयवेषु वर्त्तमानः सामस्त्येन वा वर्त्ते-

तैकांशेन वे'त्यादि दूषणं तन्नैयायिकादीन् प्रति विराजते, किञ्च–एकमपि चित्रपतङ्गादिसंवेदनमनेकविरुद्धाकारयोगि प्रतिपद्यते, अन्यत्र पुनर्विरुद्धधर्माध्यासाद्भेदमिच्छति किमिदमस्य प्रमाणकौशलमिति सुधियो विभावयन्तु। केवलभेदाभेदपक्षोऽप्यत्रयवावयविनोर्नेष्ट इति तत्प्रदर्शितदूषणमपि न नः क्षतिमावहति, परमाणूनां च दिक्षट्कसम्बन्धेन षडंशतापत्तिदूषणं पूर्वोक्तोपपत्त्या परिहर्त्तव्यमिति सिद्धो बाह्योऽर्थ इति, ततो यदि ज्ञानमात्रमुपलब्धिस्तदाऽर्थस्यावस्तुत्वप्रसङ्ग इत्यव्याप्तिः, अथ ज्ञानविषयता उपलब्धिः सा सत्तेति नार्थस्यावस्तुत्वप्रसङ्गः, तर्हि तस्य ज्ञानविषयता नोत्पादव्ययध्रौव्यव्यतिरेकेण संभवति, तद्भावे संभवन्ती तस्यैव वस्तुलक्षणत्वमावेदयतीति न समुदितोत्पादव्ययध्रौव्ययोगितामन्तरेणापरं वस्तुलक्षणमुपपद्यत इति॥ एतत्सर्वं चेतसि निधायाह—

**न यत् सत्ताऽभिसम्बन्धान्न शक्तेर्नोपलब्धितः। विनोत्पादव्ययध्रौव्यैर्वस्तुत्वमुपपद्यते ॥ ३ ॥**

यस्मात् सत्ताभिसम्बन्धात्, शक्तेर्वाऽर्थक्रियां प्रति, उपलब्धेर्वा सकाशात् उत्पादव्ययध्रौव्यैर्विना वस्तुत्वं नोपपद्यते ततस्तद्योगविकलं यत् तादृशं यदि परं शशशृङ्गादिरूपमेव भवतीति पूर्वश्लोकेन सम्बन्धः॥ इदानीमुत्पादादिस्वरूपं निरूपयति, तथाहि–

**उत्पादो वस्तुनो भावो, नाशस्तस्य व्ययो मतः। ध्रौव्यमन्वितरूपत्वमेकं नान्योऽन्यवर्जितम् ॥४॥**

वस्तुनो भावः उत्पादः, व्ययो–विनाशः, अन्वितरूपत्वं च तद् ध्रौव्यं, तदिदमुत्पादादित्रयमन्योऽन्यरहितं न संभवति, तत्र 'उत्पादो वस्तुनो भावः'इत्यनेन यत्कस्यचिन् मतं कारणसमवायः(सत्ता का)र्यं तु तदेव क्रियते प्रत्ययार्थ इति तत्प्रतिक्षिप्यते, सत्तासमवाययोर्नित्यत्वेन कार्यनित्यत्वप्रसङ्गात्। प्रध्वंसे च(तदननु गमा)द्विश्वीकरणाधीनस्वा(त्मत्वात्), कार्यत्वमित्यनेन सत्परिणामानभ्युपगमे तदनुपपत्तेरिति वक्ष्यामः, प्रतीत्यसमुत्पादरूप उत्पाद इत्यप्यसुन्दरमिहैव निराकरिष्यमाणत्वात्, तस्माद्वस्तुनो भाव-

स्तथापरिणामापत्तिलक्षण उत्पादः, यतो वस्तुनो भाव इति कर्त्तरि षष्ठी, वस्त्वेव सत् कार्यरूपतया भवति-वस्तुसत्तैव कार्यसत्ता-रूपतां प्रतिपद्यत इत्यर्थः, द्रव्यस्यैव तत्पर्यायरूपतया भावात्, तदनेन पूर्वभवनभूतान्यथाभूतभवनात्मक एवायमुत्पाद इत्यावेद्यते, एतदुपरिष्टात्प्रसाधयिष्यामः। तथा 'नाशस्तस्य व्ययो मत' इत्यनेनापि यत्सुगतसुता व्यावर्णयन्ति यथा-"न तस्य किञ्चिद्भवति, न भवत्येव केवलम्।" इति तदपास्तं, यदि हि किञ्चिदपि तस्य न भवति तर्ह्यक्षतमेव तद्वस्तु स्यादिति प्रबन्धेन प्रतिपादयिष्यते, वस्तुनोऽत्यन्तभिन्नः प्रध्वंसनामाभावो विनाश इत्यप्यबुधजनमनोहारं, यदि नाम भावव्यतिरिक्तमपरमभावनामकं वस्त्वन्तरमुत्पन्नं तदा भावस्य किमागतं ? येन स नश्येत्, इहापि विस्तरमभिधास्यामः, यस्य वस्तुन उत्पादः पूर्वमुक्तस्तस्यैव पूर्वरूपाभवनात्मकोत्तररूपतापरिणामलक्षणो विनाशो व्ययः, तत्तद्भेदे च तस्येति सञ्ज्ञायोगः, वस्त्वेव व्येति-पूर्वरूपादपगच्छति, रूपान्तरमवलम्बमानेन तेन पूर्वपर्यायात्मना स्वयमेव व्यावर्त्तनात्।'ध्रौव्यमन्वितरूपत्व'मित्यत्रापि 'वस्तुनः'इति योजनात् वस्तुन एव यदन्वितरूपत्वं पूर्वापरपर्यायाभ्यां कथञ्चिदेकस्वभावत्वं तद् ध्रौव्यं, तेन अपरापरप्रत्यययोगेन प्रतिक्षणं भिन्नशक्तयः संभवंतः संस्कारा यद्यपि कुतश्चित्साम्यात्सरूपाः प्रतीयन्ते तथाऽपि भिन्न एवैषां स्वभाव इत्यभिप्रायाद्भ्रान्तिमात्रावस्थापितमेव ध्रौव्यमिति ये मन्यते ते निरस्ताः, कथञ्चिदन्वयस्य सूपपादत्वात्, अत एवेदं त्रयमन्योऽन्यवर्जितं न संभवति, एवं तावत्पर्यायास्तिकनयवादिमतमाक्षिप्य श्लोकोऽयं व्याख्यातः॥ सम्प्रति द्रव्यास्तिकनयवादिमतमाक्षिप्य व्याख्यायते,तत्र सुखावगमाय तावत्तन्मतमुपवर्णयामः-तन्मते न किञ्चिदसदुत्पद्यते नापि सद् विनश्यति,तदुक्तम्-"असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥१॥"एवं पञ्चभिर्हेतुभिः सत्कार्यवाद एव तद्वादिभिः समर्थितः, तथाहि-यदसत्तन्न केनापि क्रियते, यथाऽऽका-

शकुसुमं, असच्च परमते कारणावस्थायां कार्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः, न चैवं, तस्मात्सत्कारणे कार्यमिति। तथोपादान-ग्रहणादिति, उपादानं-कारणं तस्य नियतस्यैव ग्रहणं, अन्यथा सर्वस्यैवाविद्यमानत्वाविशेषाद् ग्रहणं स्यात्, न चैवं, अतः सत्कार्य-मिति। तथा सर्वसम्भवाभावादिति, सर्वस्मात्सर्वं न कार्यमुत्पद्यते, पूर्वं कारणाश्रयणेन प्रसङ्ग उक्तः, सम्प्रति तु कार्यमाश्रित्येति वि-शेषः, न च सर्वं सर्वतो भवति, तस्मादयं नियमः-तत्रैव भावादिति (न) सर्वस्मात्सर्वं कार्यमुत्पद्यते पूर्वं। तथा शक्तस्य शक्यकरणा-दिति, यद्यप्यसत्कार्यवादिभिर्नियतमेव कारणं नियतकार्यकरणशक्तिकमुपेयते तथाऽपि शक्यमेव करोति, यच्च नीरूपं तदनाधेया-तिशयं, तथाभूतं च कथं केनचित्कर्तुं शक्येत ?, तस्मात्सदेव शक्यते कर्तुं, नासदिति। तथा उक्तन्यायादसत्कार्यं न किञ्चित्कारणं स्यात्, अस्ति च कारणं, तदाह-कारणभावाच्च सत्कार्यमिति, तदेतदसत्, एवं हि न कार्यकारणे स्यातां, नहि यद्यतोऽव्यतिरिक्तं तत्तस्य कार्यं कारणं चेति व्यपदेष्टुं युक्तं, कार्यकारणयोर्भिन्नलक्षणत्वात्, अन्यथा हीदं कारणमिदं कार्यमिति व्यवस्था न स्यात्, मा भूदिति न वाच्यं, अभ्युपगतप्रकोपप्रसङ्गात्, तथाहि-मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥१॥ इत्यभ्युपगमः संबाध्यते, सर्वेषां हि कार्यत्वं कारणत्वं वा प्रसज्येत, यद्वा पुरुषवदप्रकृतिविकृतित्वं सर्वेषां स्यात्, पुरुषस्य वा प्रकृतिविकृतित्वं प्रसज्येत, तदसम्बद्धमिदं, उक्तञ्च-"यदेव दधि तत्क्षीरं, यत्क्षीरं तद्दधीति च। वदता विन्ध्यवासित्वं, ख्यापितं विन्ध्यवासिना ॥१॥" तथा-"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥१॥" इति वचनाद्धेतुमत्त्वादिधर्मासङ्गि व्यक्तं अव्यक्तमन्यदिति यदुक्तं तदपि बाध्येत, न हि यद्यतोऽव्यति-रिक्तं तत्ततो विपरीतं युक्तं, रूपान्तरलक्षणत्वाद् वैपरीत्यस्य, सत्त्वरजस्तमसां चैतन्यस्य च भेदेऽन्यनिमित्ताभावात्, ततश्च न भेदः,

सर्वविश्वमेकं द्रव्यं स्यात्, सहोत्पत्तिप्रसङ्गश्च भवेत्, अथ नापूर्वरूपोत्पत्त्या कार्यकारणत्वमभ्युपगम्यते येन रूपोद्भेदे तद्विरुध्येत, किन्तु प्रधानं महदादिरूपेण परिणमति, यथा सर्पः कुण्डलादिरूपेणेति, ततो रूपोद्भेदेऽपि कार्यकारणव्यपदेशो न विरोधमनुभवति, तदसत्, कथञ्चिदुत्पादविनाशाभावे परिणामासिद्धेः, ननूत्पादो नामाविर्भावमात्रं, विनाशोऽपि तिरोभावमात्रमेव, आविर्भावतिरोभावमात्रमेव च परिणाम इति केवलध्रौव्यसिद्धिः, तदसम्यक्, यतः कोऽयमाविर्भावः ?, तावत् किं स्वभावातिशयोत्पत्तिः ? उत तद्विषयं विज्ञानं ? यद्वोपलंभावरणविगमः ?, तत्र न तावदाद्यः पक्षः, यतः स्वभावातिशयो यद्यसन्नुत्पद्यते तदा कथं सत्कार्यवादः ?, अथासत् तदा नाविर्भावः, अथ तस्यापि काचिदवस्था पश्चाद्भवति, ननु साऽप्यवस्था यदि सती कथं भवति ?, अथासती तदा कथं नापूर्वविधिः ?, तथाप्यवस्थान्तराभ्युगगमेऽनवस्था, तन्न स्वभावातिशयोत्पत्तिराविर्भावः, नापि तद्विषयं विज्ञानं, नित्यत्वोपगमात्, तथाहि भवतां सिद्धान्तः संवादासर्गप्रलयमेकैव बुद्धिः, न च न बुद्धिस्वभावा तद्विषया वित्तिः, किन्तु मनःस्वभावेति वाच्यं, बुद्धिरुपलब्धिरध्यवसायो मनः संवित्तिर्विज्ञानमित्यर्थान्तरत्वात्, तन्न तद्विषयज्ञानमप्याविर्भावः, नाप्युपलम्भावरणविगमलक्षणः, न ह्यनाधेयानपायस्वरूपस्य नित्यस्यावरणं किञ्चित्, भवतु वा, तद्धि सद्वा स्यात् असद्वा ?, यद्यसत् कथं तस्य विगमः ? सत एव तस्य विगमरूपत्वात्, विगमरूपस्यावारकत्वे न कदाचिदुपलम्भः स्यात्, अथ सत्तदाऽपि कथं तस्य विगमः?, नहि भवन्मतेन किञ्चिद्विनश्यति, तिरोभावमात्रमेव विनाश एत्यत्रापि कोऽयं तिरोभावः?, किं स्वरूपविनाशः? पर्यायविनाशो वा ? किं वाऽऽवरणयोगो विज्ञानानुत्पादकत्वं वा ?, तत्र न तावत्स्वरूपपर्यायविनाशौ, अनभ्युपगमात्, नाप्यावरणयोगोऽविचलितरूपस्यावरणायोगात्, अकिञ्चित्कुर्वाणस्यावरणत्वायोगात्, अन्यथा जगतोऽपि प्रसङ्गात्, करणे वा नित्यताहानेः, विज्ञानानुत्पादकत्वमप्ययुक्तं,

येन हि स्वरूपेण ज्ञानमकार्षीत् तस्य विद्यमानत्वात्, सहकारिणोऽकिञ्चित्करत्वेन निरस्तत्वात् ॥ तस्मादुत्पादव्ययावपि यथा प्रामाणोपपन्नौ तथा दर्शयति–'उत्पादो वस्तुनो भावः' इत्यादि, वस्तुनो भाव उत्पादो, नाविर्भावमात्रं, व्ययः विनाशो, न तिरोभावमात्रं, तथाहि–मृदादि द्रव्यं घटादिपर्यायरूपेण परिणतमिति तेन तस्योत्पादः, कपालादिकाले च पूर्वरूपतया तन्निरुध्यत इति तन्नाशः, यदि त्वाविर्भावतिरोभावार्थोऽप्येवमेव तदा सङ्गतमेव, केवलमन्वितरूपत्वमेव, एवं सति ध्रौव्यमभ्युपगन्तव्यं वस्तुनः, न पुनरप्यच्युतानुत्पन्नस्थिरैकस्वभावतालक्षणं कूटस्थनित्यत्वमिति, अतोऽन्योऽन्यरहितमेतत्त्रितयं कथं नाम संभवेदिति ?, न चेह केनचित्कस्यचिद्विरोधः, अविनाभाविनि रूपे विरोधाभावात्, तदाह—

**अविनाभावि यद्येन, न तत्तेन विरुध्यते । वृक्षत्वेनेव चूतत्वमिहाप्येवं व्यवस्थितिः ॥५॥**

यद्येनाविनाभावि रूपं तत्तेन न विरुध्यते, यथा वृक्षत्वेन चूतत्वम्, इहापि अन्यतररूपाभावेनैवान्यतररूपव्यवस्थितिरिति केन कस्य विरोधः ?। तत्र निम्बाम्रकदम्बादिव्यक्तिषु यत्कथञ्चित्साधारणं रूपं बहिर्मुखावभाससंवेद्यं प्रतिप्राणिप्रसिद्धं तद्वृक्षत्वमुच्यते, न पुनर्यथोक्तमर्चटेन, सामान्यव्यवहारोऽपि विजातीयव्यावृत्तानेव भावानाश्रित्य कल्पनासमारोपित एव प्रतन्यते, तेषामेव भिन्नानामप्यनुभवद्वारेण विजातीयव्यावृत्ततया प्रकृत्यैवैकाकारप्रत्यवमर्शहेतुत्वात्, तथा चाह–"एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधनाः । भेदेऽपि नियताः केचित्, स्वभावेनेन्द्रियादिवत् । १॥ इत्यवृक्षत्वव्यावृत्तिमात्रमेव वृक्षत्वमिति, यत एकार्थक्रियाकारिणः स्वभावेन भवन्तोऽपीन्द्रियादय एकं कार्यमेव जनयितुमीशते, न पुनरेकाकारतया संवेद्यंते, तस्मात्साधारणरूपनिबन्धनोऽयं वृक्षत्वाभासः, तदेतेन वृक्षत्वेन सहभूतत्वं तदसाधारणपरिणामरूपमविनाभावि सन्न विरुध्यते, यतो 'निर्विशेषं हि सामान्यं, भवेच्छशविषाणवत्।

विशेषोऽपि च नैवास्ति, सामान्येन विना कृतः ॥१॥ तदेवं यथाऽत्र न विरोधस्तथोत्पादादित्रयेऽपि, तदत्र यदुक्तमर्चटेनैव—उत्पादव्ययध्रौव्ययुक्तं सदित्ययुक्तं, ध्रौव्येणोत्पादव्यययोर्विरोधात्, कथञ्चिदुत्पादव्ययौ कथञ्चिद् ध्रौव्यमिति चेत् यथोत्पादव्ययौ न तथा ध्रौव्यं, यथा च ध्रौव्यं न तथोत्पादव्ययाविति, नैकं वस्तु यथोक्तलक्षणं स्यादित्यादि, तदपास्तं, ननु कथमिदमपास्यते ?, यावता यत्प्रकारव्यवच्छेदेन यद् व्यवस्थाप्यते न तत्र व्यवच्छिन्नप्रकारसम्भवः, अत्र प्रयोगः—यत्प्रकारव्यवच्छेदेन यद्व्यवस्थाप्यते न तत्र तदन्यप्रकारसम्भवः, तद्यथा नीलप्रकारव्यवच्छेदेनानीलप्रकारव्यवस्थायां पीते, अस्ति चोत्पादव्ययव्यवच्छेदेन ध्रौव्यव्यवस्थापनं, ध्रौव्यव्यवच्छेदेन चोत्पादव्ययव्यवस्थापनमिति तन्नामीषामेकत्र सद्भावः, तथाहि—उत्पादो वस्तुनो भावो व्ययो विनाशः अन्वितरूपत्वं च ध्रौव्यमिति भिन्नमेवोत्पादादीनां स्वरूपं भवद्भिरपि व्यवस्थापितमिति, तदेतदयुक्तं, यतो नैकान्तोत्पादव्ययावेकान्तध्रौव्यं वा किञ्चिदभ्युपगतमस्माभिः, किन्तु स्याद्वादमकलङ्कमतिसमुत्प्रेक्षितमाश्रित्य कथञ्चिदेव तद्व्यवस्थापनमङ्गीकुर्महे, ततः कुतः परप्रतिपादितदूषणानामवसरः ?, एकान्ताभ्युपगमे ह्युत्पादव्ययध्रौव्याणां यथोक्तो व्यवच्छेदः संभवति, अन्यथैकान्तायोगात्, परमयमस्माकमप्रसङ्गः, स्याद्वादाश्रयणात्तु नान्यव्यवच्छेदेनेहान्यव्यवस्थापनं यतो यत एव तद् ध्रौव्यमुत्पादव्ययानुविद्धमत एव तत्कथञ्चिद् ध्रौव्यं उत्पादव्ययावपि, यत एव ध्रौव्यानुविद्धावत एव तौ कथञ्चिदुत्पादव्ययाविति। ननु कोऽयमनुवेधो नाम ?, किमभेदः ? किं वा भेदः ? किं वा भेदाभेदः ? इति, अभेद एकरूपतैव, अन्यथा तदयोगात्, भेदे तु भिन्नमेव रूपद्वयमापनीपद्यते, भेदाभेदपक्षस्तु विरोधव्याहत इति, असदेतत्, अभिप्रायापरिज्ञानात्, यतो यदेतद् ध्रौव्यमप्रच्युतानुत्पन्नस्थिरैकरूपं न भवति, अपि तु परिणामात्मकं, तदुत्पादव्ययावप्युच्यते, न पुनस्ताावितो व्यतिरिक्तावेव कौचिदपि स्तः, अत एवोत्पादव्ययावपि यौ तौ

उत्पादाद्य-
विरोधः

नात्यन्तिकौ, किन्तु वस्तुन एव परिणामात्मकौ तौ ध्रौव्यमप्युच्यते, न पुनस्तदपि किञ्चिदेतद्व्यतिरिक्तमस्तीति, तदेवं या यथोक्तरूपता वस्तुनः सोऽयमनुवेधः, न पुनरत्र भिन्नस्य कस्यचिद्रूपस्याभेदापादनमत्यन्तभेदो वा, ईदृशं च तद्भेदाभेदेन व्यपदिश्यते, कुतीर्थिकाभिप्रायप्रतिक्षेपाय। कुतीर्थिका हि ध्रौव्यं कूटस्थनित्यतां उत्पादमत्यन्तासत एवाकस्मिकमात्रलाभं व्ययं च निरन्वयोच्छेदरूपमिच्छन्ति ततस्तन्मतव्युदासाय यथोदितं वस्तुतत्त्वमुपदर्शयितुमेष व्यवहारः प्रवर्त्तितो विद्वद्भिः, न पुनरत्राभेदो भूत्वा कश्चिद्भेदो भवति, भेदो वा कश्चिदभेदरुपतां प्रतिपद्यत इति, तस्मादसिद्ध एवात्र परोदितो हेतुः,यथोक्तोत्पादव्ययध्रौव्याणामन्योऽन्यव्यवच्छेदेन व्यवस्थापनाऽसम्भवात्, अत एव यथोत्पादव्ययौ न तथाऽस्ति ध्रौव्यमित्याद्यपि प्लवते, यथोत्पादव्ययौ तथैव यथोक्तं ध्रौव्यं, यथैव च तद् ध्रौव्यं तथैव यथोक्तावुत्पादव्ययौ,यदेव ध्रौव्यं तावेवोत्पादव्ययौ ,यावेवोत्पादव्ययौ तदेव ध्रौव्यं,तर्हि 'उत्पादो वस्तुनो भावः' इत्यादिना कथं भिन्नं स्वरूपमेषामुपदर्शितं ?, न, तत्रापि सर्वथा भेदाप्रतिपादनात्, तत्र हि यथोक्तं ध्रौव्यमेव यदोत्तररूपप्राधान्येन विवक्ष्यते तदोत्पादो व्यपदिश्यते, पूर्वरूपाच्च व्यावर्त्तमानं तदेव व्ययाख्यामासादयति, तदा तत्प्राधान्येन विवक्षणात्, यतश्चैतावुत्पादव्ययावीदृशावेव न पुनरत्यन्तासत उत्पादः सतो वा निरन्वयो विनाशस्ततस्तावेव परस्परं कथञ्चिदन्वयप्राधान्येन विवक्षितौ ध्रौव्यमुच्यते, यथोदिते च वस्तुतत्त्वे व्यवस्थिते तथा तथा क्षयोपशमद्वारेणार्थित्वादिवशात्तथा तथा व्यवहारः प्रवर्त्तत इति सिद्धोऽमीषामविनाभावः। ननु किमिति यथोक्तन्यायेनैवोत्पादव्ययध्रौव्याणि व्यवस्थाप्यन्ते, न ह्यत्र किञ्चित्प्रमाणं विद्यते, नाप्येतद्विपर्यये बाधकं, तस्मादत्यन्तासत एव भाव उत्पादः, निरन्वयोच्छेद एव विनाशः, अप्रच्युतानुत्पन्नस्थिरैकरूपतैव ध्रौव्यमित्यपि परिकल्पनमनेन न केनचिद्दण्डवारितं, ततः कथमत्राविनाभावः ? इति चेत्, उच्यते—

नासतः सर्वथा भावो, न नाशः सर्वथा सतः। नान्वयोऽपि विनैताभ्यां, प्रमाणे प्रतिभासते ॥६॥

न सर्वथैवासत उत्पादः, नापि सतः सर्वथा नाशः, न वा विनोत्पादविनाशाभ्यामन्वयो ध्रौव्यापरनामा प्रमाणे प्रतिभासते, प्रमाणप्रतिभासाधीना च प्रतिभासस्य व्यवस्था, अन्यथा स्वतन्त्रं प्रतिभासः स्यात्, ततः प्रमाणविचारणमनर्थकं भवेत्, यथाकथञ्चिदेव तद्व्यवस्थापत्तेः, तस्मात्प्रमाणाधीनैव तद्व्यवस्था, ततश्चायमभिप्रायः–उत्पादादय एव प्रमाणे न प्रतिभासन्त इति तावन्नास्ति, किं तर्हि?, यथा परैस्ते प्रतिपन्नास्तथा न प्रतिभासन्ते,अपि तु यथाप्रदर्शितन्यायेन,बहिरन्तश्च तथैवानुभवप्रवृत्तेः,तथाहि–अन्तस्तावदेकमेव संवेदनं भिन्नकालभाविहर्षविषादादिस्वभावाक्रान्तमनुभूयते, बहिश्चैकमेव घटादिवस्तु नवपुराणादिविचित्रस्वभावाध्यासितशरीरं, न पुनर्यथा परे प्राहुस्तथा तैरपि तत्कदाचित्स्वप्नकालेऽप्यनुभूतं, केवलं सकलानुभवविरोधिनीं जलकल्लोलविकल्पकल्पां केवलां शुष्कतार्किककूटकल्पनामेवाश्रित्य स्वदर्शनानुरागितया तथोत्पादादिरूपं तद्व्यवस्थापितं, तस्मादसदभिमतप्रकारेणोत्पादादयोऽनुभवसिद्धा एव, अनुभवश्च प्रत्यक्षादिप्रमाणरूप इति नात्र न प्रमाणं,विपर्यस्तकल्पनामप्येतदेव बाधते,तथाहि–यन्नाम यथा प्रमाणेन परिदृष्टं तत्तदन्यथाऽपि कल्पनां कथमर्हति?, एवं हि सर्वं सर्वात्मकं भवेत्, तस्मात्प्रमाणं यत्र प्रवर्तते तत् परिच्छिनत्ति तदन्यद्व्यवच्छिनति प्रकारान्तराभावं च ख्यापयति, धर्मकीर्त्तिनाऽप्युक्तं–'तस्मात् क्वचित्प्रमाणं प्रवृत्तं तत्परिच्छिनत्ति तदन्यद्वा व्यवच्छिनत्ति तृतीयप्रकाराभावं च सूचयतीत्येकप्रमाणव्यापार एष' इत्यादि। ततश्च वस्तुरूपे परोक्तप्रकारेणोत्पादादयो जैनोक्तोत्पादादिरूपग्राहिणैव प्रमाणेन प्रतिषिध्यन्ते, ततस्तदेव तत्र विपर्यये बाधकं प्रमाणं, किञ्चित्क्वचिदपि प्रमाणे यद्यप्रतिभासमानमपि परिकल्प्येत न किञ्चिदिदानीं न कल्पनीयमित्यायातोऽयमुपप्लवः समस्तस्यापि जगतः, तस्माद्यत्किञ्चिदपि प्रमाणे न प्रतिभासते न तत्प्रेक्षाव-

उत्पादादौ प्रामाण्यं

द्भिरभ्युपगन्तव्यं, यथा नभःकुशेशयं, न प्रतिभासन्ते क्वचिदपि प्रमाणे परोक्तप्रकारेणोत्पादादय इति व्यापकानुपलब्धिरपि तद्बाधिका। यदि चैवमपि न परेषां व्यामोहविगमस्तदा प्रमाणान्तरमपि यथाऽवसरमुपदर्शयिष्यत इत्यलं प्रसङ्गेन। इति समुदितोत्पादादिविचारः। तत्रैतावतैव येषां यथाऽवस्थितवस्तुतत्त्वागमः प्रवर्त्तते तान् प्रति नापरः प्रयासः प्रतन्यते, ये पुनर्निबिडजडजडिमावष्टब्धान्तःकरणा गाढतरकदाग्रहग्रस्तमतयो नैतावताऽद्यापि सम्यग् वस्तुतत्त्वं ग्राहयितुं शक्यन्ते तानधिकृत्य विशेषमभिधित्सुरुत्पादो वस्तुनो भाव इत्याद्युद्देशक्रममेवाभिसन्धाय उत्पादमेव केवलं तावद्विचारयितुमाह—

**उत्पादो यदि दृष्टत्वादिष्टः प्रामाणिकैः परैः। तद्रूपपरिणामोऽयं, तदेष्टव्यस्ततो न किम्? ॥७॥**

यदि प्रमाणमनुसरद्भिः परैर्दृष्टत्वादुत्पादो मतः तदा द्रव्यस्य विवक्षितरूपेण परिणमनस्वभावोऽयमेष्टव्यः, न हि तद्रूपपरिणामव्यतिरेकेणाकस्मिकं किमपि रूपमुत्पादस्वभावमनुभूयते, किन्तु तदेव द्रव्यं तेन तेन रूपेण परिणमदुपलभ्यते, ततो नात्यन्तमभिन्नं भिन्नं वा घटादि कार्यं प्रतीयते, नन्वनन्तधर्मपरिकरिते वस्तुन्येकदेशमवलम्बमानाः सर्वेऽप्येकान्तवादिनो नयवादिन एव, यदुक्तम्–"एकदेशविशिष्टोऽर्थो, नयस्य विषयो मतः।" (न्यायावतारे) ततः कथमुक्तं "प्रामाणिकैः परैः" इति?, अद्यापि यदि परमार्थश्चिन्त्यते तदा सम्यग् नयवादिनो ते न भवन्ति, शेषधर्मोपादानहानोदासीनया धिया स्वाभिमतधर्मव्यवस्थाप्रधानाभिप्रायवतामेव सम्यग्नयवादित्वात्, शेषधर्माप्रतिक्षेपे तदभिप्रायस्य कथञ्चित्सविषयत्वात्, ये तु शेषधर्मप्रतिषेधेन स्वाभिमतमेवैकं धर्मं व्यवस्थापयितुमुत्सहन्ते न ते सम्यग्नयवादिनः, निर्विषयत्वात् तदभिप्रायस्य, शेषधर्मप्रतिक्षेपे तद्गोचरस्यापि धर्मस्य स्वरूपाप्रसिद्धेरित्यन्यत्र सुचर्चितं, परमेवं परमार्थमनादृत्य यदि पुनरनुकूलभाषणादुत्सारितमत्सराः सम्यग्विचाराभिमुखां धियमाधाय यथोक्तं

वस्तुतत्त्वमेते प्रतिपद्यन्ते इत्यभिसन्धानवता पराभिप्रायमेव पुरस्कृत्यैवमुक्तं, परे ह्येवं मन्यन्ते यथा न नः क्वचिदपि किल कदाग्रहः, किन्तु प्रमाणाधीना वस्तुव्यवस्था, ततो यद्दृष्टं तदिष्यत एव प्रामाणिकैः, यथोत्पादः, प्रयुक्तं धर्मकीर्त्तिना कार्यहेतौ— कार्यकारणभावसिद्धिः, यथेदमस्योपलम्भे उपलब्धिलक्षणप्राप्तमनुपलब्धमुपलभ्यते, सत्स्वप्यन्येष्वस्याभावे न भवतीति, यस्तद्भावे भावस्तदभावेऽभावश्च प्रत्यक्षानुपलम्भसाधनः कारणभावस्तस्य सिद्धिः, कार्यकारणभाव एव ह्यर्थान्तरस्यैवं स्याद्, यत्र धूमस्तत्राव-श्यमग्निः, अग्निभाव एव हि भावो धूमस्य तत्कार्यत्वमिति, तद्भावश्च तदुत्पाद एव। शान्तरक्षितोऽप्याह—"यः प्रतीत्यसमुत्पादं, जगाद जगतांवरः। तं सर्वज्ञं प्रणम्यायं, क्रियते तत्त्वसङ्ग्रहः ॥१॥" तदयमुत्पादो दृष्टः सन् केन नेष्टः?, यदि हि कश्चिदपग्रहो भवति तदा प्रमाणपरिदृष्टमपि न प्रामाणिकैरुपगम्यते, ततस्त एवंवादिनः स्वाभिप्रायपुरस्कारपुरस्सरमेव स्याद्वादरीत्योत्पादस्वरूप-मेवं ग्राह्यन्ते—किञ्चिद्विरूपमुपलब्धिलक्षणप्राप्तमनुपलब्धं कस्यचित्सन्निधावुपलभ्यत इति यदि तदा तस्योत्पादस्तदेदमपि निरूपणीयं— किमुपादानकारणादत्यन्तव्यतिरेकि तदाकस्मिकं किमपि रूपमुपजायते? किं वा कारणमेव तदात्मना भवतीति?, तत्र यदि यथा दृष्टं तथाऽभ्युपगम्यते तदा नाकस्मिकं किमपि रूपं तत्र भवदुपलभ्यते, किन्तु कारणमेव कार्यरूपतां प्रतिपद्यमानमनुभूयते, तथा च प्रतिप्राणिप्रसिद्धस्तवापि कुतर्ककूटकल्पनानिर्मितसंस्कारमात्रादन्यत्र प्रत्यक्षादिप्रमाणव्यापारमपेक्ष्य मृत्पिण्डं घटं करोति सुवर्णं कुण्डलं विदधातीत्यादिव्यवहारोऽनुभवपथमवतरत्येवेति। यदपि किञ्चिदुपलब्धिलक्षणप्राप्तमनुपलब्धं रूपं कदाचिदुपलभ्यते तदपि प्राक् सर्वथा नोपलब्धमिति न संगच्छति, यतो यदेतद् घटादि पूर्वं तन्न मृदादिव्यतिरेकि किञ्चिदिष्यते, मृदादिरूपं च प्रागप्युपलब्धमिति कथमनुपलम्भः कार्यस्यैकान्तेन?, कथञ्चित्तु स्यात्, सर्वथैव तदात्मना तदाऽस्याभावात्, धूमादावपि यदुपादान-

कारणं तद् यद्यपि प्रत्यक्षेण न तथा प्रतीयते तथाप्यनुमानेन तथा प्रतीतिमुपदर्शयिष्यामः, प्रतीत्यसमुत्पाद इत्यपि परिणामानभ्युपगमे वचनमात्रं, किमपि प्रतीत्य कस्यचिदनुपादात्।

**परिणामवादः**–नन्वयं परिणामो वस्तुनः किं पूर्वरूपापरित्यागेन स्यात् अपरित्यागेन वा?, प्रथमपक्षेऽवस्थानां सांकर्यं स्यात्, ततश्च वृद्धावस्थायामपि युवाद्यवस्थोपलभ्येत, द्वितीये तु सा न परिणामः स्यात्, पूर्वकं हि स्वरूपं निद्ध(विनष्ट)मपरं चोत्पन्नमपि कस्य परिणामः?, अपिच–तस्यैवान्यथाभावपरिणामो भवद्भिर्व्यवस्थाप्यते, स चैकदेशेन सर्वात्मना वा?, न तावदेकदेशेन, एकस्यैकदेशासम्भवात्, नापि सर्वथा, पूर्वपदार्थनिरासेन पदार्थान्तरोत्पादप्रसङ्गात्, अतो न तस्यैवान्यथात्वं युक्तं, तस्य स्वभावान्तरोत्पादनिबन्धनत्वात्, व्यवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरप्रादुर्भावसम्भवात्, तथाहि–यस्मिन्ननुवर्त्तमाने यो व्यावर्त्तते स ततो भिन्नः, यथा घटेऽनुवर्त्तमाने व्यावर्त्तमानः पटः, व्यावर्त्तते च धर्मिण्यनुवर्त्तमानेऽपि धर्मकलाप इति, कथमसौ परिणतो नाम?, यतो नार्थान्तरभूतयोः कटपटयोरुत्पादे विनाशे वा स्वरूपेणाविचलितरूपस्य घटादेः परिणामो भवति, अतिप्रसङ्गात्, तत्संबद्धयोर्धर्मयोरुत्पादविनाशात्, तस्यासावभ्युपगम्यते नान्यस्येति चेत् न, सदसतोः सम्बन्धासिद्धेः, तथाहि–सम्बन्धो भवन् सतो वा स्यादसतो वा?, न तावत्सतः समधिगताशेषस्वभावस्यान्यानपेक्षितया क्वचिदपि पारतन्त्र्यासम्भवात्, नाप्यसतः, सर्वोपाख्याविरहतया क्वचिदप्याश्रितत्वानुपपत्तेः, न हि शशविषाणादिः क्वचिदप्याश्रितमुपलभ्यते, न च व्यतिरिक्तधर्मान्तरोत्पादविनाशे सति परिणामो भवद्भिरभ्युपेयते, किं तर्हि?, यत्रात्मभूतस्वभावानुवृत्तिरवस्थाभेदश्च तत्रैतद्व्यवस्था, न चात्यन्तभेदे धर्माणामात्मभूतो धर्मोऽनुवर्त्तते, तन्न भेदे परिणामः कश्चित्, अभेदे तु धर्ममात्रं धर्मिमात्रं वा भवेदिति तत्रापि न कश्चित् परिणाम

इति, अत्र प्रतिविधीयते,तत्र यदुक्तं–'नन्वयं परिणामो वस्तुनः किं पूर्वरूपापरित्यागेन वा' तत्र कथञ्चित्परित्यागेन ब्रूमः, उक्तश्च–"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम्। न च सर्वथा विनाशः परिणामस्तद्विदा शिष्टः ॥१॥" तथा च पक्षद्वयेऽपि तद्दोषानवसरः। नन्वेवं परिकल्पनायां कष्टतरं व्यसनमापतितं, तथाहि–वृद्धावस्थायां बालाद्यवस्थाऽस्ति च नास्ति चेति तस्यामपि युगपदुपलम्भप्रसङ्गः स्याद्, विरुद्धं चैतत्, नहि तदेव तदानीमेवोपलभ्यते नोपलभ्यते चेति युक्तं, नैष दोषः,यतो नावस्था काचिदवस्थातुरत्यन्तमभिन्ना भिन्ना वा, किं तर्हि ?,भिन्नाभिन्ना, ततो वृद्धावस्थायामपि यथाऽसावस्ति तथोपलभ्यते,तदवस्थानुगतरूपस्यैव पूर्वावस्थात्मतयाऽपि भावात्, सर्वथा तु तद्रूपं पूर्वावस्थात्मनैव नास्तीति,उपलभ्यते नोपलभ्यते चेति कोऽत्र विरोधः ?,यदि हि वृद्धावस्थायां बालाद्यवस्था सर्वात्मनैव स्यात् तथैव च न स्यात्तदोपलम्भानुपलम्भावपि तत्र तथैव प्रवर्त्तमानौ विरुद्धौ स्यातां, न पुनरस्मदुक्तन्यायेन क्वचिदपि विरोधः, यदुक्तम्–'अपिच–तस्यैवान्यथाभावः परिणामो भवद्भिर्व्यवस्थाप्यत' इत्यादि, तत्र कोऽयमन्यथाभावोऽभिप्रेतः ?, किमात्यन्तिकः ? किं वा कथञ्चित् ?, तत्र यदि प्रथमः पक्षः कक्षीक्रियते तदाऽस्माकमनुपालम्भः, आत्यन्तिकमन्यथात्वमनुश्रित्यैतद्व्यवस्थाया एवानभ्युपगमात्, कथञ्चिदन्यथाभावस्तु स्यादेकदेशेन भवति स्यात्सर्वात्मना, तथाहि–घटोत्पत्तिकाले पिण्डकारापेक्षयैव मृद् अन्यथा भवति, न मृत्स्वभावापेक्षयाऽपि, अन्यथा घटस्यामृद्रूपत्वप्रसङ्गात्, घटान्तरमृदिव पिण्डमृदोऽत्यन्तविलक्षणा घटमृदपीति चेत् नात्र प्रमाणं, यथाहि घटान्तरमृद्रूपं तद्घटमृद्रूपाद्विभेदेनावभासते न तथा पिण्डमृदस्तद्घटमृदपि, तथाहि–एको घटः द्वितीयश्च घटः,ततस्तत्र नैकोऽपि द्वितीये स्वमाकारमर्पयन्नुपलभ्यते,स्वरूपमग्नयोरेव द्वयोरपि प्रतिभासनात्, इह तु पिण्डमृदेव घटात्मतां विशंती प्रतिभासते, तदेवेदमेवमापद्यत इति प्रत्यभिज्ञानोत्पत्तेः,न चेयमप्रमाणमिति (प्रामाण्यं तस्याः)वक्ष्यामः,

तस्मात्पिण्डापेक्षया(न मृदः)तदन्यथाभावः, न च निरंशैकस्वभावमेव वस्तु येन नोक्तप्रकारसम्भवः, स्यात्सर्वात्मनाऽपि अन्यथाभावे न किञ्चिदनुपपन्नं, यतो यद्देशापेक्षया तदन्यथा भवति न स दण्डायमानः केवल एव कश्चित्, मृत्स्वभावव्यतिरेकेण कस्यचित्पिडाकारस्यैवासम्भवात्, ततः पिण्डनिवृत्तौ मृत्स्वभाव एव कथञ्चिन्निवृत्त इति स्यात्सर्वात्मना तदन्यथाभावः, तर्हि मृत् कथं न पश्चादुपलभ्यते ? चेत् स्यादेव, तन्निवृत्तेः, तर्हि देशान्यथाभाव एवायं न सर्वात्मनेति चेत् स्यादेतत्, यदि स देशो देशिनो भिन्नः संभवेत्, तर्ह्यभिन्नः ?, तदपि नास्ति, तर्हि कीदृशोऽसौ ? इति चेत् भिन्नाभिन्न इति ब्रूमः ।

**भेदाभेदसिद्धिः**–कथञ्चिदन्यत्वं च न सर्वथा स्वभावान्तरोत्पादनिबन्धनं, कथञ्चित्स्वभावान्तरोत्पादे च युक्तमेव तदिति। ननु यथा स्वभावान्तरं यथा तदेव स्यात् यथा च न तथा नैवेति कथञ्चिदित्यन्धपदमेतत्, न, केवलभेदाभेदपरिहारेण जात्यन्तरात्मकभेदाभेदपक्षे तस्यैव सर्ववस्तुतत्त्वावबोधोत्पादे दिनकरकरालिकाकल्पत्वात्, केवलं विपरीतदृष्टिप्रसराः क्लिष्टप्रकृतयस्तदपि यद्यन्धपदं मन्यन्ते तदा किं कुर्मः ?, किमुलूकाः कदाचिदादित्योदयमतिमिरं प्रतिपत्तुमुत्सुहन्ते ?, अत एवोक्तमन्यत्रास्माभिरेव–"जिन ! त्वय्यादित्ये निहतनिखिलध्वान्त उदिते, सदो(दालो)को लोकः समजनि समग्रोऽपि भुवने । तथाऽप्येके क्लिष्टप्रकृतय इहोलूकसदृशाः, न जातोन्मेषा यत्किमयमपराधस्तव ? विभो ! ॥१॥" यद्यपि चायं भेदाभेदः 'नाभेदमेव पश्याम' इत्यत्रान्तरे सुप्रतिष्ठितः करिष्यते तथाऽपि किमपि तावदुच्यते, तत्र धर्मकीर्त्तिस्तावद्धेतुबिन्दौ[1] भेदाभेदं स्ववाचा समर्थयते स्म, तथाहि–तेन भिन्नस्वभावेभ्यश्चक्षुरादिभ्यः सहकारिभ्य एककार्योत्पत्तौ न कारणभेदात् कार्यभेदः स्यादिति चेदिति पूर्वपक्षमुत्पाद्य 'न यथास्वं स्वभावभेदेन तद्विशेषोपयोगतस्तदुपयोगः, कार्यस्वभावविशेषासङ्करात्, यथा मृत्पिण्डकुलालसूत्रादिभ्यो भवतो घटस्य

[1]=HB, p. 57, 18-26

मृत्पिण्डादमृत्स्वभावेभ्यो वृक्षादिभ्यो भिन्नः स्वभावः, कुलालात्तस्यैव मृदात्मनः सतः संस्थानविशेषात्मतया तदन्येभ्यो भिन्नः सूत्रात्तस्यैव मृत्संस्थानविशेषात्मनः चक्रादिभिर्विभक्तः स्वभावो भवति, तदेवं न कुलालान्मृत्स्वभावता न मृदः संस्थानविशेषः, न च तयोः शक्तिविशेषविषयभेदेऽपि तज्जनितविशेषभेदस्य कार्यस्य स्वभावभेदो, मृत्संस्थानयोरपरस्परात्मतया मृत्संस्थानविशेषाभ्यां तयोरप्रतिभासनप्रसङ्गा'दिति परिहार उक्तः, तथाऽपि कुतोऽपि मतिविभ्रमाद्भेदाभेदो न प्रतिपन्न इति न विघ्नः, अनेन हि परिहारेण भेदाभेद एव वस्तुप्रतिष्ठितः संपद्यते, कथमिति चेत्, उच्यते, मृत्पिण्डादमृत्स्वभावेभ्यो वृक्षादिभ्यो भिन्नः स्वभावः, कुलालात्तस्यैव मृदात्मनः संस्थानविशेषात्मतया तदन्येभ्यो भिन्नः, सूत्रात्तस्यैव मृत्संस्थानात्मकस्य सतश्चक्रादेर्विभक्तस्वभावो भवति, तदेवं 'न कुलालान्मृत्स्वभावता न मृदः संस्थानविशेष' इयताऽवयवेन तावत्कथञ्चिद्भेदोऽभिहितः, अत्यन्ताभेदे हि य एवामृत्स्वभावेभ्यो वृक्षादिभ्यो भिन्नः स्वभावस्तन्मात्रमेव संस्थानविशेषात्मता चक्रादिविभक्तात्मा च स्वभाव इति तद्वत्सोऽपि मृन्मात्रादेव स्यात्, न हि यद्यतो व्यतिरिक्तं तत्तदन्यकारणतो भवति,अत्र प्रयोगः–यद्यतो व्यतिरिक्तं तत्तदन्यकारणतो न भवति, यथा मृत्पिण्डादमृत्स्वभावेभ्यो वृक्षादिभ्यो व्यावृत्ते उपजायमाने स्वभावे तदात्मैव, अभिन्नं च संस्थानादि मृत्स्वभावादिति व्यापकविरुद्धोपलब्धिप्रसङ्गः,एवं संस्थानादावपि वाच्यम्, किञ्च–तदेवं न कुलालान्मृत्स्वभावता न मृदः संस्थानविशेष इति यः स्ववाचमुदीरयति तं प्रत्यनुमानोपन्यासोऽपि परिश्रमोऽस्माकं, कथञ्चिद्भेदमनभ्युपगम्याप्येवमुदीरयन्नुन्मत्त एवायं स्यात्। सर्वत्रापि व्यावृत्तिभेद एवायं न स्वभावभेद इति चेत्, न, तत्स्वभावतामन्तरेण तथा तथा व्यावृत्तिभेदकल्पनायामपि मृद्रूपाद्यवभासासिद्धेः, अन्यथा खरविषाणादीनाममृत्स्वभावेभ्यो व्यावृत्तिरस्तीति तेऽपि मृत्स्वभावतयोपलभ्येरन्, एवं संस्थानरूपतायामपि प्रसङ्गः प्रेरणीयः। अथ शशवि-

षाणादयस्तुच्छरूपा इति न कथञ्चनापि प्रतीतिमुत्पादयितुमीशते, तदेतत्तत्स्वभावतामन्तरेण प्रस्तुतेऽपि समानमिति कथं तथा तथा प्रतीतिप्रसूतिः साधीयसी स्यादिति कथञ्चित्स्वभावभेद एवायमिति, अथ न कुलालान्मृत्स्वभावेत्यादेरयमभिप्रायः—यथा न कुलालान्मृत्पिण्डरहितात्तदन्यसामग्र्यन्तर्भूतान्मृत्स्वभावता कस्यचित्कार्यस्य, मृत्पिण्डकारणोपकृतात्मन एव तस्य तद्विशेषहेतुत्वात्, न मृदः केवलायास्तत्सामग्रीबहिर्भूतायाः संस्थानविशेषः, कुलालोपादानोपकृताया एव मृदः संस्थानविशेषात्मककार्यहेतुत्वादिति, तत्रापि वाच्यं—किमिदं घटादिकार्यं मृन्मात्रं संस्थानमात्रमुभयात्मकं वा ?, प्रथमविकल्पद्वये न कश्चित्कस्यचिद्विशेष इति फल्गुप्रायोऽयं पूर्वो ग्रन्थः, उभयात्मके स एव जैनाभ्युपगमसमाश्रयः, इतरेतरोपादानोपकृतात्मनोऽनेकस्य कारणस्यैकसामग्र्यन्तर्वर्त्तिनोऽपि कार्यात्मनि भिन्नविशेषाधानद्वारेणोपयोगापत्तेरिति। तथा न च तयोः शक्तिविशेषविषयभेदेऽपि तज्जनितविशेषभेदस्य कार्यस्य स्वभावभेदो, मृत्संस्थानयोरपरस्परात्मतया मृत्स्वभावसंस्थानविशेषाभ्यां तयोरप्रतिभासनप्रसङ्गादिति, अवयवेनानेनाभेदः प्रख्यापितः, परं स कथञ्चिदभ्युपगन्तव्यस्तदा तीरादर्शिशकुन्तपोतन्यायादसदभ्युपगम एव पुनः प्रमाणभूतः पश्चादप्यनुसरणीयः, इत्यलमादित एवाप्रतिष्ठानान्यदिक्प्रतिपत्त्या। अथात्यन्ताभेदोऽयमेष्टव्यस्तदा मृन्मात्रं संस्थानमात्रं वा स्यात्, तथा चैकमेव रूपमिति कथं मृत्संस्थानयोरपरस्परात्मतयेत्यादि वक्तुमध्यवसितमनेन ?। अस्य हि भाषितस्यायमर्थो—न मृन्मात्रं संस्थानमात्रं वा प्रतिभाति, किन्तु मृदात्मा संस्थानात्मा च मृदात्मनेति, ततः कथञ्चिदभेदोऽयं, न त्वत्यन्ताभेद इति सम्यग्विभाव्यतामेतदिति। अपिच—तेन सहकारिणः प्रत्यया नैकोपयोगविषयाः कार्यस्यैकस्वभावत्वेऽपि वस्तुत इति, यथेह कारणभेदो भिन्नविशेषोपयोगात् नैककार्यस्तथा चक्षुरादिभ्यो विज्ञानोत्पत्तावुन्नेयः, तथाहि—समनन्तरप्रत्ययाद्विज्ञानाच्चक्षुर्विज्ञानस्योपलम्भमात्मनः सतश्चक्षुरिन्द्रियाद्रूपग्रहणयोग्यताप्रति-

नियमः, विषयात्तत्तुल्यरूपतेत्यभिन्नत्वेऽपि वस्तुतः कार्यस्य कारणानां भिन्नेभ्यः स्वभावेभ्यो भिन्ना एव विशेषा भवन्ति, तेन कारणभेदेऽप्यभेदस्तत्कार्यविशेषस्येति, 'ते ये चैते कारणशक्तिभेदा यथास्वं प्रतिविशिष्टकार्यजनने अव्याबाध[य]शक्तितया प्रत्युपस्थिताः, क्षणिकत्वात्सामग्रीकार्यस्य स्वभावस्थित्याश्रय इत्युच्यते, तथाहि–तत्तेभ्य उपलम्भात्मकं रूपग्रहणं प्रतिनियतं विषयरूपं चेति विशिष्टस्वभावमेकमेव जात'मित्यनेनापि ग्रन्थेन केवलभेदाभेदव्यपोहेन जात्यन्तररूपं भेदाभेदमेव परमार्थतः प्रथयति, इहाप्युभयथाऽपि वचनस्योदीरणादित्यपि सम्यग्विचिन्त्यतां सन्न्यायनिरूपणनिपुणैः कुशाग्रीयबुद्धिभिः। एकान्तभेदस्तु मृत्संस्थानादीनां 'अन्यदेव संस्थानं गुणो मृद्द्रव्यात्तेन भिन्नस्वभावः कुलालमृत्पिण्डयोरुपयोगविषय इति चेदिति पूर्वपक्षमुत्सार्योक्तं, अत्र यदि संस्थानं भिन्नं मृदः कुलालः किं न पृथक्करोती'त्यादिना ग्रन्थेन तेनापि महात्मना प्रतिषिद्ध इति, तस्मान्मृद्रूपस्य ध्रौव्यस्योत्पादव्ययरूपेण स्थासकोशकुसूलादिसंस्थानेन कथञ्चिदेकस्वभावत्वोपलब्धेरन्योऽन्यानुगतभेदाभेदसिद्धावनवसरदुःस्थाः कुविकल्पपर्याकुलचेतसां प्रलापा इति स्वभाव इव देहिनामनिवार्यः खल्वेष परिणामः, शेषं तु पूर्वपक्षग्रन्थप्रतिपादितमनभ्युपगमान्निरस्तं इति **परिणामवादः**। किञ्च–सर्वथा असदुत्पादे बाधकप्रमाणान्यप्यनेकशः सन्ति, तदेवाह–

**यदसत्तन्न केनापि, क्रियते वियदब्जवत्। उपादानं न चेह स्यात्, सर्वं सर्वत्र वा भवेत् ॥८॥**

**कार्यकारणभावादिव्यवस्थाऽप्यत्र दुर्घटा। इति सार्द्धश्लोकः ॥**

अथ **सदसद्रूपता**–यत् असत्तन्न केनापि क्रियते यथा वियदब्जं, असच्च परमते कारणावस्थायाः कार्यं ततस्तन्न क्रियेत। तथाहि–अत्र ह्यसन्नामैतदुच्यते यत्सकलसामर्थ्योपाख्याविरहलक्षणं, ततो यादृशमाकाशकुशेशयमिदं सरःकुमुदकोकनदाद्यपि तादृशमेव स्वका-

लात्पूर्वमतः कथमत्र सद्रूपतासमावेशः ?, सदसद्रूपयोः कदाचित्सम्बन्धाभावात्। अथासत्यपि सद्रूपसमावेशस्तर्हि नेदानीमेतयोर्विरोधः इत्यसदपि गगननलिनं सद्रूपमापन्नं, अपिच–विवक्षितमपि कार्यं पूर्वमिति नासीत् येन तदा तदसद्रूपं, तत्र च किल विरुद्धसद्रूपाभिसम्बन्धः, यदि चेदानीमप्ययमत्र भविता तदा तदाऽपि न कश्चिदेतन्निवारयिता, ततः सकलकलाकलापव्यापिनी निखिलकार्यसत्ता संपनीपद्यते, यस्तु मन्यते असदेकस्वभावं गगनकुसुमं सदसत्स्वभावकं तु पटादिकं तत्पूर्वमसत्पश्चाद्भवति तस्य कथं सदसत्त्वयोरेकत्र न विरोधः ?, कालभेदेन समावेशादिति चेत् प्रागुत्पत्तेः पटस्य धर्मिणोऽभावात्कथमसत्त्वं तस्य धर्मत्वमिति वाच्यं, यादृशो यक्षस्तादृशो बलिः, सत्त्वमसत्त्वधर्मो न स्यात्, असत्त्वं त्वसत एव युक्तं, ननु एवं सति न यदेव सत् तदेवासत्, असत्त्वधर्मस्यासतैव सम्बन्धात्, तथा च सदसत्स्वभावं पटादिकमित्यादि प्रमत्तगीतं स्यात्, तस्मादेकमुभयथा विशेषयन्नासदभ्युपगममतिक्रामत्येषः, अत एवास्तु कोऽपि महिमा तुर्यादीनां यदेषु संभूय व्याप्रियमाणेषु असन्नेव पटः सन् भवतीत्यादि प्रयासमात्रमस्य।

**सत्कार्यवादः**–अथ न किञ्चिदसत्सद्रूपमाविशति, केवलं कल्पनामात्रेणैवासत्सद्भवति इत्यभिधीयते, अत्रापि परिहारमभिधास्यामः, तस्माद्यद्येकान्तेनासत्कार्यं तदा तन्न क्रियते, न च न क्रियते, तस्मात्सत् कारणावस्थायां कार्यमिति, न चासति कार्ये किञ्चिदुपादानमपि स्यात्, असत्त्वाविशेषाद् उपादानमन्तरेणापि कार्योत्पत्तेः, यदि हि किञ्चित्कुत्रचित्सत् स्यात्ततस्तदुत्पद्यत इति युक्तमिदमस्योपादानं, असत्कार्यवादे त्वेतन्नियमकारणं नास्तीति तदन्तरेणापि तद्भवतीति कथमिदमुपादानमस्य स्यात् ?, अस्ति चोपादानमतः सत्कारणे कार्यमिति, तथा शालिबीजाच्छाल्यङ्कुरस्तावदसन्नेव भवति एवं यवाङ्कुरादयोऽपि भवेयुः, यवबीजाच्च शाल्यङ्कुरादयः स्युः, पूर्वोक्तेनैव न्यायेन, न चैवं, तस्मात्सत्कार्यमिति, न चेह कार्यकारणभावव्यवस्थानिबन्धनं पश्यामः, ततः कथं

असद्वादे दोषाः

तथा भावव्यवस्था घटनामियर्त्ति, तथाहि–तद्भावे भावस्तदभावेऽभावश्चेत्यादि कार्यकारणव्यवस्थानिबन्धनमुक्तं, न चैतदसत्कार्य-वादे सङ्गतिक्षमं, असत्त्वाविशेषाद्धि कारणाभावे कार्यं स्यात्, यद्वा तद्भावेऽपि न भवेदिति कथं तद्भावव्यवस्था ?, अस्ति चेय-मिति सिद्धः कारणावस्थायामपि कार्यस्य सद्भावो दिग्ग्देशकालस्वभाव(भेदेन भेदोऽ)पि भावानामत एवानुपपन्नः, असत्कार्यवादे हि यथा विवक्षितदेशे विवक्षितकाले विवक्षितस्वभावाध्यासितं च कार्यं भवति तथा देशान्तरे कालान्तरे स्वभावान्तरेऽध्यासितं च स्यात्, अस्ति चायं नियमस्तस्मात्सत् कार्यमिति ॥ कारणशक्तिप्रतिनियमान्न किञ्चिदनुपपन्नमिति चेत् इत्याशङ्क्याह—

**शक्तीनां नियमोऽप्येष, स्यात्सत्त्वेन विना कथम् ? ॥९॥ इत्यर्द्धम् ॥**

**असत्कार्यवादनिरासः**–अयमत्राशयः–यद्यपि कारणावस्थायां कार्यं न विद्यते तथाऽपि प्रतिनियतशक्तिभ्यः कारणेभ्यः प्रतिनियतकार्यजननशक्तिकमेव विवक्षितं कारणमुपजायते, तेनाविद्यमानत्वाविशेषेऽपि प्रतिनियतमेव तेन किमपि कार्यं क्रियते, न पुनर्यदसत्तत्क्रियत एव, अत एव तदुपादानमस्य। यदि हि कार्यं कारणशक्तिनिरपेक्षात्मलाभं भवेत् तदा तद्रूपादानं न स्यात्, न चैतदस्ति, ततः सिद्धमुपादानं, शालिबीजं च शाल्यङ्कुरजननशक्तिकमिति न यवाङ्कुरादयस्ततो भवन्ति, एवं यवबीजादिष्वपि वाच्यं, अत एव कार्यकारणभावव्यवस्थाऽपि न दुर्घटा, देशकालस्वभावप्रतिनियमोऽपि भावानामत एव नानुपपन्न इति, कारणश-क्तिप्रतिनियमादसत्कार्येऽपि न किञ्चिदनुपपन्नमिति तदसत्, यतः शक्तयः कारणस्यात्मभूताः, यदा च तदेव तेन तेन रूपेण परि-णमति तदा कारणस्य कार्यरूपः सः स्पर्शाद्यु(दियु)क्तस्ततस्तदुदय इति सर्वमुपपद्यते, परमेतत् तस्यासत्त्वे सति संभवति, असत्कार्यवादे तु कारणात्मा कार्यात्मानं सर्वथा न स्पृशति, ततस्तत्स्वरूपमग्रं यथाकथञ्चित्प्रमाणेन प्रतिपन्नं तथैवास्तु, वस्त्वन्तरस्य तदत्यन्तमि-

न्नस्य किमागतं? येन तत्तत उन्मज्जति।

व्यापारसिद्धिः–अथ कारणस्य कार्यजनकं रूपं तदैवोपपद्यते यदा तत्कार्यमुन्मज्जति, एवं तर्हि तत्कार्यं तत्र तदैवोन्मज्जति तदा तदेव कारणं तेन तेन रूपेण परिणमति, नान्यथा, तथाहि–कारणस्य कार्यं प्रति कश्चिद्व्यापारो विद्यते वा न वा?, यदि न विद्यते तर्हि तत्तस्य जनकमिति वचनमात्रं, परमार्थतश्च गगनाम्भोजादिवत्ततः कार्यानुत्पादः, अथास्ति कश्चिद्व्यापारः, तत्रापि वाच्यं–कार्ये विद्यमाने कारणं व्याप्रियेताविद्यमाने?, तत्र विद्यमाने व्यर्थस्तद्व्यापारः, व्यापारा हि कार्यस्वरूपलाभार्थमन्विष्यंते, तच्चेदन्यथाऽपि कथञ्चिल्लब्धात्मसत्ताकं किमनेन?, असति तु तत्र व्यापार एवास्य न संभवति, नीरूपत्वादसतः, किञ्च–यदि नाम तत्कारणमसति तुच्छे नीरूपे क्वचिद्व्यापृतं तदा दूरमेतदसम्बद्धस्य सद्रूपस्य किमागतं यदिदमिह संनिधीयते?, नहि खरविषाणे कठोरकुठारधाराप्रहारस्तरुषु छिदिक्रियेति सचेतसः प्रतिपत्तुमीशते। ननु यदा कार्यं लब्धात्मलाभं तदा न हेतुव्यापारमपेक्षते, प्रयोजनाभावात्, तस्मात्पूर्वकाल एवास्य हेतुव्यापारः परिचिन्तनीयः, स च न हेतुस्वरूपादपरः, यदि नाम हेतुस्वरूपादपरोऽयं व्यापारस्तदैतस्मादेव कार्योत्पत्तेर्हेतोरहेतुत्वप्रसङ्गः, व्यापारसम्बन्धात्तस्यापि हेतुत्वमित्यपि समवायादिसम्बन्धनिरासादनुद्घोष्यं, तस्माद्यदेव कारणस्य कार्यात्प्राक्कालभावित्वमयमेवास्य कार्यं प्रति व्यापारः परिशब्द्यते, ततः प्राक्कालभावित्वमयमेवास्य कार्यं जनयतीति 'किं कारणं विद्यमाने व्याप्रियेताविद्यमाने चे'त्यादि व्यर्थ एव वः प्रयास इति, एतदप्यसमीक्षिताभिधानं, कालनाम्नः पदार्थस्यानभ्युपगमात्, अस्मन्मते च यद्यपि 'कालश्चेत्येके' (तत्त्वार्थे अध्य० ५)इत्युच्यते तथाऽपि 'दव्वस्स वत्तणा जा सदव्वकाला तदेव वा दव्वं। नहि वत्तणाइभिन्नं जम्हा दव्वं जओऽभिहियं ॥१॥" इत्यादेरपि प्रतिपादनान्न कालस्य सर्वथाऽभावः, किन्तु द्रव्यस्य तथा-

वर्त्तनलक्षणोऽसाविष्यत एव, यतस्तथा तथा तद्द्रव्यं वर्त्तत इति, न चेदमनेकान्तवादेऽनुपपत्तिमत्।

व्यापारसम्बन्धः–किञ्च–योऽयं कारणस्यात्मभूत एव व्यापारः परिकल्पितस्तस्योत्पद्यमानेन कार्येण सहास्ति कश्चित्सम्बन्धः? किं वा नास्ति?, यदि नास्ति न किञ्चिदुत्पद्येत, खरविषाणाद्यपि वा भवेत्, अथास्ति तर्हि न भवद्भिस्तादात्म्यतदुत्पत्तिव्यतिरिक्तोऽपरः सम्बन्धः प्रतिपाद्यते, तदत्र न तादात्म्यं, व्यापारस्य कारणात्मकत्वात् कार्यस्य च तदत्यन्तभिन्नत्वात्, तदुत्पत्तिरस्तीति चेत् सोऽयमितरेतराश्रयघोरवदनकुहरप्रवेशो देवानांप्रियस्य, प्रथमतस्तदुत्पत्तिसम्बन्धे सति ततस्तदुत्पत्स्यते, अन्यथाऽतिप्रसङ्गात्, उत्पन्नस्य च तस्य तदुत्पत्तिलक्षणः सम्बन्धः संभविष्यति, किञ्च–प्राक्कालभावितामात्रेण कारणं यथा विवक्षिते क्षणे विवक्षितं कार्यं जनयति तथा वियदम्भोरुहाद्यपि किं न जनयति?, यदि तदपि तदा स्यात् तदा किमस्य प्रागभावो व्याहन्येत?, न खलु तदा तदुत्पादेऽपि स्वकालवर्त्तमानं कारणमस्य समानकालमुत्तरकालं वा भवितुमुत्सहते, तस्माद विद्यमानत्वाविशेषाद्वियदब्जमपि क्रियेत, न वा किञ्चिदपीति, तथाहि–यद्यत्र नास्ति न तत्तत्प्राक्कालभावित्वमात्रेण करोति, यथाऽऽकाशकुशेशयं, असच्च तदा विवक्षितं कार्यमिति। अथ कुर्वद्दृष्टमतः करोतीत्युच्यते, अहो! महासामर्थ्यं महाप्रभावस्य भवतो दर्शनं यदिदं भवानतत्स्वभावानपि भावमात्रेण चित्रेषु व्यापारेषु नियुङ्क्ते,यदि नाम कदाचित्किञ्चित्कथञ्चिदत्र भवतो दर्शनपथमतिक्रामेद्धन्ताप्रसवधर्म्मकमपेतसन्तानं जगत् स्यात्, इतीयं नश्चिन्ता चित्तं क्षणोति, अथ न चैवेयमतत्स्वभावानां भावानामसद्दर्शनात्कार्यक्रियेति ब्रूमः, किं तर्हि?, तत्क्रियाधर्माणः स्वभावत एवैते, तान् पश्यन्तो विप्रः–त एते कारका इति, सत्यमेतदप्यस्ति, स्वभावस्तेषां कार्यक्रियाधर्मा?,एवमिति चेत् स किं तेषां प्राक्कालभाविनामथापरोऽपि कश्चित्?, यद्याद्यः पक्षस्तदा स एव प्रसङ्ग इति प्रतिनियतं दर्शनमेवात्र न सिध्येत्। अथ विशिष्टं प्राक्का-

लभावित्वमित्यभिदध्यात्तत्किमयं कारणस्यैव कार्यरूपतापत्तिः ?, नहि, नहि तर्हि कोऽसावपरः ? इति सुव्यक्तमभिधीयताम्।

उत्पादसिद्धिः—नन्वभिहितमेव यदिदं भावानां प्रतिनियतशक्तियोगित्वं नाम, किमध्यक्षमीक्ष्यमाणान्नीलादिस्वभावादपरेयं काचिच्छक्तिः ?, नेति चेत् तर्हि यैवेयं भावानां प्रतिनियतनीलादिरूपता सैव शक्तिः, तथा च नीलादयो भावा यथैव नीलादिरूपेण स्वग्राहिणा प्रमाणेन प्रतिपन्नास्तथैवावाप्तावस्तुतत्त्वरूपाः सन्तो नापरमात्मव्यतिरिक्तं वस्त्वन्तरमुत्पादयितुमाद्रियन्ते, न खलूत्तरकालं वस्त्वन्तरे समुत्पन्न एव नीलादिभिर्नीलादिस्वभावैर्भविव्यमित्यत्र नियमहेतुं पश्यामः, तस्मात्सर्वे भावा नीलादिस्वस्वभावव्यवस्थिततन्तव एव वस्तुरूपतां प्रतिपद्यन्ते, नापरोत्पादनेनेति न कस्यचित्कुतश्चिदुत्पादः। अर्थक्रियाशक्तिविरहे नीलादेः कीदृशी वस्तुरूपतेति चेत् यदियमध्यक्षमीक्ष्यते नीलादिरूपता सैव, नापरा, शक्त्यभ्युपगमेऽप्येतावत एवावशिष्यमाणत्वात्, यदि नीलादिस्वस्वभावव्यवस्थानादेव भावा अवाप्तवस्तुत्वस्वभावा नापरोत्पादनाय प्रयतन्ते तर्हि कुतोऽप्यनन्तरं किमिति किंचिदुपलभ्यते ? यदि नाम किञ्चित्केनचित् सह पूर्वमनन्तरं चोपलभ्यते ततः किमनन्तरोपलम्भनियमः, कथं ?, जन्यजनकभावव्यतिरेकेणेति चेत् सहोपलम्भादिनियमेऽप्ययमनिवारणीयः प्रसङ्गः, तथाहि—प्रस्तुतोपलम्भेऽपि स्वस्वभावमग्रमन्योऽन्यानुगमशून्यं वस्तुद्वयमेव चकास्ति, नाधिकं किञ्चित्, येनेदमितः समुत्पन्नमिति विशेषो विद्वद्भिर्व्यवस्थाप्येत, एतावन्मात्रं चान्यत्रापि समानं, तदुत्तरकालभावित्वं विशेष इति चेत् समकालभावित्वं पूर्वकालभावित्वं वाऽन्यत्रापि समस्त्येव, अप्रयोजकोऽयं विशेष इति चेत् तदुत्तरभावित्वं कथं प्रयोजकमित्यपि निवेदनीयं, कारणे सति कार्यस्य तदुत्तरकालं भाव इति चेत् न ह्यन्यत्रापि तस्मिन् सति तस्य तत्समानकालं पूर्वकालं वा भावः, सहभाविनां कः परस्परं जन्यजनकभावः ?, नहि सव्येतरगोविषाणादीनां युगपदुत्पद्यमानानां कार्यकारणभाव-

मभिदधति व्यवहारिणः, नापि धूमाद्धूमध्वजजन्म, प्रस्तुते कथं कार्यकारणभावो व्यवहारिभिः प्रतिपन्नः, तत्रापि हि कारणं कार्यं चेति विच्छिन्नमेव वस्तुद्वयमुपलभ्यते, तन्मात्रोपलब्धौ च न जन्यजनकभावव्यवस्था समसमयादिभावि वस्तुवत्, प्रयोगः-येषां परस्परं न विशेषसम्बन्धस्तेषां न जन्यजनकभावो, यथा समसमयादिभाविनां भावानां, नास्ति च जन्यजनकत्वाभिमतानां भावानां कश्चित्सम्बन्ध इति व्यापकानुपलब्धिः। नन्वेवं चोद्यचञ्चुभिर्भवद्भिः कार्यकारणभावोच्छेदप्रसङ्ग एव परमार्थतः प्रेरितः, तथा च जगदहेतुकमेव स्यात्, ततश्च-नित्यं सत्त्वमसत्त्वं वा भवेत्। अपेक्षया हि भावाः कादाचित्का भवन्ति, तथा च वार्त्तिकश्लोकः- "नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्। अपेक्षातो हि भावानां, कादाचित्कत्वसंभवः ॥१॥" तस्मादवश्यममीभिर्हेतुमद्भिर्भवितव्यं, तथा च सम्बन्धोऽपि यथा प्रसिद्ध एव हेतूत्तरकालभावित्वेन कार्यस्य जन्यजनकभावः। ननु प्रमाणाधीना प्रमेयव्यवस्था, जन्यजनकभावव्यवस्थानिबन्धनं च प्रमाणेन न पश्यामस्तथैव मन्यामह इति, "कः कण्टकानां प्रकरोति तैक्ष्ण्यं, विचित्रभावं मृगपक्षिणां च। स्वभावतः सर्वमिदं प्रवृत्तं, न कामचारोऽस्ति कुतः प्रयत्नः ? ॥१॥" इत्यादि प्रतिपादयन्तः स्वभाववादिनो भवतो दुर्निवार्याः स्युः, किञ्च-भवताऽपि तावद् 'अपेक्षातो हि भावानां कादाचित्कत्वसम्भव' इत्युच्यते तत्र कदेयं भावानामपेक्षा ?, किमलब्धात्मस्वभानामुत लब्धात्मस्वरूपाणां ?, प्रथमपक्षे भावाः खरविषाणकल्पाः का नाम तदा तेषां क्वचिदपेक्षा ?, लब्धात्मलाभा अपि सर्वथा ते परनिराशंसा एवेति तदाऽपि तेषां न क्वचिदपेक्षा, यदेवेदं तदनन्तरं तत्स्वरूपनियतमेव तेषां तदपेक्षा, नापरेति चेत्, नन्वेवमितरे(तराश्रयदोषोऽवगा) हेत भवतः, तथाहि-कारणापेक्षया (कार्यस्य) तदात्तया तत्स्वरूपलाभः, स्वरूपलाभे च सा तद्विधा तदपेक्षेतीतरेतराश्रयदोषः, अपिच-इयमीदृश्यपेक्षा यदैव तत्स्वरूपं तदैव संभविनी, यदि कारणत्कार्यलाभमावेदयति तदा किं न ?, स्व-

भावादेव, स्वरूपादेव स्वरूपस्य कीदृशो लाभ इति चेत्, नन्वयमेव भवनं स्वयं किञ्चिदपि कथं भवति?, परस्मात्कथं भवति?, तस्य तज्जननशक्तिस्वभावत्वात्, स्वरूपस्याप्यात्मजननशक्तिस्वभावत्वं किं नेष्यते?, अथ यदा न तस्य शक्तिः, यदा त्वस्ति तदा न शक्त्या प्रयोजनं, केवलं कथं तदा तज्जातमित्येतदेव चिन्ताविषयतामवतरतीति कारणादेव तद्भवतीति नः स्फुरति, ननु कारणपक्षेऽपि यदा कार्यं नास्ति न तदा तत्ततो भवति नीरूपत्वात्, यदा तु तद्भवति(त्) स्वरूपमाविशति न तदा कारणं, ततः कथं कारणशक्तेस्तद्भवति?, तस्मात्स्वयमेव किञ्चित्कदाचिद्भवतीति प्रमाणपरिदृष्टमेतदेव साध्वस्त्विति दुर्निवार्यः स्वभाववादी भवतः। अथ तुलोन्नामावनामवद्धेतुविनाशकाले कार्योत्पादान्न कश्चिद्दोष इति समाधिरास्थीयते तत्रापीति वक्तव्यं–कोऽयं हेतुविनाशः?, किं हेतुस्वभाव एव?, यथाऽऽहुः–"क्षणस्थितिधर्मा भावो नाश" इति,किं वा हेतुप्रत्यस्तमयः?,यथा–"न भवत्येव केवलम्" इति?, किञ्चातः?, यद्याद्यः कल्पस्तदा हेतुफलयोर्यौगपद्यापत्तिः, नाशो हि कारणात्मा उत्पादश्च कार्यात्मा, तयोश्च यौगपद्यमभ्युपगतमिति, तथा हेतुप्रत्यस्तमयः, न तस्य कार्योत्पादसमानकालता, निःस्वभावत्वेन कादाचित्कत्वायोगात्, कादाचित्कत्वे वा सहेतुवस्तुत्वादिप्रसङ्गात्। किञ्च–तुलोन्नामावनामवद्धेतुविनाशकाले कार्योत्पादान्न न कश्चिद्दोषः, तत्प्राक्कालमभाविनां सकलजगत्क्षणानामपि कारणत्वप्रसङ्गात्, न चानन्तरक्षणभावित्वे चिरतरक्षणभावित्वे वा कश्चिद्विशेषोऽस्तीति चिरतरनिरुद्धमपि कार्यं कुर्यात्, कार्योत्पादकाले उभयस्याप्यभावाविशेषात्, तथा च मृतेन कुर्कुटेन वासितव्यं, अथेत्थमाचक्षीथाः–यथा द्वितीयक्षणे कार्यस्य सत्तोत्पादात्मिका, प्रथमे तु कारणं जातं, तच्चाविनष्टमेव, तदा स हि तस्य स्वसत्तायाः कालः क्षणभावित्वात्तत्फलकाले निवर्त्तते, अनुवृत्तावपि नैरर्थक्यं, निष्पत्तेस्तदानीं कार्यस्य, तदेवं कारणक्षणान्तरभावित्वात्कार्यस्याविनष्टादेव हेतोरुदयः, स च प्राक्कालभाव्येव

PV I, 279 c.

संभवति, नापरः, प्रत्यक्षानुपलम्भसाधनश्च कार्यकारणभावः, इह प्रत्यक्षमेव प्रमाणं प्रत्यक्षानुपलम्भशब्दाभ्यामुच्यते, तथाहि—कार्यकारणाभिमतपदार्थाकारं प्रत्यक्षं, तद्विविक्तान्यवस्त्वाकारमनुपलम्भ इति, एतौ च प्रत्यक्षानुपलम्भौ परस्परसहायौ साधनं, कदाचिदनुपलम्भपुरस्सरं प्रत्यक्षं, यदाह न्यायवादी—"येषामुपलम्भे तल्लक्षणमनुपलब्धमुपलभ्यते" इत्यादि, एतेन चोपलब्धिलक्षणप्राप्तानुपलम्भेन तत्र तस्य स्वहेतुसन्निधानात्प्रागपि सत्त्वमन्यतो देशादागमनं प्रागवस्थितकटकुड्यादिहेतुत्वं चापाकृतमिति, तथा कदाचित्प्रत्यक्षपुरस्सरोऽप्यनुपलम्भः, यथोक्तं—"तत्रैकाभावेऽपि नोपलभ्यते तत्तस्य कार्य"मिति, एतदुक्तं भवति—येषां संनिधानेन प्रवर्त्तमानं यद्दृष्टं तेषु तत् साध्यं, यदैकस्याप्यभावो भवति तदा नोपलभ्यते तत्तस्य कार्यं, यथा धूमो हुतभुजः,घटादिमृदादीनामप्ययमेव न्याय इति प्रतिनियतमेव किमपि कस्यचित्कारणं, न पुनः प्राक्कालभावित्वाविशेषेऽपि सर्वमेवेति, एतदपि न समीचीनं, यतो यदि फलकाले कारणं निवर्त्तते तदा स्वकाले सताऽपि किं तेन?, तदा कार्यस्य नीरूपत्वेन तदुपयोगाभावात्, अथ निष्पन्ने कार्ये किं कारणानुवृत्त्या?, तदननुवृत्तौ तन्निष्पत्तेरेवासिद्धेः, कारणस्य हि कार्यजनकत्वस्वभावस्तदैवोपपद्यते यदा तदेव तथा भवति, अन्यथा तु तत्कार्यं तुच्छं वराकमसद्रूपं किममुमीदृशं महिमानमस्य प्रकाशयितुमिच्छति?, यस्तु प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव उक्तः स प्रत्यक्षानुपलम्भाभ्यां व्यज्यत एव, न पुनः क्रियते, अतः कारकहेत्वविशेषाद् यथाकथञ्चिदेवायमुपजायमानस्ताभ्यां व्यज्येतापि, यथाकथञ्चिदेवेति प्रत्यक्षानुपलम्भयोरेव नियमे प्रवृत्त्यनुपपत्तिः। किञ्च—तादृशाः प्राक्कालभाविनोऽपि क्षणास्ते तदानीमेव, न पूर्वं नापि प्राप्नुवदिति विवक्षितहेतुवत् हेत्वन्तरैरपि प्रत्यक्षानुपलम्भप्रवृत्तिस्तुल्यैव, तथाहि—न स कश्चित्कालोऽस्ति यत्र न सन्ति क्षितिबीजसलिलादयः, ततः किं न सदाऽङ्कुरादिकार्योदयः?, दूरदेशास्ते न इति पुनः परिहारः,'यस्य

येनामिसम्बन्धो, दूरस्थस्यापि तेन सः,' कथमन्यथा चन्द्रादयो दवीयसि देशे व्यवस्थिताः स्वविषयविज्ञानादिकार्यमुत्पादयेयुः ?। अथ न तदा तादृशास्ते क्षित्यादिक्षणा यादृशेभ्यः कार्यमुत्पद्येत, तदेतत्सर्वत्र समानमेवेति न प्रतिनियतकार्यकारणभावसिद्धिरिति कश्चिद्विशेषोऽभ्युपगन्तव्यः, स च नान्वयादपरः, ननु यदि कार्येऽपि रूपस्यैवान्वयस्तदा कार्यकारणयोरविशेषात्कार्यकारणभावोच्छेद एव स्यात्, नैतच्चारु, यतोऽनादिचलितैकरूपत्वमन्वयः, किं तत् ?, तस्यैव तथाभवनं, ननु तथाभवनमित्यन्यथाभवनमभिप्रेतं, एतच्च शब्दार्थाननुगतं, तदेवान्यथा भवतीति, यदि तदेव कथमन्यथा ? अन्यथा चेद्भवति कथं तदेव ? इति, उच्यते, कथञ्चिदन्यथाभवनाददोषः, तदतावदस्थ्योपलब्धेः, मृदाद्यात्मककपालादिवेदनात् उभयनिश्चयसिद्धेः, अन्यतरस्यापि भ्रान्तत्वायोगात्, इतरत्राप्यनाश्वासापत्तेः, सतः सर्वथाऽसत्तानापत्तेः, कादाचित्कतया तदुत्पत्त्यादिप्रसङ्गात्, असतोऽपि सत्ताऽयोगात्, स्वभाववैकल्येन तद्भवनियमासिद्धेरिति, न चैतन्न शब्दार्थाननुगतमपि, कथञ्चिदन्यथाभवनस्य तदेवान्यथैवेत्येकान्तापोहेन प्रवृत्तेः, वस्तुन एव तत्स्वभावत्वात्, प्रतीत्यनुग्रहसिद्धेः, उभयनिमित्तभावात्, अस्य च तदेवान्यथा भवतीत्यनेनैवाक्षेपः, अन्यथैतच्छब्दार्थायोगात्। ननु मृद्द्रव्यं यथा स्थासकोशकुसूलादिरूपेण परिणमति तथा किं न रूपान्तरेणापि ?, न, मृदात्मना सर्वेणापि रूपेण परिणमनात्, किमेकदैव न सर्वरूपयोगित्वामिति चेत्, न, तत्तत्सहकारिकारणमासाद्य तदा तदा तथा तथा परिणमनस्वभावत्वात्, एकदैव च सर्वसहकारिकारणसंनिधानाभावात्, ये तु परिणामानभ्युपगमतश्चिरनिरुद्धस्योत्तरक्षणभाविनो वा कारणत्वमिच्छन्ति तेषां क्षणभङ्गभङ्गप्रसङ्गः, अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य सदाऽपि भावाद् भावस्य सदा सत्त्वप्राप्तेः, तस्मान्नासदुत्पद्यत इति। ननु सत्कार्यवादेऽपि प्रतिपादितदूषणानि सर्वाणि संभवन्ति, तथाहि—यत्सत्तन्न केनापि क्रियते, यथा विशिष्टरसवीर्यविपाकादि-

तया विद्यमानं दधि, सच्च परमते कारणावस्थायां कार्यमिति, तथा सत्कार्यवादे न किञ्चित् कुतश्चिदुत्पद्यत इति किं कस्योपादानं नाम ?, सर्वं च सर्वत्र भवेत्, तथाहि–सदपि शाल्यङ्कुरादि यदि शालिबीजाद्भवति तन्मते तदा किमन्यतोऽपि तन्न भवति ?, यद्वा यवाङ्कुरादयोऽपि शालिबीजात्किं न भवेयुः ?, को ह्यत्र विशेषो येन सदपि किञ्चिदेव कुतोऽपि भवतीति व्यवस्थाप्यत इति कार्यकारणभावव्यवस्थाऽप्यत्र न घटामञ्चति, तदभावेऽभावस्तद्भावे वा भाव इति हि तद्व्यवस्थानिबन्धनं, सत्कार्यवादे च कार्यं सदा संनिहितमेवेति कथमेष न्यायः संभवतीति । तथा देशकालस्वभावप्रतिनियमोऽपि भावानां कारणाधीनात्मलाभानां तदायत्ततया युक्तः, तदभावे त्वनिबन्धन एवायं स्यादिति, तदेतत्सर्वमप्यसम्बद्धाभिधानं, यतः सदेकान्तेऽपि परिणामो न संभवतीति सदसत्कार्यपक्षमाश्रिताः परिणामवादिनः। नन्वेतस्मिन्नपि पक्षे येनात्मना कार्यं सत् तेन सदेव येन चासत् तेनासदेव, तथा च पक्षद्वयोदितदोषावकाशो भवताम्, अन्यच्च–एवमपि किञ्चित्तत्रासदेवोपजायते तद्वत्प्रतीत्यसमुत्पादेऽपि यदि किञ्चिदसदेव जायेत तदा को दोषः ?, असदुत्पादप्रतिषेधहेतूनां तेनैवानैकान्तिकत्वात्, अहो! क्रीडनशीलः सुखैधितश्च देवानाप्रियः येनानेकशः प्रतिपादितमपि नावधारयितुमीशः, समर्थितमेवान्योऽन्यानुगतभेदाभेदात्मकं तत्त्वं, ततश्च न तत्सदेव नाप्यसदेव, किन्तु सत्त्वमसत्त्वानुविद्धमसत्त्वं च सत्त्वानुविद्धमिति सदसत्कार्यपक्षसिद्धिः। मृत्पिण्डमृद्द्रव्यमेव हि स्थासकोशकुशूलाद्यूर्ध्वाकारतां प्रतिपद्यते, न पुनरयमाकारः कश्चिदेकान्तेनापूर्वः प्रजायते इति सत्कार्यमुच्यते, न च मृद्द्रव्यमाकालमनेनैव रूपेणास्ते, पिण्डकाले तदाकारानुपलब्धेः, अतोऽसदिति, प्रतीतिसिद्धे चात्र गजविकल्पाविष्करणैः प्रतिक्षेपाभिमानं परेषामनर्थहेतुरेवेति सम्यग्विभाव्यताम्। एवं स्थिते च वस्तुतत्त्वे यदिदमुक्तं–"अथैवमपि किञ्चित्तत्रासदेवोपजायेत" इत्यादि तदपि क्वावकाशं लभते ?, यतो यदि लेशेनापि

TS, vv. 32, 33

तुच्छमभावमात्रं सद्रूपतामाविशेत्तदैतद् दूषणं, यदा तु भाव एव तत्स्वभावतामाबिभ्राणस्तदात्मतां प्रतिपद्यते तदा न कश्चिद्दोषः, एतेनैतदपि प्रत्युक्तं यदुक्तं शान्तरक्षितेन, यथा–"उत्पादो वस्तुनो भावः, यः सोऽसावसता तथा । सम्बध्यते कल्पिकया, केवलं त्वसता धिया ॥१॥ यदिदं वस्तुनो रूपमेकानन्तरमक्षितो (मीक्षितं) । प्रागासीन्नेति तद्बीजं, प्राग्भूते नेदमस्तिना ॥२॥" अयमर्थः–उत्पादो नासता संबध्यते तत्त्वतो, नापि सता संबध्यते तत्त्वतो, नापि सता कल्पिकया धिया, केवलमसता संबध्यते, यदिदं वस्तुरूपमेकानन्तरं किञ्चिदिष्यते तत्प्राग्नासीदित्येतत्कल्पनाया बीजं, प्राग्भूते त्विदं कल्प्यं नास्तीति, तत्र यदि कल्पिकया धियोत्पादोऽयमसता संबध्यते तर्हि तत्त्वतः कार्यं किं सदुत्पद्यते किं वाऽसत् ?, न सत् नाप्यसत्, तर्हि प्रकारान्तरानभ्युपगमान्नोत्पद्यत एव तत्त्वतः किञ्चिदिति प्राप्तम्, अथेत्थमाचक्षीथाः यथा न वै काचिदुत्पत्तिर्भावव्यतिरिक्ताऽस्ति यामाविशन्नसौ सन्नुत्पाद्यते असन्निति वा प्रतिपाद्यते, किन्तु कस्यचिद्वस्तुनो नियमतः सत्ता, सैव तदात्मिकोत्पत्तिरभिधीयते, न पुनरियं केनचित्संबद्धा, सा च प्राग्नासीदित्यसदुत्पद्यत इति व्यवह्रियते, न पुनरसतोऽवस्थान्तरसमावेशादिति, तदेतदप्यविचारितरमणीयं, तथाहि–नोत्पत्तिर्भावव्यतिरिक्ता, न चासौ गर्भवत्कारणान्निष्क्रामति, न चापान्तरालात्पतति, न चास्ति सर्वथा प्राक्, न चासत्सद्भवति, भवति च कस्यचिदनन्तरं, मरणसमय एवासौ रहितस्तदन्वयेन, तत्सामर्थ्यप्रभावो नियमवांश्चेति कोऽन्धस्वप्नायमान इत्थं भाषते ?, अबोधग्रहगृहीताच्चापरोऽनुवक्तीत्यपकर्णयितव्यमेतत् ?, तस्मादनुत्पाद एवास्य तात्त्विकः सम्पद्यते । किञ्च–प्रागभावः कश्चिदस्त्युत नास्ति ?, यदि नास्ति तदा तत्प्राग्नासीदिति वचनमात्रमेव, अथास्ति सोऽपि यदि वस्त्वसम्बद्धस्तदा स एव वृत्तान्तः, तस्माद्वस्तुधर्मेण तेन भवितव्यं, तथाहि–मृदाद्यात्मा तावदयं घटाद्याकारो, न पुनस्तदत्यन्तभिन्नः, पिण्डाद्याकारोऽपि तदात्मैव, ततस्तदेव मृद्द्रव्यं घटा-

द्यभावात्मना पिण्डाद्याकारेणासीदिति प्रागभावस्तद्धर्म एव, उक्तश्च–क्षीरे दध्यादि यन्नास्ति(सीत्)प्रागभावः स उच्यते ॥"
तस्माद्यतस्तत्प्राग्नासीदत एव तत्त्वतः सदसत्कार्यमभिदधति विद्वांसः। तथा च यदि तदसदुत्पद्यत इत्यपि स्याद्वादमुपेत्योच्येत तथाऽपि सङ्गच्छेत, अन्यथा तु निर्गतिकानामेवेयं गतिः, यथा 'कल्पिकया धियोत्पादोऽसता संबध्यत' इति, उक्तन्यायेन युक्त्यनुपपत्तेः, स्याद्वादश्च सकलप्रमाणैः सिद्धिसौधमध्यासीनः, तदत्र निरन्तरदुरन्तान्तरतिमिरतिरोहितसद्दृष्टिप्रसराः परे यदि यथाकथञ्चिदेव वस्तु व्यवस्थापयितुमिच्छन्ति तदा किं तत्तथाभावं प्रतिपद्यते ?, न खलु तदिच्छाकामचारमनुवर्त्तते प्रमाणप्रतिष्ठितं वस्तुतत्त्वमिति ।

**सप्तभंगीसिद्धिः**–अत एव सप्तभङ्गीमुशन्ति सूरयः, तथाहि–स्यादस्ति स्यान्नास्ति स्यादवक्तव्यम्, एते सकलादेशाः, तत्संयोग एवापरे चत्वारो भङ्गका भवन्ति, ते च स्वावयवापेक्षया विकलादेशा भवन्ति, तद्यथा–स्यादस्ति च नास्ति च, स्याददस्ति चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं चेति, नापरभङ्गसम्भवः, तत्र यदा द्रव्यस्य प्राधान्यविवक्षा क्रियते तदा स्यादिति कथ्यते, विवक्षितपर्यायरूपतया कार्यस्याभावेऽपि द्रव्यरूपतया सत्त्वात्। यदा पर्यायाणां प्राधान्यविवक्षा क्रियते तदा स्यान्नास्तीति कथ्यते, द्रव्यरूपतया कार्यस्य सत्त्वेऽपि तद्विधपर्यायापेक्षया असत्त्वात्। यदा तु युगपदुभयप्राधान्यविवक्षा तदा स्यादवक्तव्यमिति व्यपदिश्यते, तथाहि–तत्सदिति वक्तुं न शक्यन्ते, द्रव्यरूपतया सत्त्वेऽपि पर्यायरूपतयाऽसत्त्वात्, असदित्यपि वक्तुं न शक्यते, पर्यायरूपतयाऽसत्त्वेऽपि द्रव्यरूपतया सत्त्वात्, ततस्तस्य सच्छब्देन असच्छब्देन वा युगपत्प्रतिपादयितुमशक्यत्वात् अवक्तव्यं । यदा परनिरपेक्षं द्रव्यरूपतया सत्त्वं पर्यायरूपतया चासत्त्वं स्वात्मनिमग्नमेव विवक्ष्यते तदोभयावयवापेक्षया स्यादस्ति स्यान्नास्ति चेति व्यपदेशः प्रवर्त्तते, भेदमवलम्ब्योभयशब्दसमावेशेन तस्य प्रतिपादयितुं शक्य-

त्वात् । द्रव्याकारार्पणद्वारेण सत्त्वेनोक्तावक्तव्यस्वरूपनिरूपणेन चोपदेशे स्यादस्ति च नास्ति चावक्तव्यं चेति सप्तभङ्गी । इह चोपरितनभङ्गचतुष्टये सम्पूर्णवस्तुस्वरूपनिरूपणाया गुणीभूतत्वादंशकल्पनां पुरस्कृत्य विचारस्य प्रवर्त्तमानत्वाद्विकलादेशत्वमिति । ननु द्रव्याकारार्पणद्वारेण सत्त्वेनोच्यते वस्तु तदाऽवक्तव्यस्वरूपनिरूपणोपदेशस्य कोऽवसरः ?, तस्य युगपदुभयप्राधान्यविवक्षाधीनत्वात्, यदुक्तं प्राक्–'यदा तु युगपदुभयप्राधान्यविवक्षा तदा स्यादवक्तव्य'मिति, तदसत्, अभिप्रायापरिज्ञानात्, यतो द्रव्यपर्यायोभयापेक्षया सत्त्वासत्त्वलक्षणं धर्म्मद्वयमत्र प्रख्याप्यते, धर्मधर्मिणोश्च भेदाभेदः, स व्यवस्थितः करिष्यते, ततो यदा अभेदांशाश्रयं तेनास्तीतिशब्देन प्रधानीकृतभावांशं गुणीभूताभावांशं चाखण्डमेव वस्तुस्वरूपमपदिश्यते तदा स्यादस्तीति कथ्यते, अभावांशप्राधान्येन तदभिधानेच्छायां नास्तीति, उभयप्राधान्येन तु तदखण्डमेव यदोपदेष्टुमिष्यते तदाऽवक्तव्यमिति, धर्मिप्राधान्यनिष्ठमेतद्विकल्पत्रितयं, अत एवैते सकलादेशाः, भेदांशाश्रयणेन तु यदा तदस्तीति शब्दवाच्यं भवति, नास्तित्वांशश्च नैतदन्तर्निमग्नोऽत्र विवक्षितः, किन्तु व्यतिरिक्तः, ततस्तदपेक्षयाऽपि अस्तीतिशब्देन न तद्वक्तुं शक्यमित्यवक्तव्यं, एवं नास्तीतिशब्देनाप्यस्तित्वापेक्षया वक्तुमशक्यत्वादवक्तव्यं, अस्तीत्यस्तित्वांशप्राधान्येन शब्दः प्रवृत्तः, नास्तीति च नास्तित्वांशप्राधान्येन, अत एवाभ्यां युगपदुच्यमानाभ्यामपि परस्परस्वरूपानभिधानात् अस्ति च नास्ति चावक्तव्यं चेति व्यपदेशः, इतरेतरानपेक्षायां तु सदसद्धर्मद्वयाभिधाने स्यादस्ति स्यान्नास्ति चेति प्रथमदेशविकल्पः समुपतिष्ठते, तदयमत्राभिप्रायः–यदाऽखण्डमेव तद्वस्तु स्यादस्तीतिशब्देन विवक्षितं तदा नावक्तव्यं, यदपेक्षया नोच्येत तन्निमित्ततस्याभावात्, एवं नास्तीतिशब्देनापि तदभिधाने निमित्तान्तराभावादवक्तव्यत्वानकाशः, केवलं त्ववक्तव्यं पूर्वप्रदर्शितप्रकारेणोभयप्राधान्यविवक्षायां संभवति, देशाश्रयणेन तु स्वस्वनिमित्तापेक्षया तत्तच्छब्दाभि-

धानेऽपि निमित्तान्तरस्यापि सद्भावात्तदपेक्षया च तेनानभिधानादवक्तव्यमिति तन्न दोषसम्भवः, प्रकारान्तरेणाप्यस्तीयं परं विस्तरभयान्न लिख्यते, प्रसङ्गमात्रेण तु किञ्चिदुक्तं ।

**सदसद्रूपे वैयाकरणकंटकोद्धारः**–तदेवं सदसद्रूपे प्रदर्शितन्यायादन्यत्र वस्तुनि स्थिते यदुच्यते क्वचिद्व्याकरणप्रस्तावे–ननु कथमङ्कुरो जायते? इत्यादिः प्रयोगः?, यतो द्वयमिह घटनीयं, प्रादुर्भावलक्षणो धात्वर्थः कर्तृत्वलक्षणश्च प्रत्ययार्थः, तच्च दुर्घटमेव, प्रादुर्भावो ह्यसत उत्पत्तिः, कर्तृत्वं च सत इति परस्परविरुद्धयोरेकं सन्धित्सतोऽन्यत् प्रच्यवते इति पूर्वपक्षवचनं, तद्वचोऽनवकाशः, प्रदर्शितन्यायेन वस्तुतत्त्वाभ्युपगमे द्वयस्याप्यदुर्घटत्वात्, यतो नात्यन्तासत उत्पत्तिः प्रादुर्भावः, किन्तु तस्यैव तद्रूपतया भवनं, तस्मात्तदेव वस्तु द्रव्यरूपतया विद्यमानत्वादवाप्तकर्तृत्वस्वभावं तदात्मतां प्रतिपद्यते, एतावानेवायमभूतप्रादुर्भावो, न पुनरन्तर्भूतस्य कस्यचिदत्यन्ततुच्छस्य भावोऽभूतप्रादुर्भाव इति, अत एव बीजमङ्कुरीभवतीत्यादौ च्व्यर्थोऽपि न दुरुपपादः, अवस्थितस्य धर्मिणः कथञ्चित्सम्भवात्, सुवर्णं कुण्डलं करोति तन्दुलानोदनं पचतीत्यादावपि सर्वं जैनराद्धान्तमवलम्बमानैरेव वैयाकरणैरपि सम्यग् व्यवस्थापयितुं शक्यम्, अन्यथा क्रियाकारकादिव्यवहारः सर्वोऽप्युपचारमात्रमेव भवेदिति, तस्मात्सर्वथा सर्वैरपि परिणामोऽभ्युपगन्तव्यः, ततश्च "नासतः सर्वथा भावः" इति सुव्यवस्थमिति ॥ उत्पादाधिकारो द्वितीयः ॥२॥

एवं "नासतः सर्वथा भावः" इत्यन्वयाविनाभूत उत्पादः, नापि सतः सर्वथा नाश इति व्ययोऽप्यन्वयाविनाभूत एवेति प्रतिजानीमहे, यतः—

**भिन्नो भावादभिन्नो वा, नाशः किं वा स एव न? । भेदे वस्तूपलभ्येत, तादवस्थ्यप्रसङ्गतः ॥१०॥**

**अभेदे भाव एवायमभावः केवलोऽथवा। ततः सदाऽवभासेत, भावो यद्वा कदाऽपि न ॥११॥**
**अभावेऽपि च नाशस्य, वक्तुमेतदसाम्प्रतम् । न तस्य किञ्चिद्भवति, न भवत्येव केवलम् ॥१२॥**

**भावस्य भावाभावोभयरूपता**–नाशो हि भावाद् भिन्नो वा भावादभिन्नो वा यदिवा न विद्यत एवायं ?, तत्र यदि भिन्न-स्तदा वस्तु तदवस्थमेवेति पूर्ववत्तदुपलम्भः, अत्र प्रयोगः–यदवस्थितस्वभावं तदुपलभ्यत एव, यथा विवक्षितमेव वस्तु पूर्वावस्था-याम् , अवस्थितस्वभावं च विनाशकालेऽपि तदिति स्वभावहेतुः, अवस्थितस्वभावमप्यन्धकारादौ घटादि नोपलभ्यते ततोऽनैका-न्तिको हेतुरिति चेत् , न, तत्रावस्थितस्वभावत्वासिद्धेः, तद्धि रूपमालोकादिकाले पूर्वमुपलभ्यस्वभावं भूत्वा पश्चात्तदभावेऽनुपलभ्य-स्वभावतया परिणमति । अपिच–यत्रोपलम्भप्रत्ययवैकल्यं तत्र सत्यपि वस्तुन्यनुपलम्भो भवतु, तत्साकल्ये तु यदि तदस्ति तदा किं नोपलभ्यते ?, अथ यथाऽन्धकारादावालोकाद्यभावादुपलम्भप्रत्ययवैकल्यं तथा मुद्गरादेः प्रध्वंसाभावोत्पत्तावपि, तदभाव एव ह्यनुपलम्भ इतिकृत्वा, तत्रापि निरूपणीयं, किं यथाऽन्धकारादौ सन्नपि घटो नोपलभ्यते तथा प्रध्वंसाभावेऽपि ? किं वा तदा तस्य स्वरूपमेव न भवति ?, तत्र प्रथमपक्षेऽभ्युपगमविरोधो, नैयायिकादेः प्रध्वंसाभावोत्पत्तौ वस्तुसद्भावानभ्युपगमात् , साङ्ख्यस्तु तिरोभावमात्रमेव नाशमुपगच्छन्नेवं ब्रूयादपि, परमयमधस्तान्निरस्तः, द्वितीयस्तु पक्षो विचार्यमाण एवास्ते, तथाहि–यदि प्रध्वंसा-साभावो वस्तुनो भिन्नो नाम तदा वस्तु तदवस्थं, तत्र च चक्षुरादिप्रत्ययसाकल्यमस्तीति स्यादेवोपलम्भः इत्यभिप्रायवतोक्तं–"भे-दे वस्तूपलभ्येत," अभेदे तु भावमात्रमभावमात्रं वा ?, स्वरूपवत् तत्र भावमात्रत्वे सदा भावस्यावभासः, अभावमात्रत्वे तु (न) क्षणमप्यनवभासः स्यात् , यथा हि भावस्वरूपं भावादव्यतिरिक्तं भाव एव तद्वत्तदभावोऽपीति कथमभावकाले भावस्यानवभासः ?,

भावो वाऽभावादव्यतिरिच्यमानस्तत्स्वरूपवदेवाभावः सम्पन्न इति कथं क्षणमात्रमप्ययमवभासेत ?, यदि पुनर्नाशो न विद्यत एव तदा 'न तस्य किञ्चिद्भवति, न भवत्येव केवल'मिति वक्तुमप्ययुक्तं सौगतानां, यस्य हि किञ्चिन्न भवति स न भवति, यथा स एव भावः स्वक्षणे, न भवति च क्षणान्तरेऽस्य किञ्चिदिति व्यापकानुलब्धिप्रसङ्गः, न तस्य किञ्चिद्भवतीति परैरभ्युपगमान्नासिद्धो हेतुः, सपक्षे भावान्न विरुद्धः, तथा च–न तस्य किञ्चिद्भवतीत्येव हि स्वरूपव्यवस्थितमेव वस्त्वभिधीयते–किञ्चिन्न भवति, अपितु स्वरूपेण व्यवस्थिष्ठत इति शब्दार्थपर्यवसानात्, ततो वस्तुस्वरूपावस्थितमपि चेन्न भवेत् किञ्चित्कदाचिन्न भवेदिति सर्वशून्यतापत्तिरेव विपर्यये बाधकं प्रमाणं, ततो नानैकान्तिकोऽप्ययं हेतुः,'न तस्य किञ्चिद्भवति, न भवत्येव केवल'मिति च यदा धर्म्मकीर्त्तिः प्रतिपादयति तदा तेन किञ्चिन्न भवति १ न भवत्येव केवलरमिति च रूपद्वयस्य भेदः प्रतिपन्न एव, स च तात्त्विकः काल्पनिको वा भवतु, सिद्धः साध्यसाधनभावः, सर्वस्यैवानुमानानुमेयव्यवहारस्य काल्पनिकधर्मविषयत्वात्, अनैकान्तवादभीरुतयैकत्र धर्मिण्यनेकधर्म्मानभ्युपगमात्, तस्माद्युक्तमेतत्प्रसङ्गसाधनं,न तु तथाऽपि विनाशः प्रध्वंसाभावः, न च सामान्यतोऽप्यभावव्यवस्थापकं किमपि प्रमाणमस्ति, न तावत्प्रत्यक्षं, यतस्तद्भावसम्पादितजन्मकं नाभावमधिगन्तुमुत्सहते, अथाभावोऽपि प्रत्यक्षमुत्पादयति, न, तस्य सकलशक्तिविकलत्वेन क्वचिदपि व्यापारासम्भवात्, अन्यथा भावरूपतैव तस्यापि स्यात्, प्रत्यक्षनिषेधेन चानुमानमपि तत्र प्रतिषिद्धमेव, यतस्तत्सम्बन्धग्रहणपुरस्सरं प्रवर्त्तते, सम्बन्धग्रहणं च न प्रत्यक्षेण, अभावस्याप्रत्यक्षत्वात्, अनुमानेन सम्बन्धग्रहणेऽनवस्था, सा तदा न भवेत् यदा मूलभूतं तद्ग्राहकं क्वचिदुपेयते, प्रत्यक्षानुमानातिरिक्तं च प्रमाणं न विचाराक्षममिति तन्नाभ्युपगम्यते, अथानुपलब्धेरभावावगमस्तदिहापि विचारणीयं, सा प्रतिषिध्यमानवस्त्वग्रहणस्वभावा वा भवेत् अन्योपलब्धिस्वभावा


PV I, v.278

वा ?, यद्याद्यः पक्षस्तदा सा तुच्छरूपा कथं किञ्चिद्व्यवस्थापयेत् ?, स्वापदममूर्च्छाद्यवस्थास्वपि च प्रतिषिध्यमानवस्त्वग्रहणमस्तीत्यभावावगमप्रसङ्गः, तन्न उपलब्धिप्रतिषेधोऽनुपलब्धिस्तदवगमहेतुः, नाप्यन्योपलब्धिः, यतः तद्धर्म्यं वस्तु वा स्यात् प्रतिषिध्यमानवस्त्वभावो वा असद्व्यवहारो वा ?, यदि वस्तु तदानीमभावस्य किमागतं ?, अथ प्रतिषिध्यमानवस्त्वभावः तदपि नास्ति, यतोऽसावन्योपलम्भरूपा सती तदेवान्यद्वस्तु साक्षात्कर्त्तुमर्हति, अभावं तु कथं प्रतिपद्यते ?, तस्य सकलशक्तिविकलत्वेन भावादन्यत्वात्, यदि त्वसद्व्यवहारस्तया साध्यते तदा सिद्धमेतत् नास्तीति, व्यवहारमात्रमेवेदं, नत्वभावानामेतद्धर्म्यः कश्चित्, किञ्च—अयमभावनामा पदार्थः कोऽपि न स्वतन्त्रतया प्रतीयते, किन्तु देशादिविशेषणत्वेनैवास्य प्रतिपत्तिः, अत्रेदानीमस्य वाऽभावः, न चाभावस्य देशकालाभ्यां सह विशेषणविशेष्यभावः संभवति, वस्तुप्रतिषेधरूपत्वेनानुरूपकार्योपकारकस्वभावत्वात् (त्वाभावा)त्, नापि भावसम्बन्धित्वमस्य युक्तं, भावाभावयोर्भिन्नकालत्वात्, यदा हि घटलक्षणो भावो न तदा तदभावः, यदा त्वभावस्तदा न घटोऽस्तीति कथमभावस्य भावसम्बन्धिता भवेत् ?, न च स्वतन्त्रः क्वचिदेष प्रतीयते, अथाभिधीयेत घटो नास्तीति तयोस्तुल्याधिकरणप्रत्ययविषयता, ततो नीलोत्पलादिवत् कथमेतयोः सम्बन्धाभावः ?, अस्त्ययं प्रत्ययः, केवलं सम्बन्धं विना भवन् मिथ्यात्वेन व्याख्यातृभिर्व्यवस्थापितः, यतो न प्रतिभासमात्रनिबन्धनं वस्तुतत्त्वमतिप्रसङ्गात्, मरीचिकाचक्रचुम्बिनो जलोल्लेखिनो विज्ञानस्य सम्भवे जलस्यापि भावाभ्युपगमप्राप्तेः, न च भावाभावयोः क्वचित्सम्बन्धो यतोऽयं प्रत्ययः स्यात्, विशेणविशेष्यभावश्चेदत्र सम्बन्धस्तदपि न संभवति, यतो विशेषणविशेष्यभावो न स्वतन्त्रः सम्बन्धान्तरनिरपेक्षो भवितुमर्हति, तथाहि—दण्डी पुरुषो नीलमुत्पलमित्यादौ संयोगसमवायादिसम्बन्धमाश्रित्यायं प्रवर्त्तमानो यदाऽभिप्रेतस्तदा परैरपि कथमन्तरेणैव निमित्तान्तरं स्वतन्त्रोऽयं क्वचि-

त्प्रकाशयितुं शक्येत ?, तन्न विशेषणविशेष्यभावोऽपि भावाभावयोस्तात्त्विकः कश्चित्सम्बन्धः, मा भूदयं, विरोधस्तु सम्बन्धस्तयोः केन वार्यत इति चेत् तदपि न साधु, यतस्तस्मिन् सति सम्बन्धित्वेन प्रतिभासो न स्यात्, अपितु विरोधित्वेन, मुद्गरादिवत्, किञ्च-विरोधो व्यवस्थाप्यमान एव व्यवतिष्ठते, यद्यभावे सति भावो न भवति, प्रकाश इव तमः, न चेदमिह विद्यते, न हि भावे स्वरूपमाबिभ्राणे कुतोऽपि स्वस्मान्निमित्तादभावो भवन् तन्निरुणद्धि, प्रकाशवदेव, किन्तु स्वस्मान्मुद्गरादेर्विरोधिनः प्रत्ययाद् घटादिर्भावः स्वयमेव न भवति, न च तथाऽभवन्नभावेन विरोधमपेक्षते, तस्यान्यविरोधिजन्यत्वात्, अथाभिदध्यात्-यथा मुद्गरापेक्षयाऽसौ घटो न भवति तथा स्वसम्बन्ध्यभावापेक्षयाऽपि न भविष्यति किमत्रानुपपन्नं ?, नन्वेतदेव यद् भावाभावयोरसमानकालत्वं, समानकालत्वेऽपि हि विरोधाविरोधौ चिन्त्येते, न त्वेवमेव, अपिच-मुद्गरादिवत्तस्य विरोधित्वाभ्युपगमेऽनवस्था, यथा मुद्गरो घटस्याभावजनकत्वाद्विरोधी एवमभावोऽप्यभावान्तरजनकत्वेन, सोऽप्येवमित्यनवस्था कथङ्कारं विनिवार्येत ?। किञ्च-शास्त्रे तत्रापि कार्यकारणभावस्य व्यवस्थापितत्वात् मुद्गराद्यपेक्षा घटस्यासमर्थतरा समर्थतमकार्योत्पादे, ननु तदपेक्षया तस्य निवृत्तिः स्वयमेव, एकक्षणस्थायित्वेन स्वहेतोरुत्पन्नत्वात्, तन्न मुद्गराद्यपेक्ष्य घटादि निवर्त्तते, स्वयमेव निवृत्तत्वात्, अन्यथा निवृत्तेरयोगात्, तन्न कश्चिद्भावाभावयोः सम्बन्धः, तदभावान्न तस्य प्रतिपत्तिः, नहि भावादभावोऽपि देशाद्यनपेक्षः स्वतन्त्रः प्रत्ययविषयः, अतो यदस्ति किञ्चिन्निमित्तमात्रं तन्न प्रमाणगोचरः, यच्च प्रतीयते देशाद्यपेक्षं तन्निरूप्यमाणं न तत्त्वतोऽस्तीति कथमभावः क्वचित्प्रमेयः स्यात् ?, तद्भाव एवैकदा, ततः स एव न, न तु तस्य पश्चादभावः। इतश्च नाभावस्य निरूप्यमाणं किञ्चित्तत्त्वमस्ति, यतो भवनधर्माऽसौ भवेदभवनधर्मा वा ?, प्रथमपक्षे भाव एवाभाव इत्यभिधानं कृतं स्यात्, भवतीति हि भाव उच्यते, ततो नह्य(यद्य)भावोऽपि भवति तदा कथमयं न

भावः ?, अथ द्वितीयपक्षस्तर्हि यद्ययमभवनधर्म्माऽपि सन्नभ्युपगम्यते तदा सत्त्वमागतमिति विरोधिनः सदा सन्निधानाज्जगति भावस्य वार्त्ताऽप्युच्छिद्येत। किञ्च–अयमेकभावसम्बन्धी वा अनेकभावसंबन्धी वा ?, यद्येकसम्बन्धी तदा वक्तव्यं कस्तत्र विशेषो येन तस्यैवासौ नान्यस्येति,तन्निवृत्तिस्वभावत्वादिति चेत्,न, तत्राप्ययमेव वृत्तान्तः, तन्नैकभावसम्बन्धित्वमस्य युक्तं, नापि सर्वसम्बन्धित्वम्, एकस्य विनाशे उत्पादे वा सर्वविनाशोत्पादप्रसङ्गात्,न चैवमस्ति,तन्नाभावस्य केनचित्सम्बन्धावगमः,तस्मात्कल्पनामात्रदर्शितसत्ताक एवायं, नतु तात्त्विकः कश्चिदिति तन्नास्तीति व्यवहारमात्रमेव, तथा चाभावाभावेऽपि नास्तीतिव्यवहारस्य प्रसिद्धेः युक्तमेवेदं, यथा 'न तस्य किञ्चिद्भवति, न भवत्येव केवल'मिति, अत्रोच्यते–ननु सर्वस्य ज्ञानमुपजायते 'इदमस्तीदं नास्ती'ति, एतयोश्च भिन्नावभासित्वाद्वैलक्षण्यं सुप्रसिद्धमेव, एकस्य भावप्रतिभासित्वादपरस्य चाभावावभासित्वात्, नन्वेतयोः कतरद्भावस्य प्रतिभासि ? कतरदभावस्य ?, ननु स्फुटे प्रतिभासभेदे कुतस्त्यः संशयः ?, प्रतिभासोत्पादादेव, भावो हि सामर्थ्यलक्षणः शास्त्रे गीयते, तद्विलक्षणेन चाभावेन भवितव्यं, अन्यथा तयोः स्वरूपाभेदाद्वैलक्षण्यं न स्यात्, तस्मादभावेनासमर्थेनैव भवितव्यं, असामर्थ्याच्चाजनकत्वं, ततः कुतः प्रतिभासः ?, सामर्थ्याभ्युपगमे वा भावस्यैवाभाव इति नाम निवेशितं स्यात्, न च नाममात्रनिबन्धनं वस्तुतत्त्वं, तस्माद्भाव एव वस्त्वन्तरासंसृष्टतयोपलभ्यमानः पूर्वोक्तं ज्ञानद्वयमुत्पादयति, अत इदं नास्तीति ज्ञानं भावग्राहिप्रमाणसामर्थ्यादुत्पन्नं, न प्रमाणान्तरात्, भावग्राहिप्रमाणमेव चान्यापेक्षयाऽनुपलब्धिरिति, अत्रोच्यते–भावसामर्थ्यादस्योत्पादे सत्यस्तीत्येव भवेत्, न तु नास्तीति, जनकस्य भावैकस्वभावत्वात्, यथाऽनुभवं च विकल्पेनोत्पत्तव्यं, नत्वन्यथा विकल्पः, तत्रैतत्स्यात्–जनकस्यान्यापेक्षया प्रतिषेधरूपताऽप्यस्तीति नायं दोषः, एवं चेत् भावाभावस्वभावो भावो भवद्भिः स्ववाचा प्रतिपन्नो भवेत्, भावैकस्वभावत्वेऽन्या-

अभावस्य स्वभावता

पेक्षप्रतिषेधरूपताया अयोगात्, अन्यथा स्वरूपापेक्षयाऽपि प्रतिषेधापत्तेः, यथा ह्यन्यापेक्षयाऽसत्त्वाभावेऽप्यस्य तद्रूपताप्रतिषेधस्तथा स्वरूपसत्त्वासत्त्वेऽपि स्वरूपसत्त्वप्रतिषेधः कथं न स्यात्?, अथासत्त्वं भावस्वभावादतिरिक्तं प्रतिषिध्यते, भावस्वरूपसत्त्वरूपत्वं त्वसत्त्वमिष्यत एव अहेतोः, किं काणादं तर्ककौशलं यदेवममी स्वस्वभावव्यवस्थितानपि भावानन्योऽन्यस्वभावसङ्कीर्णान् समर्थयन्ते, यदा हि स्वरूपसत्त्वादपरं नासत्त्वं तदा निर्विशिष्टं सत्त्वमेवेति कुतो वस्त्वसङ्करसिद्धिः?, स्वरूपविशेषणादेवेति चेत्, स्वरूपेण सत्त्वं स्वरूपसत्त्वमिति हि प्रतिपाद्यमाने न वस्त्वन्तरावकाशः, नन्वेतद्विशेषणं पररूपासत्त्वमन्तरेण नावस्थितिं बध्नाति, स्वरूपेण सत्त्वं पररूपेण त्वसत्त्वं, नतु सत्त्वमात्रमेवेदं, अतः कथं न भावाभावस्वभावाभावसिद्धिः?, न चासदंशः सदंशादेकः कश्चिदतिरिक्तो येन तयोरपि परस्परासंकलितरूपसिद्ध्यर्थं भावान्तरकल्पनायामनवस्था, कथञ्चित्तद्भेदस्त्वेतावतैव येन स्वहेतोरेव स्वभावतोऽसङ्कीर्णरूपाणामर्थानामुदयो, न तु सन्मात्रनियतानामेव, पदार्थाविशेषप्रसङ्गादिति। न चात्र यदि भावः अथाभावः इति विरोधः सावकाशः, निमित्तभेदात् स्वरूपेण भावः पररूपेण चाभावः, नतु स्वरूपेणैव भावश्चाभावश्चेति, तदन्यथा वस्तुतत्त्वमन्यथा च विरोधोद्भावनप्रयासः परेषामित्यलमतिजल्पितेन। तदेवं सिद्धे भावाभावस्वभावे भावे न भावमात्रादेवाध्यक्षजन्म, किन्तु भावाभावोभयस्वभावाद्भावात्, न चाभावस्य तुच्छरूपतया व्यापाराभावः, तत्तुच्छरूपताया असिद्धेः, वस्तुधर्मस्यैव कस्यचिन्नास्तीत्यवभासनिमित्तस्याभावरूपत्वप्रतिज्ञानात्, ततस्तथाभूताद्वस्तुनः समधिगतस्वस्वभावं सिद्धमभावविषयं प्रत्यक्षं, अतः प्रत्यक्षनिषेधेन चानुमानमपि प्रतिषिद्धमेवे'त्यादि यदुक्तं परेण तत्परिश्रममात्रमापन्नं, यत्त्वनुपलब्धेरन्योपलब्धिरूपाया नास्तीति व्यवहारसाधकत्वमभ्यधायि तत्र न वयं विप्रतिपद्येमहि, केवलमभावं विना न नास्तीति व्यवहारः प्रभवतीत्यवश्यमभावोऽभ्युपगन्तव्य इति ब्रूमः, यदि तु वस्तु वस्त्व-

न्तरेणात्मानं मिश्रयेदपि तदा नाभावस्तात्त्विकः कश्चिद्, अपि तु नास्तीति व्यवहार एवेत्यपि प्रतिपाद्यमानं मनीषिणां मनो रमयेत्, तत्त्वतः सकलसजातीयव्यावृत्तेऽपि वस्तुतत्त्वे नास्तीति व्यवहारमात्रं न त्वभाव इत्यभिधाने स्वरूपाव्यावृत्तेऽपि वस्तुन्यस्तीति व्यवहारमात्रमेव, न त्वेतज्ज्ञानगम्यः कश्चिद्भाव इति प्रसङ्गे शून्यवादाश्रयणमेव शरणं संपनीपद्यते। अथैनमपि कश्चिदङ्गीकुर्यात् तदा विद्वद्भिर्जोषमासितव्यं, तस्य वादेऽनधिकारात्, सर्वाभावे हि कस्मै किं केन प्रतिपादयेदित्यादेरुक्तत्वात्, यथा चाभावस्यात्रेदानीमस्याभाव इति देशादिविशेषत्वेन प्रतिपत्तिस्तथा भावस्यापि, तथाहि—सोऽपि अत्रेदानीमस्य च भाव इति प्रतीयते, तत्किं सूक्ष्मेक्षिकामेव ख्यापयितुं भावाभ्युपगमः?, अथायमबाधितबोधगोचरचारितामनुभवन्न प्रत्याख्येयः, अभावे प्रद्वेषः किंनिबन्धनः? भावाभावयोर्नावभासं प्रति विशेषः, स्वरूपसत्त्वावभासवत्पररूपासत्त्वावभासस्यापि बाधकानुपलब्धेः, अनुपकार्योपकारकस्वभावत्वमप्यस्यानुपपन्नं, वस्तुधर्मत्वोपपादनात्, न च न भावसम्बन्धित्वमस्य, भावाभावयोस्तादात्म्यस्यात्रैव प्रतिपादनात्। प्रतिषिध्यमानेन भावेन न तदभावस्य तादात्म्यमिति चेत्, न, तेनैव तादात्म्यात्, घटादिकस्यैव पटादिरूपतया प्रतिषेध्यत्वात्, यतो घटादिः स्वरूपनियतः सन्न पटादिरूपतां प्रतिपद्यते, तेन न पटादयः, कपालादिरूपतामापन्नो वा मृदाद्यात्मा न घटादिरूपतानास्कन्दि भवतीति कपालादौ घटाद्यभावः, ततः सिद्धस्तादात्म्यलक्षणः सम्बन्धो भावाभावयोः, तेन यदुच्यते परेण—यथा व्यतिरिक्तमपि भावांशादभावमिच्छता भावांशः स्वभावेनासङ्कीर्णरूपः कल्पनीयः, अन्यथा स एव भावांशोऽसिध्यत्, न च स्वभावेनासङ्कीर्णरूपतायामसत्यां पृथग्भूताभावांशसद्भावेऽपि सा युक्तिमती, स्वहेतुबलायातस्य सङ्कीर्णरूपस्याकिञ्चित्कराभावांशसम्भवेऽपि त्यागायोगात्, न च तेनैव तद्विनाशनं, विनाशहेत्वयोगस्य प्रतिपादयिष्यमाणत्वात्, तेन सङ्कीर्णरूपविनाशने वरं स्वहेतो-

रेव स्वभावतोऽसङ्कीर्णरूपाणामुदयोऽस्तु, किं परिव्राड्मोदकन्यायोपगमेन ?, तस्मात्स्वभावत एव भावानां पररूपविकलत्वाद-भावांशो नान्य इत्यादि, तदपि न बाधकं, व्यतिरिक्ताभावांशकल्पनाऽयोगात्, एतावत्तु ब्रूमो–नायं भावो भावस्वभाव एव, किन्त्वन्यापेक्षयाऽभावस्वभावोऽपीति चित्रैकशबलरूपः, एतच्च 'न च स्वभावेनैवासङ्कीर्णरूपतायामसत्यां पृथग्भूताभावांशसद्भावेऽपि सा युक्तिमती'त्यादि प्रतिपादयताऽपरेणापि प्रतिपत्तव्यं, यदि चायं केवलो न क्वाप्युपलभ्यत इति प्रतिषिध्यते, नीलमुत्पलमित्यादि-प्रत्यये नीलादिगुणः कथमेष्टव्यः ?, सोऽपि हि द्रव्याश्रितत्वेनाभासते ।

**अपोहनिरासः**–अथायं प्रत्ययः शब्दारूषितः, अन्यापोहमात्रविषयश्च यब्द इति न ततस्तत्त्वसिद्धिः, अत्रापि ब्रूमः–कोऽयमन्यापोहो नाम ?, किं पर्युदासरूपः ? किं वा प्रसह्यरूपः ?, पर्युदासपक्षे तत्सदृशं वस्त्वन्तरमेव विधीयत इति विधिरेव शब्दार्थः संपद्यते, प्रसह्यपक्षे निषेधमात्रं शब्दार्थः प्राप्नोति, तस्य च तदर्थत्वमयुक्तमपीति, परप्रतिपादनार्थं हि प्रेक्षावद्भिः शब्दः प्रयुज्यते, न यथा कथञ्चिदुन्मादादेव, परस्तु नीलाद्यर्थी नानीलप्रतिषेधमात्रं जिज्ञासते, तेनाजिज्ञासितं प्रतिपादयन् प्रतिपादकः कथं नाम प्रेक्षावान् ?, अथ किमानयामीति जिज्ञासायामनीलमपि जिज्ञासितं, नीलमित्युक्ते च तन्निषिध्यते, एवं च न प्रतिपाद्यस्य विधावेव जिज्ञासा, न निषेधे, प्रतिपादकोऽपि तदभिप्रायानुसारेणैव प्रतिपादयति, सामर्थ्याच्च विधिप्रतिपत्तिः, नैतदत्र, यतः प्रतिपाद्यस्य सामान्येन विधावेव जिज्ञासा, न नियममात्रे, सामर्थ्याच्च तत्प्रतिपत्तावन्यप्रतिषेध इति, किञ्च–अयमपोहो भावे भावस्य वा प्रतीयेत ? केवलो वा ?, प्रथमपक्षे भावयोः प्रतीतिः किं तेनैव शब्दान्तरेण वा ?, यदि तेनैव तदा किं भावौ प्रतीयेते ? किं वा अपोहं प्रतीत्य ताविति, न तावत्प्रथमः पक्षः, नहि नीलशब्दे नीलं प्रतीयते, प्रतीतौ कथं तन्निषेधः ?, नीलं च प्रतीत्यानीलापोहप्रतीतौ स्खल-

न्ती प्रतीतिः स्यात्, अथ नीलमेवानीलापोहात्मकं प्रतीयमानमुभयव्यवहारं रचयति तर्ह्यायातोऽसत्पथमिति, नापि द्वितीयः पक्षः, नहि केवलोऽपोहः प्रतीयते पश्चात्तावित्यननुभावात्, नापि शब्दान्तरं किञ्चित्तत्रानीलप्रत्यायकमस्ति येन तदपोहः प्रतीयेत, न चाभावेन भावस्य भवन्मतेन कश्चित्सम्बन्धः, तन्न भावसम्बन्धित्वेनापोहस्य प्रतीतिः, केवलस्य च तस्य प्रतीतौ सर्वशब्दानां पर्यायता स्यात् लिङ्गलिङ्गिनोरभावश्च भवेत्, तथाहि-यदेव लिङ्गं शब्दस्यार्थस्यापि तदेव, तथा विशेषणविशेष्यभावोऽपि न स्यात्, असत्त्वं च जगति न किञ्चिदस्ति यदपोहेन सत्त्वाख्यं साधनं भवेत्, असत्यपि बाह्ये वासनानां नानात्वाज्जनितानां ध्वनीनां न पर्यायतेति चेत् तन्न, वासनानामपि नानात्वानुपपत्तेः, ता ह्यनुभवनिबन्धनाः, एकरूपस्य चापोहस्य प्रतीतौ कथं वासनानामपि नानात्वमिति, अकालापोहस्य चैकरूपत्वादतीतानागतवर्त्तमानव्यपदेशा नोपपद्येरन्, अक्रियानिषेधस्य वा भावैकरसस्य सद्भावे अकार्षीत् करोति करिष्यतीति व्यपदेशानुपपत्तिर्वचनलिङ्गभेदश्च न स्यात्। अपिच-अपोहः किमाश्रितोऽनाश्रितो वा ?, अनाश्रितत्वे न कस्यापि, आश्रितत्वे गुणो वा सामान्यं वा भवेत् ?, यदि प्रतिव्यक्ति भिन्नस्तदा गुणः, अथैकस्तदा सामान्यं, अथापोह्यतेऽनेनेति ज्ञानाकारः, अपोह्यतेऽस्मिन्निति स्वलक्षणं, अपोहनमपोह इत्यन्यनिषेधः, तदेवं विधिरूपापोहाभ्युपगमात् निषेधमात्रे यद्दूषणं, तदसत्, तथाहि-न तावत्सामान्यं शब्दादिविषयः भिद्यमानत्वात्, नापि स्वलक्षणं, प्रत्यक्षवच्छब्देऽप्रतिभासनात्, तदयुक्तं, शब्देनाव्यावृताक्षस्य बुद्धावप्रतिभासनात्, अर्थस्वदृष्टाविव तच्छब्दाः कल्पितगोचराः, नापि ज्ञानं विषयः, तस्यापि स्वलक्षणत्वात्, नापि ज्ञानाकारः, किन्तु दृश्यविकल्पयोरेकीकरणमेवापोहः, तथाहि-प्रतिपत्ता दृश्यं विकल्प्यं चैकत्वेनाध्यवस्यति, ततः स्वलक्षणं ज्ञानं ज्ञानाकारो वाऽपोहः, न निषेधमात्रः केवलः, तस्य विधिरूपतया वस्तुनि प्रतीयमाने सामर्थ्यात्प्रतीतेः, कल्पिताकल्पिततया स्वपरदर्शनयोर्भेदः, अतश्च

'सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थिताः। स्वभावपरभावाभ्यां, यस्माद्व्यावृत्तिभागिनः ॥१॥' तस्माद् हेतोः, यतोऽर्थानां व्यावृत्तिः तन्निबन्धनाः जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः,तस्माद्यो येन शब्देन विशेषः संप्रतीयते न स शक्यस्ततोऽन्येन,तेन भिन्ना व्यवस्थितिः, तेन न सर्वशब्दानां पर्यायता, नापि लिङ्गलिङ्गिनोरभावो विशेषणविशेष्याभावो वा, तथाहि–स्वकारणादेव भावाः सकलसजातीयविजातीयव्यावृत्ता जायन्ते, तेनानेकव्यावृत्त्यात्मकेषु भावेष्वेकव्यावृत्त्या तन्निश्चये व्यावृत्त्यन्तरेणानिश्चिताः, ततस्तन्निश्चयेऽपशब्दलिङ्गप्रयोगो न पर्यायतामाप्नोति, वस्तुभूते चोपाधौ प्रवर्त्तमानः शब्द उपाधिमन्तमशेषोपाध्युपकारकं निश्चाययन्नशेषोपाधीनां निश्चयात्पर्यायतां सर्वशब्दान्तराणामापादयेदित्यादयो दोषा वास्तवे शब्दार्थे प्रसजन्ति, तस्मादपोहपक्षो ज्यायानिति। अत्र प्रतिविधीयते, यत्तावदुक्तं 'दृश्यविकल्पयोरेकीकरणमपोहो, न तुच्छरूपः,' तदेकीकरणं किं तेनैव ज्ञानेन प्रतीयते? किं वा ज्ञानान्तरेण?, न तावत्तदेव ज्ञानं स्वाकारं दृश्यं च पृथक् प्रतिपद्य ऐक्यं प्रतिपद्यते, अप्रतीतेः क्षणिकत्वाच्च, नापि ज्ञानान्तरं, यतस्तद्भिन्नं स्यात् एकं वा भवेद्?, भिन्नं कथमैक्यं प्रत्येति?, स्वसंवेदनं हि ज्ञानविषयं दर्शनं तु दृश्यविषयं, एकं तु यदि द्वयं प्रत्येति कथमैक्यं?, अथैक्यं प्रत्येति कथं द्वयोरेक्यं? इति। अथ वासनाप्रबोधाद्विकल्पविज्ञानं सकलसजातीयसाधारणमुत्पद्यते इत्येकत्वग्रहणमुच्यते, न, वस्तुभूतसमानपरिणाममन्तरेण सजातीयविजातीयविभागानुपपत्तेः, एकार्थक्रियाकारित्वाद्विलक्षणानामपि सजातीयत्वमिति चेत्, न, अन्वयव्यतिरेकाभ्यां व्यभिचारात्, केचिदेकार्थक्रियाकारित्वेऽपि न सामान्यव्यवहारविषयाः यत्र न समानाकारोपलम्भः, तथाहि–हरीतक्यामलक्यादयो भावा ज्वरोपशमनाद्येकार्थक्रियाकारिणोऽपि न समानरूपतया व्यवह्रियन्ते, यत्र तु समानाकारोपलम्भस्तत्राभावेऽप्येकार्थक्रियायाः सामान्यव्यवहारः, यथा दुह्यमानायामदुह्यमानायां च गवि।

किञ्च–क्रियायाः किमन्यक्रियैक्यादैक्यं ? किं वा स्वरूपेण ?, प्रथमपक्षेऽनवस्था, द्वितीये त एवार्थक्रियाकारिणः किं नैकीभवंति ?, अर्थक्रियायास्तुल्याध्यवसायविषयत्वेनैकत्वं, भावानामपि तथैवास्तु किमनेन व्यवधिना ?, तथा च वस्तुनः समानसमाकारोऽप्यभ्युपगन्तव्यः, अन्यथा गोमहिष्यादौ न तथाऽध्यवसायः, शाबलेयादिष्वध्यवसायः किंनिमित्तः स्यात् ?, वासनामात्रप्रभव एवेति चेत् तर्त्कि शाबलेयादयः परस्परमत्यन्तविसदृशस्वरूपाः केनचित्प्रतिपन्ना येनैवमुच्यते ?, सुगतेनेति चेत्, अहो ! तेनैकसन्तानो विज्ञानात्मा प्रतिपन्नः, अपरं तु सर्वं तदत्यन्तविलक्षणमित्यात्मव्यतिरिक्तं सर्वमनेनाचेतनमेव प्रतिपन्नमिति कथं कस्यचित्प्रतिबोधनायास्य प्रयत्नः ?, अथाचेतनेभ्यो व्यावृत्ता भावाः सर्वेऽपि सचेतना अपि विज्ञानस्कन्धमधिकृत्य देशनाप्रयत्नो न विरुध्यते, अस्तु तर्हि समाभ्युपगमः, तथा च सामान्यपक्षोदितदोषानवकाशः, तस्य वस्तुव्यतिरिक्तसामान्यविषयत्वात्, समानपरिणामरूपस्य तु सामान्यस्य वस्तुरूपत्वादेव, तथाहि–वस्तु वस्त्वन्तरेण न तुल्यमेव, नाप्यतुल्यमेव, किन्तु किञ्चित् केनचित्सह तुल्यं कथञ्चित् कथञ्चिच्चातुल्यमतः सामान्यविशेषोभयस्वभावमेव तदिष्टं, यदप्युच्यते–एकप्रत्यवमर्शस्य, हेतुत्वाद्धीरभेदिनी। एकधीहेतुभावेन, व्यक्तीनामप्यभिन्नता ॥१॥" तत्रापि यतः कुतश्चित्स्वरूपातिशयादेकप्रत्यवमर्शस्य स्वविषयस्यैकाकारप्रत्ययस्य हेतुत्वाद्धीर्निर्विकल्पिका भेदिनी वा भाति 'एकधीहेतुभावेन च' अध्यवसितैकरूपाया बुद्धेर्हेतुत्वेन न च व्यक्तीनामभिन्नता भाति (स) सताऽवश्यमभ्युपगन्तव्यः, ततः स एव वस्तुस्वरूपभूतस्तत्र प्रथमानस्तथाऽस्तु, किमन्येन व्यवधिना ?, वस्तुन एव समानासमानस्य सर्वप्रमाणैः प्रतीयमानत्वात्, तदुक्तम्–"न पश्यामः क्वचित् किञ्चित्, सामान्यं वा स्वलक्षणम्। जात्यन्तरं तु पश्यामस्तेनानेकान्तसाधनम् ॥१॥" एवं च समानपरिणामरूपसामान्याभ्युपगमे–"कस्मात्सास्नादिमत्स्वेव, गोत्वं यस्मात्तदात्मकम्। तादात्म्यमस्य कस्माच्चेत्, स्वभावा-

दिति गम्यताम् ॥१॥" इति पराभ्युपगममुपदर्श्य "व्यक्तिजन्मन्यजाता चेदागता नाश्रयान्तरात्। प्रागासीन्न च तद्देशे, सा तया सङ्गता कथम्? ॥१॥ व्यक्तिनाशेन चेन्नष्टा, गता व्यक्त्यन्तरं न च। तच्छून्ये न स्थिता देशे, सा जातिः क्वेति कथ्यताम्? ॥२॥ न याति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमिहा(त्या)व्यसनसन्ततिः ॥३॥" इति, तादात्म्यपक्षोऽपि सामान्यविशेषयोरयुक्त इति यद्दूषणमुक्तं सुगतसुतैस्तदपि न सावकाशं, विशेषा एव कथञ्चित्समानस्वभावाः सामान्यं, समाना एव सामान्यमिति कृत्वा, नन्वेवं सति विशेषा एवावशिष्यन्ते, न सामान्यं, यद्येवं तर्हि किं न यत्किञ्चिद् येन केनचित्सह तुल्यतया प्रतिभासते?, अथ स्वहेतुभ्यः केचिदेव विशेषाः कैश्चित्सह समानाकारा उपजायन्ते, तत्रापि यदि समानाकारा एव ते विसदृशरूपतया कथमवभासन्ते?, अथ विसदृशास्ते समानाकारतया कथमवभासेरन्?, अथ तादृशमेव तत्तेषां स्वरूपं यत्केनचित्सह तुल्यमतुल्यं चावभासते, अत एव तर्हि तत्सामान्यविशेषात्मकमिष्यतां, यत्पुनः यद्वस्तुत्वे सत्यतद्रूपं तस्य ततोऽन्यत्वमेव, यथा सुखाद् दुःखस्य, वस्तुत्वे सत्यव्यक्तिरूपं चेष्यते सामान्यमित्येकान्तसाधनं, तन्न साधु, सकलापरसजातीयविजातीयविलक्षणात्मनः कस्यचिद्व्यक्तिरूपस्य भवन्मतनिर्विकल्पकप्रत्यक्षेऽप्यप्रतिभासनात्, तदपि हि तथाऽवभासेन वस्तु वस्त्वन्तरेण सह समानासमानरूपं प्रतिपद्यमानमस्मदभ्युपगममेव साधयति, न चैका काचिद्व्यक्तिरेव केवला यतो जातिर्भिद्येत, किन्त्वेवंभूतमेव जात्यन्तररूपमेतद्वस्त्विति, अत एव—"सर्वस्योभयरूपत्वे, तद्विशेषनिराकृतेः। चोदितो दधि खादेति, किमुष्ट्रं नाभिधावति? ॥१॥" इत्याद्यपि दूषणमनवकाशं, सामान्यविशेषात्मकवस्तुसिद्धौ तद्विशेषसिद्धेः, परमते त्वेतद्दूषणमनिवार्यमेव, तथाहि—एकस्माद्दध्नो दध्यन्तरं न समानरूपमेकान्तविलक्षणत्वात्, ततो दधि खादेति चोदितो यदि तत्र धावति किमुष्ट्रेऽपि न धावति?, अथासौ न समानः तर्हि यत्तस्य समानं तत्समानाकारप-





रिणमनमवश्यमभ्युपगन्तव्यम्, उभयत्र प्रतिभासाविशेषेऽपि वैलक्षण्यमेव तात्त्विकं, सारूप्यं तु प्रतिभासमात्रनिर्मितमित्यशक्यं वक्तुं, तस्माद्भेदेऽपि सति येन सामर्थ्येन तुल्यरूपतया स्वग्राहिणि विज्ञाने तदवभासते तत्पुरस्कृत्य सामान्यव्यवहारस्तत्र प्रवर्त्तते, ततः सर्वथा सामान्यं निषेद्धुमशक्यं, तेन यदुक्तं 'न तावत्सामान्यं शब्दादिविषय' इत्यादि तदयुक्तं, "द्रव्यपर्यायसामान्यविशेषास्तस्य गोचराः। अविस्पष्टास्त एव स्युरनध्यक्षस्य गोचराः ॥१॥" इति वचनाच्च द्रव्यादयः शब्दस्य विषयः, तस्येत्यनेन तत्र प्रत्यक्षं परामृश्यते, अनध्यक्षं च परोक्षं, तद्भेदश्च शाब्दं प्रमाणमिति, तेन यदुक्तं 'नापि स्वलक्षण'मिति तदप्यपास्तं, द्रव्यादयश्च प्रमाणोपपन्ना इति तद्विषयाः शब्दाः कथं कल्पितगोचराः स्युः?, अथ यथा दृष्टौ प्रतिभासन्ते विषयास्तथा शब्दैरपि प्रतिभासेरन् यदि शब्दा वस्तुविषयाः स्युः, न चैवमस्ति, शब्दादस्पष्टप्रतिभासस्यैव प्रसूतेः, नन्वेवं यथा योगिप्रत्यक्षे सर्वात्मना ते प्रतिभासन्ते न तथा प्राकृतजनप्रत्यक्षे, क्षणिकत्वादेरप्रत्यक्षत्वाभ्युपगमात्, ततः प्राकृतजनप्रत्यक्षमपि कल्पितगोचरमेव भवेत्, अथ सर्वथा वस्तुसाक्षात्कारित्वाभावेऽपि किञ्चिद्वस्तुस्वरूपानुकरणं तदाकारतारूपं क्वचिद्विज्ञानेऽस्तीति वक्ष्यामः, तस्मादर्थग्रहणपरिणाममात्रमेवात्मनो विषयप्रतिभासः, उक्तश्च वादिमुख्येन–न विषयग्रहणपरिणामादृतेऽपरः संवेदने विषयप्रतिभासो, युक्त्ययोगात्, स च परिणामः कर्मक्षयोपशमवैचित्र्यात्क्वचिदस्पष्टरूपः क्वचिच्च स्पष्टरूपः, केवलमुभयरूपोऽप्येष नार्थसत्तामतिक्रम्य कश्चिद्भवतीति न सर्व एव शब्दाः कल्पितगोचराः, य एव भावाः कथञ्चिच्छब्देन प्रतीयन्ते प्रत्यक्षेणापि कदाचित्त एव, केवलं नीलानीलादिशब्दं न योजयति, तथा च भवदागमः–"नीलज्ञानसमङ्गी नीलं जानाति नो तु नील(पद)म्" इति, यन्नीलशब्देनाभिधीयते पीतादिव्यावृत्तं किमपि रूपं तन्निर्विकल्पकप्रत्यक्षरूपनीलज्ञानसमेतः पुरुषो जानाति, नीलमिति तु वाचकं तत्र तदा न योजयतीत्यर्थः, अन्यदा

तु नीलशब्दात्तमधिगच्छेत्, कर्मक्षयोपशमवैचित्र्याच्चित्रे वस्तुनि चित्रतया प्रतिभासप्रवृत्तेः, अथ चोत्पलादिष्वप्ययमेव न्यायः, एवं वर्णसंस्थानादीनामभेदांशाश्रयणेन द्रव्यत्वं भेदांशाश्रयणाच्च गुणादिरूपत्वमध्यक्षतः प्रत्येयं, शब्दोऽप्येवं कदाचित्प्रतीतिमुत्पादयतीति नानयोर्भिन्नविषयता, शब्दयोजनमेव हि तदाऽधिकं, ननु वस्तुरूपस्यैवासत्ता, अशब्दमर्थं शब्दाभेदेन प्रतियन् प्रतिपत्ता कथं न भ्रान्तः ? इति चेत्, तथाहि 'अयं घटः' इत्यादिशब्दाद्वस्तुनाऽधिकरणः प्रत्ययः प्रकाशते, न च शब्दार्थयोस्तुल्याधिकरणत्वम्, एतदप्यसमीक्षिताभिधानं, यतो यद्यप्ययं घट इति प्रतीतिरुदेति तथाऽपि य एव घटशब्दः स एवार्थोऽपीति नावभासः कस्यचिदपि, किन्त्वेतस्याप्रतीतावेवं संवित्तिर्निष्ठायां घटशब्दस्याभिधेयः, तदभिधेयपरिणते च तत्र तथा तदभिधानेऽपि न शब्दार्थयोरभेदनिष्ठैवेति किं प्रतिपत्तुर्भ्रान्तत्वं स्यादिति ?,'सर्वे भावाः स्वभावेने'त्यादिकारिकायां स्वभावपरभावाभ्यां व्यावृत्तिभागित्वं किमभिप्रेतं ?,किं वस्तुनो वस्त्वन्तरेण सहैकत्वं तुल्यत्वप्रतिषेधो वा ?, तत्र नैकत्वं पृथग्भूतवस्तूनां केनचिदिष्टं, तुल्यरूपं तु वर्णसंस्थानवीर्यविपाकादिनानाधर्मवतामशक्यप्रतिषेधं, अध्यक्षानुभवसिद्धत्वात्, तस्माद्यतो यतोऽर्थानामित्यादावपि ये जातिभेदास्तद्विशेषावगाहिनः प्रकल्प्यन्ते त इष्यन्त एव–"निर्विशेषं न सामान्यं, भवेच्छशविषाणवत्। विशेषोऽपि च नैवास्ति, सामान्येन विनाकृतः ॥१॥" इत्यादिवचनाद्विशेषव्यतिरिक्तसामान्यानभ्युपगमात्, तथा च प्रकर्षेण कल्प्यन्ते समर्थ्यन्ते च प्रमाणोपपन्नत्वात्, वस्तुसमानपरिणामरूपसामान्याभ्युपगमे सति तेषामिति द्रष्टव्यम्, अन्यथा विपरीतकल्पनायामपि न राजाज्ञा प्रभवति, अत एव 'तस्माद्यो येन शब्देने'त्यादि अस्मत्पक्षमेव सम्यक् साधयति,तथाऽनेकव्यावृत्त्यात्मकेषु भावेष्वेकव्यावृत्त्या तन्निश्चयेऽपि व्यावृत्त्यन्तरे तन्निश्चयाय तदेव शब्दान्तरप्रयोगाकाङ्क्षा प्रेक्षावतो यदवस्तुगतमेव कमपि विशेषमिच्छति, लिङ्गभेदेऽप्येषामप्ययमेव न्यायः, अनन्त-

धर्मके च वस्तुनि सर्वमेतदुपपन्नं, अनन्तधर्मकत्वं च वस्तुनो न धर्माणामत्यन्तमभेदे भेदे वा, किन्तु स्याद्वादनीत्या, अत एव नीलमुत्पलमित्यादौ तुल्याधिकरणता, एकान्ताभेदे ह्येकमेव रूपमिति केन कस्य तुल्याधिकरणता ?, अत्यन्तभेदेऽपि च घटपटादिवन्न तुल्याधिकरणं, समवायादितुल्याधिकरणप्रत्ययनिबन्धनमिहैव प्रतिषेत्स्यते, तस्माद्भेदाभेदाश्रयणेनैव तदुपपत्तिः, अत एव चैकोपाध्युपकारकत्वनिश्चयेऽपि नाशेषोपाध्युपकारकत्वेन सर्वथा तन्निश्चयः, यथाक्षयोपशमं कथञ्चिदेव निश्चयोपपत्तेः, ततः कथमेकशब्द उपाध्यंतरविषयाणां शब्दान्तराणां पर्यायतामापादयेत् इति ? नाविषयः शब्द इति सिद्धं नीलादिशब्दवाच्यानां नीलादिगुणानां पराश्रितत्वेऽपि सत्त्वं, तद्वदभावस्यापि यदि स्यात्तदाकाङ्क्षा, निःशेषं तु शेषं फल्गुप्रायं परोदितमित्युपेक्षितव्यं, भवनधर्मा चायं यतो नाभावो वस्तुव्यतिरिच्यमानमूर्त्तिः, वस्तु च भवति ततः कथमयमभवनधर्मा भवेत् ?, तर्हि कथमयमभावः ? इति चेत्, यतो भवतीति भावोऽभिधीयते, नान्यद्भावस्यापि लक्षणमिति, नैतत्सत्, नास्तीति प्रत्ययजनकत्वेनैवास्य भावात्, भवनं हि क्वचिदुत्पादस्वरूपं क्वचित्सदिति प्रत्यक्षजनकभावस्वरूपं, तत्रोत्पादरूपं भवनं भाववदभावेऽपि यद्यप्यस्ति तथाऽप्यस्तीतिप्रत्ययाद्विलक्षणप्रत्ययहेतुतां प्रतिपद्यमानः सन्नाभावोऽपि भावो भवितुमर्हति, विचित्ररूपा हि पदार्था भवन्ति, नहि तत्पदरूपभवनसाम्येऽपि नीलं पीतरूपतां कदाचित्प्रतिपद्यते, भावधर्मस्तु कश्चित्तादृशो भवति यः पररूपतया तन्निषिध्य प्रतिनियतस्वस्वभावमग्रमवस्थापयति, स च प्रमाणेन प्रत्येतुं शक्यस्तस्माद् युक्तमुक्तं 'न तु नाशः प्रध्वंसाभावः, न च सामान्यतोऽप्यभावव्यवस्थापकं किमपि प्रमाणमस्ती'त्यादि । किञ्च—धर्मकीर्त्तिः 'स्वभावतोऽनश्वरे नश्वरे वा भावे न विनाशहेतोरुपयोगः, तस्माद्विनाशेऽनपेक्षो भावस्तद्भावनियत इति यः सन् स विनाशी'त्याद्यभिहितवान्, तत्र यदि नाशो न विद्यत एव तदा नाशहेतोरेवोपयोगः किमित्यत्र प्रतिक्षिप्यते ?, नाशस्वरूपस्यैव

प्रतिक्षेपार्हत्वात् , न चैवमपि तत्स्वरूपमेव निषिद्धं,मुद्गरादिहेतुव्यापारस्यैव विनाशजननं प्रति प्रतिषेद्धुमभिप्रेतत्वात् ,नाशस्वरूपमपि चेत् प्रतिषिध्येत तदा तद्भावनियत इति वचो व्याहन्येत, यतस्तद्भावो विनाशभावः, विनाशश्च नास्तीति कथं भावस्तन्नियतो भवेत् ?, भावस्वरूपमेव क्षणस्थितिधर्मकं नाशः, ततो विनाशनियतत्वे स्वरूपनियत एवायमिति नापरः कश्चिन्नाश इति चेत् तत्किं स्वरूपे सत्येव घटो विनश्यति ?, नेति चेत् कथं स्वरूपमेव नाशः ?, अविनश्यति हि तत्र नाश इति नाममात्रं स्यात् , न पुनरयं विनश्येत्, क्षणस्थितिधर्मकत्वादेव क्षणादूर्ध्वमेष विनश्यति, न च तदा एतस्य विनाश इति त्वपूर्वं वचनकौशलं, किञ्च—यो हि यस्य स्वभावः स स्वहेतोरेवोत्पद्यमानस्तादृशो भवति, न पुनस्तद्भावे हेत्वन्तरमपेक्षते, प्रकाशद्रवोष्णकठिनद्रव्यादिवत् , नहि प्रकाशादयस्तदात्मान उत्पन्नाः पुनः प्रकाशादिभावे हेत्वन्तरमपेक्षन्ते, तदात्मनस्तादात्म्याभावे नैरात्म्यप्रसङ्गात् , तद्वदस्थितिधर्मा चेत्स्वभावतो भावो न पुनस्तदात्मतया हेत्वन्तरमपेक्षत इति प्रतिपादयत्येषः, नाशश्च भावकाले नोपलभ्यते यथा तत्क्षण एव प्रकाशद्रवोष्णकठिनादयः स्वभावाः, ततः कथमिव भावविनाशयोस्तन्मते तादात्म्यं स्यादिति सविस्मयं नश्चेतः, ननु नायं नाशोऽन्य एव कश्चिद्भावस्य, किं तर्हि ?, स एव भावो न भवति, यदि हि कस्यचिद्भावं ब्रूयात् न भावोऽनेन निवर्त्तितः स्यात्, तथा च भावनिवृत्तौ प्रस्तुतमेवोक्तं स्यात् , न हि कस्यचिद्भावो, न भावो न भूतो नाम, तदा न भूतो यदि स्वयं न भवेत् , अत्रापि यदि भावो न भवति—स्वरूपं न लभत इति वाक्यार्थः तदा मा भूत् , नहि भूतस्य पुनर्भवनेन प्रयोजनं, पूर्वक्षणलब्धात्मलाभस्तु कथं निवर्त्तते ?, तथा च भावनिवृत्तौ प्रस्तुतायामप्रस्तुतमेवोक्तं स्यात् , नहि किञ्चिन्न भूतमिति भावो निवृत्तो नाम तदैव निवर्त्तेत, यदि कथञ्चिदात्मभूतोत्तरपर्यायरूपेण निवृत्तिपरिणामेन परिणमेत् , तस्माद्यदैव वस्तु विनश्यति नाशोऽपि तदैव युक्तः, यथा शृङ्गाच्छरो जा-

अपोह-
निरासे
प्रध्वंसाभा-
वनिरासः

यत इत्यादौ, यदैव जायते तदैव जन्मेति, ततो युक्तमुक्तम्–"अभावेऽपि च नाशस्य, वक्तुमेतदसाम्प्रतम् । न तस्य किञ्चिद्भवति, न भवत्येव केवलम् ॥१॥" इति, यस्मादयमवश्यभावधर्म एवाभ्युपगन्तव्यः, तदाह–"भावधर्मोऽस्तु तेनायं, भेदाभेदप्रसिद्धितः। पूर्वाभावात्मता तेन, रूपेणास्यैव वर्त्तनात् ॥१।" नायमसन्नेव नाशः, किन्तु?, भावधर्मः, भावधर्मत्वं चास्य भेदाभेदप्रसिद्धितः, यतोऽयमेव मृदादिरूपो भावः कुम्भाद्यभावात्मना कपालादिरूपेण परिणमतीति प्रतिप्राणि प्रसिद्धमनाशङ्कनीयमेवैतत्, उक्तश्च–"कपालानां य उत्पादः, स एव हि घटव्ययः। अन्यो न नाम नाशोऽस्ति, मध्ये कुम्भकपालयोः॥१॥" अयमत्राभिप्रायः–द्रव्यपर्यायोभयस्वभावं वस्तु, ततो न द्रव्यव्यतिरिक्तं ऊर्ध्वाद्याकारं रूपपर्यायमात्रं घटः, नाप्यूर्ध्वाद्याकारव्यतिरिक्तं द्रव्यमात्रं, किन्तु संवलितमुभयं, ततो यदा कपालाकारोत्पादस्तदाऽपि घटः, ऊर्द्ध्वाद्याकाराभावेऽपि तन्मृदो भावात्, तर्हि विनष्टो घट इति कथं?, तत्संस्थानाभावात्, तस्यापि कथमभावः?, कपालरूपतया परिणामात्, यदि नाम कपालादिरूपतया परिणामस्तदोर्ध्वाद्याकारस्य किमागतं? येनायं न भवतीति चेत् तत्किमूर्ध्वाद्याकारो मृदतिरिक्तः कश्चित्? येनास्यां कपालरूपतामापन्नायामप्ययमवतिष्ठेत, मृदेव हि कथञ्चित्स्वरूपस्थित्यात्मकं कपालात्मकं पूर्वरूपयोगाभावात्मकं च स्वरूपं बिभर्त्ति, तेन विनष्टो घट इत्युभयमप्युपपन्नं, एवं हि –"न तस्य किञ्चिद्भवति, न भवत्येव केवलम्।" इत्यपि वचः सङ्गच्छते, तस्य भावस्य किञ्चिन्न भवति, भिन्नस्याभिन्नस्य वा नाशस्यायोगात्, किन्तु स्वयमेवासौ न भवति, पर्यायान्तराध्यासितः पूर्वपर्यायतया स्वयमेव व्यावर्त्तत इत्यर्थः, तुलोन्नामावनामवदेककालत्वं पूर्वविनाशोत्तरोत्पादयोरेकवस्त्वाश्रितत्वं च, अन्यच्च–यो यदात्मा स स्वसत्तामात्रेण तादृशो भवति, न भूत्वा तद्भावे पराभिसंस्कारमपेक्षत इति 'स्वभावतोऽस्थितिधर्मणो भावस्य न किञ्चिन्नाशकारणे'रित्यपि धर्मकीर्त्तिवचनमेवमभ्युपगम एव साधु

स्यात्, अन्यथा यदा स्थितिस्तदा भावस्तामेव कामयमानोऽनुकूलनायकवन्नापरामस्ति(त्वक्षणतः कामयतेऽ)न्यां, यदा त्वयं स्वयमेव न तदाऽस्थितिधर्म्मक इत्यत्यन्तसाहसम्, अस्तिधर्मिणि धर्मायोगात्, स्वयमसतो भावस्यास्थित्यात्मकत्वमित्यपूर्वमेतत्तादात्म्यं, तन्नास्य सतोऽसतो वाऽस्थितिधर्म्मकत्वमुपपद्यते। क्षणस्थितिरेवास्थितिरित्यपि तदैव चारु यदा द्वितीयादिक्षणेष्वस्थितिरप्यस्य काचित्, कल्याणचन्द्रेऽप्युक्तं–'यतश्च द्वितीयक्षणोत्पत्तिकाल एव प्रथमक्षणनिवृत्तिः तेनैकक्षणस्थायी भावो विनाशशब्देनोच्यत' इत्यादि, अथ स्वहेतोरेकक्षणस्थायी भाव उत्पन्नस्तेन तदात्मको विनाशः कथ्यते, नन्वेवमप्यस्मदभ्युपगममेव समर्थयसे, एकक्षणः स्थायी चेति तात्पर्यात्, ततस्तत्क्षणस्थायि च सिद्धं किमपि रूपमुभयधर्मयोगि, अन्यथा एकक्षणस्थायित्वस्यैव दुरुपपादत्वात्, यदि चैकक्षणस्थितिरेव क्षणान्तरे तस्यास्थितिस्तर्हि यावदसौ तत्क्षणनियतस्तावत्क्षणान्तरे मा भूत्, एतच्चेष्यत एव, न हि नियतदेशदशासञ्चरिष्णवो भावास्तदैव तदन्यथा भवन्ति, किन्त्वेवमभ्युपगमे क्षणान्तरे सुतरामुन्मेषः स्यात्, तदस्थितेः प्रथमक्षण एवापगमात्, तथा चैकान्तनित्यमिवैकान्तानित्यमपि न कदाचिद्विनश्येदिति सुगतसुतानामागतः स्वसूक्ष्मेक्षिकया क्षणभङ्गभङ्गः, तस्माद्भावधर्म एवायं नाशः, भावो मृदादिद्रव्यं तदस्य धर्मः कथञ्चित्तदात्मकत्वात्, एकान्तेन तदभेदे भेदे वा नाशस्वरूपस्यैवायोगात्, अत एव कपालोत्पादे तदूर्ध्वाद्याकार एव निरुध्यते, न वस्त्वन्तराणि, न खलु तद्द्रव्यं वस्त्वन्तरात्मकतां बिभर्त्ति, ततः कथं तन्निवर्त्तमानं तानि निवर्त्तयेत्?, न तार्किकाभियोगादेव भावाः स्वभावस्थितिमतिवर्त्तन्ते, तेन 'किञ्चायमेकभावसम्बन्धी भवेत्? सर्वसम्बन्धी वा?, यद्येकसम्बन्धी तदा वक्तव्यं कस्तत्र विशेषो येन तस्यैवासौ नान्यस्ये'त्यादि यदुक्तं परैस्तदपि प्रत्युक्तमवसेयं, तस्यैव द्रव्यस्य तन्निवर्त्तिस्वरूपं, नान्यस्येति कमपरमद्यापि विशेषमिच्छसि?, साध्यसिद्ध्यङ्गविशेषसद्भावेऽपि तदप्रतीतावनवस्था, अतश्च

नापि भावान्तरकरणे तदवस्थस्य भावस्य किञ्चिदिति, अथोपलब्ध्यादिप्रसङ्ग इत्यपि प्लवते, ननु यद्युत्तरकार्यात्मकं भावान्तरमेवाभावस्तदाऽग्निसंयोगोऽङ्गारादिजन्मनि व्याप्रियत इति, इष्टमेवास्माकं, किन्तु भावान्तरकरणेऽभ्युपगम्यमानेऽग्न्यादीनामिन्धनादावव्यापारात्तदवस्थमेवेन्धनादिकं, ततश्च यथाऽग्न्यादिसंयोगात्प्रागिंधनादेरुपलब्धिः अन्या च तत्साध्यार्थक्रिया तथाऽङ्गाराद्युत्पत्तावप्युपलब्ध्यादेः प्रसङ्गः केन विनिवारयितुं शक्यः?, स्यादेतत्–यद्येकान्तावस्थितस्यैव तस्य तद्भावान्तरमेकान्तभिन्नं भवेत्, यदा तु स एव भावस्तत्स्वभावत्वात्तद्रूपतां प्रतिपद्यते तदाऽग्न्यादिसंयोगोऽङ्गारादिजन्मनि केवले न क्वचिदपि व्याप्रियते, किन्तु काष्ठपर्यायपरिणतस्कन्धस्यैवाङ्गारादिरूपापत्तौ, तेन सर्वस्येन्धनादेरिव गवादेरपि तथाभावो मा भूदित्यङ्गारादेर्ध्वंसव्यवस्थाया निबन्धनमभिधानीयं, तस्मिन् सति तन्निवृत्तेरिति चेत् अहो! वचनकौशलं, यतो निवृत्तेस्तुच्छस्वभावतानङ्गीकरणात् तदेव भावान्तरमङ्गारादिकं निवृत्तिं ब्रूयात्, तदयमर्थः सम्पन्नः–अङ्गारादिभावादङ्गारादिकध्वंसः काष्ठादेरिति, न चाङ्गारादिभावे तद्भावः, स्वात्मनि हेतुभावायोगाद्, अग्न्यादिभ्यश्च तदुत्पादवचनात्, इन्धनाद्युपमर्देनाङ्गारादिभावादस्य ध्वंसरूपतेति चेत् कोऽयमुपमर्दो नाम?, यदि निवृत्तिः साङ्गारादिलक्षणैवेति न पूर्वस्माद्विशिष्यते, तस्मात्स्वरसतो निवर्त्तन्ते काष्ठादयोऽग्न्यादिभ्यश्चाङ्गारादिजन्मेत्येव भद्रकमिति यदुक्तमर्चटेन तदभद्रकमित्यवगन्तव्यं, यथोक्तविशेषोपगमे निरवकाशत्वादस्य, स्वरसतश्चान्यथा वा भावनिवृत्तिं प्रति कर्तृत्वं न भजेयुः यदि द्वितीये क्षणे न किञ्चिदेव, ततश्च स्वरसतो निवर्त्तन्ते काष्ठादयः इत्यप्ययुक्तं, न च सत्ताकाल एव निवर्त्तन्त इति भवतोऽभ्युपगमः, अथ प्रथमेऽपि क्षणे भावो भवतीति लोकेऽभिधीयते, तत्र यदि भावः कथं भवतीत्युच्यते?, तस्मात्सर्वत्र बुद्धिस्थमेव भावं कृत्वा विधिप्रतिषेधहर(वच)इति तदसत्, यतस्तत्र भवनं न भावस्वभावादन्यत्, ततो द्रव्यस्य तथापरिणामाद्युक्तेयं

बुद्धिः, न भवति निवर्त्तते वेत्यादिका तु तस्मिंस्तदा तदात्मतामनाविशति कथं स्यात्?, भवन्ती वा न भावस्वभावापोहेन व्यवतिष्ठते इति सुव्यवस्थितं क्षणिकत्वं भवेत्, तस्मादस्मदुक्तन्यायादेवेयं विनाशव्यवस्था ज्यायसीति। ननु तथाऽपि विनष्टो घट इत्यादि व्यवहारप्रवृत्तौ द्रव्यपर्यायोभययोगिनो घटशब्दस्य कपालकाले कथं विनिवेशः?, उच्यते, नात्र घटशब्दस्यैकस्यैव विनिवेशः, किन्तु विनष्टो घट इति शब्दद्वयस्य, तथा च न दोषः, घट इत्यनेनानुभूततत्पर्यायस्य विनष्ट इत्यनेन तद्व्यावृत्तस्य च कथञ्चिदनुगतस्यैकस्य रूपस्य प्रतिभासनात्, विनष्टविशेषणरहितो हि घटशब्दस्तदुभयरूपतामाह, विनष्टविशेषणसहितस्तु तद्द्रव्यस्यानुभूततत्पर्यायतामिति, तस्माद्विनष्टो घट इत्यादिर्व्यवहारोऽपि मृदादिरूपमेवानुगतव्यावृत्तस्वभावं भावमावेदयन् भावधर्मत्वमभावस्य ख्यापयति, प्रकारान्तरं तु न क्वचित्केनचित्प्रमाणेनोपलब्धं व्यवहृतिपथमवतीर्णं वा, ततः कथमभ्युपगमयोग्यमस्तु कुशलबुद्धीनां, ततः साधूक्तं "भावधर्मोऽस्तु तेनाय" मित्यादि। एतेनैतदपि प्रत्युक्तं यदुच्यते परैः–यथा विनाशस्याहेतुकत्वादुदयानन्तरं ध्वंसात् कुतोऽनुगताकारस्य द्रव्यस्य सम्भवः?, तथा च प्रयोगः–ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनि(वृत्तौ न निवर्त्तन्ते)[यतो] यथाऽन्या कारणसामग्री स्वकार्योत्पादने, अनपेक्षश्च विनाशं प्रति भाव इति, तथाहि–विनाशहेतुना किं स्वरूपं क्रियते? किं वा अभावः क्रियते?, न तावत्स्वरूपं, तस्य स्वहेतोरेवोत्पन्नत्वात्, किञ्च तत् स्वरूपं नित्यम्? अथानित्यं?, यदि नित्यं तदा तस्याविनाश्यत्वाद् अकिञ्चित्करो विनाशहेतुः, अथानित्यं तदा तस्य स्वत एव नश्वरत्वात् किं वत्स! हेतुना?, अथ कालान्तरस्थायिनो विनाशहेतुना विनाशः क्रियते, न, कालान्तरस्थायित्वे नित्यतैव स्यात्, येन हि स्वभावेन भावः संवत्सरं स्थितः स चेत्संवत्सरान्तेऽपि स्वभावः पुनरन्यसंवत्सरान्तरमासितव्यं तत्राप्येवमिति कालान्तरस्थायित्वाभ्युपगमे नित्यतैवापतति, तन्न पक्षान्तरसम्भव इति, तत्र च विना-

नाशस्य धर्मता

शहेतोरकिञ्चित्करत्वमिति, तन्न (परः) स्वरूपकारणाद्विनाशहेतुः। अथाभावं करोति तदपि नास्ति, यस्मादभावः किं पर्युदासरूपः ? किं वा प्रसज्यरूपः?, तत्र न तावत्पर्युदासरूपः, तस्य वस्त्वन्तरलक्षणत्वात्, तत्करणे न विनाशस्य किञ्चित्कृतं स्यात्, तथाहि-मुद्गराद्यदि कपालानामुत्पादो घटस्य किमागतं?,तद्ध्वंसेन तेषामुत्पादादिति चेत्,तदुत्पादेऽन्यस्य ध्वंसः किं न भवति ?, तस्यैव निवृत्तेरिति चेत्, न, निवृत्तेर्वस्त्वन्तररूपत्वात्, तदुत्पादे सर्वस्य स्यान्न वा कस्यचिदपि, विशेषाभावादिति, असम्बद्धं च स्यात् कपालोत्पत्तौ कपालोत्पत्तिरिति, अपिच-ध्वंसोऽपि किं घटस्वरूपः? किं वा तुच्छरूपः? इति तदेवावर्त्तत इत्यनवस्था, तन्नार्थान्तररूपाभावकारणे भावस्य किञ्चित्, किन्तु स्वरसत एव निवर्त्तमानो घटक्षणो मुद्गरादिसहकारिकारणं प्राप्य कपालान्युत्पादयति, तदुत्पत्तौ विजातीयसन्तानोत्पादे नाशितो घट इति जनस्याभिमानः प्रवर्त्तते, अथ प्रसज्यरूपमभावं करोति तदपि नास्ति, नीरूपस्य कर्त्तुमशक्यत्वात्, करणे वा भावरूपतैव स्यात्, यतो भवतीति भावोऽभिधीयते, नान्यद्भावस्यापि लक्षणम्, अथ भावो भावरूपतया भवति, अभावस्त्वभावरूपतयेति, विचित्ररूपा हि पदार्था भवन्ति, नहि नीलं पीतरूपतया भवति, तदप्यसत्, यतः केनचिद्रूपेणोन्मज्जनमेव भवनमभिधीयते, सर्वोपाख्यारहितस्य नीरूपत्वात्, न कस्यचिद्रूपस्योन्मज्जनमिति कथं तत्र हेतुफलव्यापारः फलवान्?, तस्मादभावं करोति-भावं न करोतीति क्रियाप्रतिषेधमात्रं स्यात्, तस्माद्विनाशस्याहेतुकत्वाद् उदयानन्तरं ध्वंसात्कुतोऽनुगतस्य रूपस्य सम्भवो येन त्रैरूप्यं वस्तुनः स्यादिति?, तदेतत्सर्वं तथोक्तविनाशाभ्युपगमे दुरीहितमिव साधुहृदये नैवास्पदमनुबध्नाति। किञ्च-यद्यहेतुकत्वं नाशस्य तदा नित्यं सत्त्वमसत्त्वं वा स्यात्, तत्र यदि घटाभावस्य सत्त्वं तदाऽहेतोर्देशकालनियमाभावाज्जगति घटस्य नामापि न स्यात्, अथासत्त्वं तदा घटस्य नित्यत्वं व्यापित्वं च प्रसज्येत, अथ घटात्तदभावस्य भेदः,

एवं तर्हि कथमभावस्याहेतुकत्वम् ?, अन्यथा घटस्याप्यहेतुकता स्यात्, अथ घटहेतोरन्यो न मुद्गरादिहेतुरित्यहेतुकतोच्यते, यद्येवं प्रथमेऽपि क्षणे घटस्य सत्त्वं न स्यात्, विरोधिनः संनिधानात्, ननूक्तं न स्वरूपादन्योऽभाव इति कः केन विरुध्यते ?, यद्येवं तदा घटस्य नित्यत्वं व्यापित्वं च स्यात्, तथाहि–यत्र यस्य स्वरूपं तत्र तस्य सत्त्वं, यथा प्रथमे क्षणे घटस्य, अस्ति च सर्वस्मिन् देशे काले घटस्य स्वरूपभूतोऽभाव इति, अथ स्वहेतोरेकक्षणस्थायी घट उत्पद्यते तेन तदात्मको विनाशः कथ्यते, न पुनर्विनाशो नाम कश्चिद्विग्रहवानिति, तेन द्वितीये क्षणे स एव न भवति, पुनस्तस्य किञ्चिन्न भवति, नेदं सङ्गतं, उक्तोत्तरत्वात्, अपिच–द्वितीयोऽप्येक एव क्षणस्ततस्तत्र भावः कथं न भवति ?, अथ तदेकक्षणस्थायी स इति द्वितीये क्षणे न भवति, ननु नासौ क्षणः कश्चिद्भावातिरेकेण, उत्पादानन्तरास्थायिरूपमाश्रित्यैवं व्यवहारप्रवृत्तिरिति चेत् ननूत्पादोऽपि न स्वरूपादन्यस्तत्त्वत इति स्वरूपानन्तरास्थायि रूपमित्यापन्नं, तच्च स्वरूपानन्तरं यस्याभावस्तस्य यावत्स्वरूपानन्तर्गतः, तथाहि–तत्र विनष्टे तदानंतर्यं तदानन्तर्ये च तस्य इतीतरेतराश्रयदोष एव परस्य, अथ द्वितीयादिक्षणेषु तुच्छरूपस्याभावो भवति तेन न सत्त्वं, प्रथमे क्षणे तु तुच्छरूपाभावाभावात्तस्य सत्त्वमिति, ननु तुच्छरूपोऽभावः किं घटादभिन्नः ? किं वा भिन्न ? इति, यद्यभिन्नस्तदा पूर्वः प्रसङ्गः, प्रथमेऽपि क्षणे घटस्य सत्त्वं न स्यात्, अथ भिन्नः स किं निर्हेतुकः किं वा हेतुमान् ? इति, यद्यहेतुकस्तदा प्रथमेऽपि क्षणे घटस्य सत्त्वं न स्यात्, अहेतुकत्वात्तस्य तत्रापि भावात्, अथ हेतुमांस्तदा कथमहेतुको विनाशः?, अपिच–तुच्छरूपाभावोत्पत्तौ द्वितीयादिक्षणेषु यदि घटो न भवति तदा त्रैलोक्यमपि किं न न भवति ?, तत्सम्बन्धिनोऽभावस्योत्पत्तेः स एव न भवति, नतु त्रैलोक्यमिति चेत् कः सम्बन्धो ?, यदि तादात्म्यं पूर्वोक्तं दूषणं, अथ तदुत्पत्तिस्तदपि नास्ति, यतः किमभावेन घटो जन्यते ? किं वा घटेनाभावः ?, तत्र यद्यभावेन घटो जन्यते

तदा तत्कारणवैफल्यप्रसङ्गः, सदैव च घटस्य सत्त्वं भवेत्, अथ घटेनाभावो जन्यते तर्हि कथमहेतुकत्वमस्य ?, द्वितीयश्च क्षणोऽभावेन व्यवहितोत्पत्तिः स्यात्, अथ द्वितीयक्षण एव प्रथमस्याभावो नान्योऽभावोऽन्तराले कश्चित्, तर्हि कथमहेतुकत्वमस्य ?, अन्यथा द्वितीयक्षणस्याप्यहेतुकत्वप्रसङ्गात्। कुमारिलेनाप्युक्तम्–"भावान्तरविनिर्मुक्तो, भावोऽत्रानुपलम्भवत्। अभावः सम्मतस्तस्य, हेतोः किं न समुद्भवः ? ॥१॥" इति, अयं चास्मदुक्तन्यायेनैव साधीयान्, अतोऽनुगताकारस्य द्रव्यस्य कथमिव सम्भवः परैः शक्यप्रतिषेधः ?, अनुगताकारव्यतिरेकेण नाशस्वरूपस्यैवायोगादिति॥ विद्युदादिना व्यभिचाराशङ्कां परिहरति—

**विद्युदाद्यपि नात्यन्तं, नाशित्वेन प्रकाशते। अन्धकाराद्युपादानभावेनास्यैव सम्भवात् ॥१३॥**

विद्युदाद्यनन्तरमन्धकाराद्युपलभ्यते, न चोपादानमन्तरेण कार्यं संभवति, तच्च तदुपादानं यत्तेन रूपेण परिणमति, तद्रूपपरिणामि चात्र विद्युदाद्येव, न क्वचिदत्यन्तोच्छेदो नाशः।

**अन्धकारभाववादः**–आलोकाभावमात्रमेवान्धकारमिति कश्चित्, यदुक्तं–'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भावाभावस्तम' इति, तदसत्, एवं हि कमपि रूपविशेषमुपलम्भमानस्य मध्येगृहमन्धकारमुपलभ्यत इत्यादिव्यवहाराभावप्रसङ्गः, किञ्च–अगृह्यमाणे प्रतियोगिनि प्रतिषेधमुखेनाभावो गृह्यते, न स्वतन्त्रः, अन्धकारे च गृह्यमाणे नान्यस्य ग्रहणमस्ति, न चायं प्रतिषेधमुखः प्रत्ययः, तन्नाभावोऽयं, न चालोकादर्शनमात्रमपीदं, बहिर्मुखतया तम इति कस्यचित्कृष्णाकारस्य संवेदनात्, तस्माद्रूपविशेष एवायं कश्चित् पुद्गलात्मकस्तथापरिणतस्तम इति प्रतीयते, न चैवं पुद्गलात्मकत्वे रूपवद्द्रव्यस्य स्पर्शाव्यभिचारात् स्पर्शवद्द्रव्यस्य च महतः प्रतिघातधर्मकत्वात् तमसि सञ्चरतः प्रतिबन्धः स्यादित्यादि दूषणं, यतो यथा कैश्चिदवयवैरदृष्टादिवशादनुद्भूतस्पर्शमनिविडावयवादिस्वरूपं प्रभामण्डलं

गृहव्यापकमारभ्यते तथा तमोऽपीत्यवश्यमेतत्पुद्गलस्वभावमभ्युपगन्तव्यं, न त्वालोकाभावमात्रमिति, यद्वा तदभावरूपमप्यस्तु, तथाऽपि कादाचित्कतया कार्यत्वमस्याभ्युपगन्तव्यं,कार्ये चोपादानमन्तरेण न किञ्चित् ,प्रयोगः–यत्कार्यं तदुपादानमन्तरेण न भवति, यथा पटः तन्तूपादानः, कार्यं चान्धकारमिति स्वभावहेतुः, कार्यत्वस्य परैरभ्युपगमान्नायमसिद्धो हेतुः, सपक्षे भावान्न विरुद्धः, स्वाधारमन्तरेणैव कार्यस्य भावे सर्वं सर्वत्र भवेदिति विपर्यये बाधकं प्रमाणमिति नानैकान्तिकोऽपि। ननु त्रिविधं कारणं–समवायिकारणमसमवायिकारणं निमित्तकारणं च, तन्तवः पटस्य समवायिकारणं, तन्तुसंयोगोऽसमवायिकारणं, तुरीवेमादयो निमित्तकारणं, तत उपादानभूतं कारणमेव न किञ्चिदिति साध्यविकलो दृष्टान्तः, तन्तूनां पटं प्रति समवायिकारणत्वादिति, अत्रोच्यते–समवायो विद्यते यस्य तत् समवायिकारणं, समवायं च प्रबन्धेन प्रतिषेत्स्यामः, तन्न समवायिकारणसम्भवः, तस्मात्तन्तवः पटस्योपादानमेव युक्तं, यदपृथग्भूतं कार्यस्वरूपमुपजायते तस्योपादानस्य व्यवस्थापनात्, यदि च समवायिकारणमप्येवंविधमेवोच्यते तदा सञ्ज्ञामात्रं भिद्यते, न वस्तुतत्त्वं, ततो यादृशं किमपि पटस्य तन्तुस्वरूपं कारणं तादृशं सर्वकार्याणामस्तीति न किञ्चित्कार्यमनुपादानमिति ब्रूमहे, यथा हि सन्तानकारणं यत्तदुपादानकारणमिति सौगताः, उक्तञ्च–सन्तानकारणं यत्तु, तदुपादानकारणम् ।" इदं चासत्, (यतो यदा नीलं रूपम)स्येति ज्ञानसन्तानः समुत्पद्यते तदा चक्षुरादीनामपि तं प्रत्युपादानत्वप्रसङ्गात्, न चायमभ्युपगमः परस्य, अमनस्कारस्यैव विज्ञानोपादानत्वाभ्युपगमात् (मनस्कारस्य सहकारित्वात्), यदुक्तम्–अवस्थाभेदेऽपि यदेकाकारपरामर्शनिबन्धनतया स्वसन्ततिपतितकार्यप्रसूतिनिमित्तं तदुपादानकारणं, यत्सन्तानान्तरे प्रागवस्थापेक्षि विशेषोदयनिबन्धनं तत्सहकारिकारणं, तेन न चक्षुरादेः, विज्ञानसन्तानत्वात्, दृष्टं च विजातीयत्वं कपालादीनां, स्वरसत एव निवर्त्तमानो घटक्षणो

मुद्गरादिसहकारिकारणं प्राप्य कपालान्युत्पादयति, तदुत्पत्तौ च विजातीयसन्तानोत्पादे नाशितो घट इति जनस्याभिमानः प्रवर्त्तत इत्यभ्युपगमात्, अथ यद्यपि कपालरूपविजातीयत्वं तथाऽपि मृद्रूपता न निवर्त्तत इत्येकसन्तानत्वव्यवस्था तत् किं कपालाद्यवस्थाभेदात् मृद्रूपं किञ्चिद्भिन्नमस्ति, नेति चेत् अवस्थानिवृत्तौ कथमस्य न निवृत्तिः?, अथ भिन्नं तत् सर्वथा कथञ्चिद्वा?, न तावत्सर्वथा, मृत्संस्थानयोरपरस्परात्मतया प्रतिभासप्रसङ्गात्, अथ कथञ्चित् समाश्रितस्तर्हि परिणामवादः, योऽप्याहवा(पि वाय्वा)दौ स्पर्शादिसद्भावेऽपि रूपाभावाद्रूपाद्यनुत्पत्तिः, अग्नौ च रूपादिभावेऽपि रसाभावाद्रसानुत्पत्तिः, अप्सु रूपादिसद्भावेऽपि गन्धाभावाद्गन्धानुत्पत्तिस्तेन रसादेर्नियतं कारणं रसादिरेवावसीयते,नियतं च कारणानामुपादानकारणं, तस्याप्यरणिनिर्मथनादावग्निमन्तरेणाप्यग्नेरुत्पत्त्युपलब्धेः प्रदीपादिसन्ततावपि क्षणपरम्परया पूर्वपूर्वाग्न्युपादानत्वमुत्तरोत्तरक्षणानां न स्यात्, न वाऽरणिनिर्मथनसम्भूतोऽग्निरग्निरिति शब्दसाम्येऽपि तद्रूपो न भवति, तस्यापि दाहपाकाद्यर्थक्रियाकारित्वात्, न चातद्रूपहेतुजन्यत्वात्तद्रूपत्वानुमानं, सर्वथा अतद्रूपत्वस्याध्यक्षबाधितत्वात्, कथञ्चिदतद्रूपत्वं च यत्तत्कथञ्चित्तद्रूपमेव भवेत्, तत्तु ततो वा तथा परिणामिनः स्यात्, न नियतादेव कुतश्चित्, अथाऽस्माकमेवमपि स एव नियतो यस्तथापरिणामीति भवतामिष्टस्तर्हि तथापरिणामादेवायं तथा नियतो नान्यथेति, किं बहुना?, न परिणामिवस्तु व्यतिरेकेण क्वचिदुपादानभावः संभवतीति सन्न्यायरणस्तम्भः, कार्यत्वं चोपादानकारणसत्तया व्याप्तं, ततः कार्यतया क्रोडीकृतमन्धकारं पुद्गलस्कन्धरूपं परिणामिकारणमाक्षिपति, त एव हि कदाचिदालोकरूपतया परिणमन्ति कदाचिदन्यथा, चित्रस्वभावत्वात्,उक्तश्च–"रूपरसगन्धवर्णवन्तः पुद्गलाः ॥ शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायाऽऽतपोद्योतवंतश्चे"ति (तत्त्वा-अ-५) ननु तथाऽपि यदनन्तरं न किञ्चिदुपलभ्यन्ते तत्र शब्दादौ का वार्त्ता? इति चेत्, नैतच्चारु, यतस्तत्रापि

किञ्चिदवसीयत एवानुमानादिप्रमाणप्रसादात् पुद्गलात्मकं वस्तु यच्छब्दरूपतया परिणमति, तदात्मध्वंसे च परिणामान्तरं भजत इति।



**अम्बरगुणो न शब्दः**–शब्दोऽम्बरगुण इति चेत् तत्किमम्बरात्मा ? किंवैतत्समवायी ?, प्रथमपक्षे नभसो नित्यत्वात्तस्यापि नित्यत्वं प्रसज्यते, तथा च कृतान्तप्रकोपः, कृतकत्वादनित्यत्वाच्च तन्मते शब्दस्य, मीमांसकमतं तु प्रतिक्षिप्तमधस्तात्। अथ तत्समवायी, तदप्यसत्, समवायाभावात्, श्रवणेन्द्रियेण च शब्दस्वरूपमात्रमेव प्रतीयते, न तु तत्समवायिकारणभूतं नभः, ततः कथमयमेतत्समवायीत्यवगन्तव्यः ?, अनुमानादिरूपं तु प्रमाणं परिणामिकारणसत्तामेवावगमयति, न तु समवायिकारणसत्तां, यदिवा सञ्ज्ञाभेदमात्रमस्तु, तथाऽप्ययं पुद्गलात्मा ऐन्द्रियकत्वाद् रूपादिवत्, न च सामान्यादिभिर्व्यभिचारः, एषामपीन्द्रियविषयतां प्रतिपद्यमानानां तत्समानपरिणत्यादिरूपतया तदात्मकत्वात्, अतः द्रव्यान्तरगुणः शब्दो गुणत्वे सति पृथिव्याद्यष्टद्रव्यानाश्रितत्वात्, यस्तु द्रव्यान्तरगुणो न भवति नासौ गुणत्वेन पृथिव्याद्यनाश्रितो यथा रूपादिरिति पारिशेष्याद्यदाकाशसाधनं तत् स्वतन्त्रप्रक्रियाघोषणमात्रं, पुद्गलद्रव्यमेव हि नानाविधौदारिकादिवर्गणारूपतया विवर्त्तमानं पराभिमतप्रकारेण द्रव्यव्यवस्थां बाधते, न चाकाशादिकमपि किञ्चिदेकान्तेन नित्यमिति नात्यन्तोच्छेदः क्वचिदपीति। सौगतस्तु पश्चात्किञ्चिद्रूपमनुपलम्भमानो यदि शब्दानामत्यन्तच्छेदमङ्गीकुर्यात् तर्हि पूर्वमुपादानभूतं रूपं किञ्चिदपश्यन्नुपादानं कथं परिकल्पयेत् ?, तथाहि–रूपादेः सजातीयं रूपाद्येवोपादानं, तथा शब्दस्यापि शब्दरूपेणोपादानेन भवितव्यं, यतो नान्योपादानं नानुपादानं वा कार्यं संभवति, भूतेभ्योऽपि चैतन्योत्पत्तिप्रसङ्गेन लोकायतमतानुषङ्गात्, न च ताल्वादिव्यापारकाले किञ्चिच्छब्दस्योपादानकारणमुपलब्धिगोचरः, अथानुपलभ्यमानमपि प्रत्यक्षेण प्रमाणान्तरात्किञ्चिदवसीयते तत् तर्हि शब्दवर्गणापुद्गलस्कन्धरूपमपरं वा यथा पूर्वमिष्टं तथा पश्चादप्यस्तु, तुल्य-

योगभावात्, प्रध्वंसाभावाद्य एतेऽनुपजातविकाराः प्रदीपबुद्ध्यादयो ध्वंसन्ते तेषां कतरद्भावान्तरं प्रध्वंसो व्यवस्थाप्यते?, तेऽप्यवक्तव्यतामात्मभावे कथं प्रदीपादयः शक्त्यात्मनाऽवस्थिताः कल्पेरन्?, अथोपलब्धियोग्यताविकलात्मतापत्तिरव्यक्तिः, अत्रापि तदात्मताऽवस्थितौ न चाप्रमाणकमाद्रियन्ते विपश्चितः, 'आत्मनश्चासत्त्वात्कथं तद्भावो बुद्ध्यादीनां विकारः?, परिणामश्चान्यत्र विहितप्रतिक्रियत्वान्नेह वितन्यते' इत्यादि, तदपि प्रतिक्षिप्तमवगन्तव्यं, प्रत्यक्षेण तदप्रतिपत्तावपि प्रमाणान्तरादुक्तन्यायेन तदनन्तरं कस्यचिद्वस्तुनः सिद्धेः, आत्मनश्च सत्त्वात्कथं न तद्भावो बुद्ध्यादीनां विकारः?, परिणामश्च प्रबन्धेन प्रसाधितः, किञ्च—यत्कारणं तत्किमपि स्वकार्यमुत्पादयत्येव यथा बीजादि, कारणं च प्रदीपबुद्ध्यादि, न च कारणत्वमेव प्रदीपादीनामसिद्धमवस्तुप्रसङ्गात्, अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः, भवन्मतेन चार्थान्तरसाध्यार्थक्रियाकारित्वेनैवास्य वस्तुत्वं, अर्थान्तरसाध्यार्थक्रियाया अर्थान्तरादेव स्वहेतुभ्यस्तदा विशिष्टलब्धात्मलाभीकृतसिद्धेरेतत्सामर्थ्यस्य वैयर्थ्यप्रसङ्गात्, एवं ह्यनेनात्मनः सामर्थ्यमुपदर्शितं स्यात् यद्यसाधारणं किमपि स्वकार्यमुत्पादयेत्, स्वसामर्थ्याच्चात्मभूतावस्थानुरूपेण कार्येणावश्यं भवितव्यं रूपक्षणादिव रूपेणेति, यच्च तत्तादृशं किमपि कार्यं तत्कारणान्नात्यन्तव्यतिरिच्यमानमूर्त्तिकं, किन्तु तद्विकारात्मकमेव, तन्न क्वचिदत्यन्तोच्छेदः संभवतीति युक्तमुक्तं विद्युदाद्यपि नात्यन्तनाशित्वेन प्रकाशत इत्यादि ॥ ननु यदि कपालोत्पादे घटस्याभावः, एवं तर्हि कपालविनाशे घटोन्मज्जनप्रसङ्ग इत्याशङ्काऽपोहायाह—

**न चैवं तस्य रूपस्य, नाशे पूर्वसमुद्भवः। तदन्यस्यापि तन्नाशस्वभावस्य प्रसूतितः ॥ १४ ॥**

घटाभावात्मनि कपालरूपे विनष्टे स्याद् घटोदयः यदि प्रतिकपालाद्यपि न घटाभावात्मकं भवेत्, न चैतदस्ति, घटरूपविल-

क्षणात्मनः प्रतिकपालादेरपि घटाभावधर्मताऽनतिक्रमात्, नहि घटाभावः कपालभावादभिन्न एव येन कपालनाशे घटोदयः स्यात्, किन्तु भिन्नोऽपीति कपालनाशे प्रतिकपालादिनाऽपि तादात्म्यमनुभवत्येष इति नोक्तदोषप्रसङ्गः। मृद्द्रव्यमेव हि कपालकालेऽप्यूर्ध्वाद्याकारव्यावृत्तेनात्मना वर्त्तत इति कपालानां घटाभावरूपता, तच्च मृद्द्रव्यं प्रतिकपालकालेऽपि घटव्यावृत्तमात्मस्वभावं न त्यजति, ततः कथं कपालविनाशेऽपि घटोन्मज्जनसम्भवः ?, तदा तत्प्रतिकपालाद्यपि घटस्वभावव्यावृत्तमृदात्मतामादधानं घटाभावात्मतां धत्ते, तेन तदन्यस्यापि तन्नाशस्वभावस्य प्रतीतिरित्युच्यते ॥ इह च श्लोके 'न चैवं तस्य रूपस्ये'त्यत्र तच्छब्देन कपालरूपमुच्यते, पूर्वरूपं चोर्ध्वाद्याकारापेक्षी घटः, 'तदन्यस्यापी'त्यत्र तानि कपालानि, अन्यच्च प्रतिकपालादि, 'तन्नाशस्वभावे'त्यत्र तु तच्छब्देन घटोऽभिधीयते, व्याख्यातो विशेषप्रतिपत्तेरिति ॥ किञ्च—अत्यन्तोच्छेदे सत्यनेकदोषोपनिपातसम्भवस्तदाह—

**कर्मतत्फलसम्बन्धबन्धमोक्षाद्यसङ्गतिः। स्फुटैव सर्वथोच्छेदे, सन्तानः स्वपरो न वा ? ॥ १९ ॥**

न हि सर्वथोच्छेदे कर्मतत्फलसम्बन्धः सङ्गतिमनुभवति, कृतनाशकृताभ्यागमप्रसङ्गात्, येन हि शुभाशुभं कृतं स क्षणिकः सदैव विनष्ट इति न तस्य तत्फलोदय इति कृतनाशः, येन च तन्न कृतं स शुभाशुभफलसंयुक्तः समजनीत्यकृताभ्यागमः, अयुक्तं चैतत्, प्रमाणबाधितत्वात्, तथाहि—यदन्येन कृतं तदन्यस्य फलं न प्रयच्छति, यथा देवदत्तेन कृतं न यज्ञदत्तस्य, अन्यश्च कर्तृक्षणाद्भोक्तृक्षणोऽपरमत इति व्यापकविरुद्धोपलब्धिप्रसङ्गः। ननु किमिदमन्यत्वं सन्तानान्यत्वं क्षणान्यत्वं (सामान्यान्यत्वं)वा ?, प्रथमे पक्षे हेतोरसिद्धता, द्वितीये तु यत एव क्षणान्यत्वमत एव फलोदयः, अन्यथा यद्यसौ कर्तृक्षणो न भोक्तृक्षणः भोक्तृक्षणश्चेत्तदा नायं कर्तृक्षण इति, यतः कर्मतत्फलसम्बन्धव्यवस्थां विघटयितुमुपन्यस्तोऽयं हेतुस्तथैव तां साधयतीति विरुद्धार्थप्रसाधनाद्विरुद्धः, अथ सामान्येनान्य-

त्वमात्रहेतुस्तदा नैकान्तिकः, अन्यत्वमपि भविष्यति कर्म तत्फलसम्बन्धव्यवस्थाऽपि भविष्यति, नात्र विपर्यये बाधकं प्रमाणमस्ति, अत्रोच्यते—पक्षत्रयान्नैकस्मिन्नपि पक्षे तव सङ्गतिः, अथ 'यस्मिन्नेव हि सन्तान' इत्याशङ्क्य सन्तानो निराकरिष्यत इति प्रथमपक्षोदितं दूषणमदूषणं, यत्पुनर्द्वितीयं पक्षं कक्षीकृत्य विस्फूर्जितं तदप्येकान्ताक्षणिकवादिनः प्रति विराजते न नित्यानित्यवादे, तस्मिन् वादे हि यद्यपि कर्तृभोक्तृत्वादिपर्यायापेक्षया कथञ्चिद्भेदस्तथाऽप्यनुगतजीवद्रव्यापेक्षया कथञ्चिदभेदोऽप्यस्तीति कः परोक्तदूषणानामवकाशः?, क्षणभेद एव कर्मतत्फलसम्बन्धव्यवस्था घटामञ्चति सन्तानभेद एव च न इत्यपि तदा प्रतिपादयितुं पार्यते यदा भिन्नसन्तानादभिमतक्षणस्य कश्चिद्विशेषः प्रकाशितो भवेत्, न चायं प्रदर्शयितुं शक्यत इति निर्णेष्यामः, एवं तृतीयोऽपि पक्षो न क्षोदक्षमः, अनेनैव न्यायेन प्रतिव्यूढत्वादिति, तस्माद्विदितसुगतमतपरमार्थानां देवताऽऽराधनादिप्रयासः कर्त्तुमयुक्त एवेति स्वयमेव विनष्टं ताथागतं शासनमिति मत्या कृतः स्वरसनिरोधाभ्युपगमः स्वमतोच्छेदेन परैरिति। अथ व्यवहारिणो मुग्धबुद्धयः सन्तानगतमेकत्वमध्यवस्यन्तोऽस्माकमेतत्फलमुत्पत्स्यत इत्यभिप्रायात्प्रवर्त्तन्ते, तत्त्वज्ञास्तु विशुद्धतरक्षणोत्पादमभिसन्धायेति परे परिहारं ब्रूमः, अहो! रागिणां तत्प्रकारेणात्मविनोदेन संभावयतां विफलः प्रयासः,"हे हंस! देहि कान्तां सा मे भवता हृतेति किं मिथ्या?। सेयं गतिस्तदीया वाणी सैवेयमुल्लसति ॥१॥" इत्यादि रागातुरपुरुषप्रलापवन्न परित्राणमेषः, यतो मुग्धजनप्रवृत्तिर्न तत्त्वव्यवस्थाऽधिकारे प्रभविष्णुतामञ्चति, तत्त्वज्ञानां तु प्रवृत्तिर्न युक्ता, यतो यदि नाम विशुद्धतरः कश्चित्क्षणः समुत्पत्स्यते तदा पूर्वक्षणस्य किं येनायं अभ्युपगताराधनादिना आत्मानमायासयति?,'परार्थमेव सतां प्रयासः' इति चेत्, न, सर्वस्यापि परार्थस्य स्वार्थः पर्यवसानं, अन्यथा तु कोऽपि क्वापि न वर्त्तेत,"प्रेक्षावतां यतो वृत्तिर्व्याप्ताऽस्ति कार्यवत्तया। प्रयोजनमनुद्दिश्य,न मन्दोऽपि प्रवर्त्तते

॥१॥" तन्नैकान्तोच्छेदे कर्मतत्फलसम्बन्धमोक्षौ, न ह्यन्यो बद्धोऽन्यश्च मुच्यत इति सचेतनः प्रतिपादयितुमर्हति, पूर्वमबद्धेऽपि मुक्तशब्दं निवेशयतः परस्यापूर्वं शब्दार्थकौशलं, एवं हि प्रसवधर्मिणीं वनितामपहाय वन्ध्यामेव मातरमभिदध्यादेषः, तथा च कस्य नोपहासपदं स्यात्?, तथा च प्रयोगः–यदबद्धं तन्न मुक्तव्यपदेशभाक्, यथा सदा सुस्थितः कश्चिद्देवदत्तः, अबद्धश्चाभिमतः क्षणः परमत इति व्यापकानुपलब्धिः, प्रपञ्चस्तु प्रदर्शयिष्यते, तथा स्वज्ञानकाले चार्थो विनष्ट इति कथमसौ तत्र प्रतिभासते?, ननु साकारं विज्ञानं, तस्य विषयः स निरूपणीयो यः सरूपयति विज्ञानं, निराकारत्वे नीलस्येदं संवेदनं न पीतस्येति प्रत्यर्थनियमो न स्यात्, विज्ञानं हि नियतमर्थमवबोधयत्तेन सह प्रत्यासत्तिमर्हति, तत्र यदि तदुत्पत्त्या ज्ञानमर्थस्य ग्राहकं भवेत्तदा विषयवदिन्द्रियस्यापि ग्राहकं भवेत् समनन्तरप्रत्ययस्य च, तस्मात्कारणान्तरासम्भविना रूपेण सारूप्यलक्षणेन ज्ञानमर्थस्य ग्राहकमित्यभ्युपगन्तव्यं, ज्ञानकाले च क्षणिकत्वादर्थस्याभावादाकारार्पणक्षमस्य कारणत्वमेव पारिशेष्याद्ग्राह्यत्वमवस्थाप्यते, न च कारणादन्यस्य समानकालस्य ग्राहकमर्थस्य ज्ञानमिति वक्तुं युक्तं, तयोरुपकार्योपकारकभावात्, यद्यनुपकारिणोऽपि ग्राहकं स्यादविशेषात्सर्वस्य ग्राहकं भवेत्, ततः सर्वस्य सर्ववित्त्वप्रसङ्गः, एकसामग्र्यधीनत्वाद्विज्ञानं तदेव रूपं गृह्णातीति चेत् विशेषाभावादिन्द्रियस्यापि ग्रहणप्रसङ्गः, ततो विज्ञानं साकारं परिकल्पनीयं, स्वाकारजननमेव चार्थस्य ग्राह्यत्वमिति, अत्र प्रतिविधीयते–किममुमनुभवसंनिवेशिनं स्थूलमाकारं परमाणवः समर्पयन्ति? किं वाऽपरः कश्चित्?, यदि परमाणवस्तदा किं ते प्रत्येकमपर्यन्ति? किं वा संहताः?, यदि प्रत्येकं तदा यावन्तः परमाणवस्तावन्त्येव परमाण्ववभासीनीन्द्रियज्ञानानि प्राप्नुवन्ति, एवं च सति स्थूलाकारानुभवविरोधः, अथ संहताः, ननु संहतेष्वपि तेषु नायमस्तीति आत्मन्यसन्तं कथं विज्ञाने समर्पयेयुः?, अथ प्रतिभासधर्म एवायं, न वस्तुधर्मः, अस्ति

अबद्धस्या-
मुक्तता
ज्ञानस्य
साकारता

हि कश्चिद्वस्तुधर्मो नीलत्वादिलक्षणः कश्चिच्च प्रतिभासधर्मो यो बहुषु प्रतिभासमानेषु प्रतिभाति यथा केशकलाप इति, एतदप्यसत्, यतो यद्ययं प्रतिभासधर्मो न वस्तुधर्म्मस्तदा कथमभ्रान्तमध्यक्षं प्रचयावभासि स्यात्, नापि परमाणुव्यतिरिक्तः कश्चिदस्ति, तस्य व्यतिरेकाव्यतिरेकविकल्पादिभिर्भवद्भिः प्रतिषेधात्, भवतु वा कश्चिदनिरूप्यो विषयः, तत्सारूप्यं च विज्ञानस्य, तथाऽपि विषयविज्ञानयोः सारूप्यनिश्चयो नास्ति, उभयदर्शनाभावात्, उभयदर्शनाधीनश्च सादृश्यनिश्चयः, अर्थश्च साकारपक्षे न कदाचिद्दृष्टपूर्व इति स कथं सदृशः कल्पेत ? विज्ञानं वा, किञ्च–यद्युत्पत्तिसारूप्याभ्यां विज्ञानमर्थस्य ग्राहकं तर्हि तत एवोपादेयो विषयक्षण उपादानक्षणं गृह्णीयात्, उत्पत्तिसारूप्याभ्यां ज्ञानाकारो ग्राहको (विषयस्य नोपादानक्षणस्य) तर्हि बोधरूपत्वादेवार्थस्य ग्राहकं ज्ञानं भविष्यति, किं सारूप्येण ?, बोधरूपताया अविशेषात् किं न सर्वग्रहणप्रसङ्गः ? कारणत्वाविशेष(श्च बोधरूपतायाः पूर्वक्षणवृत्तितायाश्च सर्व)त्राप्यस्तु, किमाकारेण ?, तस्माद्यदुक्तं 'आकारमन्तरेण प्रतिकर्मव्यवस्था न स्यात्' तदयुक्तमिति, ज्ञानमेव हि नियतार्थग्रहणयोग्यमस्तु, किमाकारेणेति, तदुक्तम्–"अताद्रूप्येऽपि योग्यत्वनियतार्थस्य वेदनम् ।" इति । यस्मादाकारवादिनाऽपि वस्तुस्वाभाव्यमाकारग्रहणे ज्ञानस्याभ्युपगतं, तस्मात्तदेव नियतार्थग्रहणेऽपि तस्यास्तु, किमनेन व्यवधिना ?, न च स्वाभाव्यमहेतुकं, किन्तु कर्मणः क्षयोपशमवैचित्र्यात् आत्मैव नियतार्थज्ञानाकारतया परिणमंस्तान् तानर्थान् प्रतिपद्यते, ततः सारूप्यमनिमित्तं, किञ्च–निराकारपक्षे विषयविषयिभावनिमित्तः सम्बन्धो मृग्यते, मृग्यमाणश्चासौ यदि तदुत्पत्तिरूप इष्यते तदा चक्षुरादेरपि विषयत्वप्रसङ्गः, ततस्तन्निवृत्त्यर्थं सारूप्यं भवद्भिरङ्गीक्रियते, एवमपीन्द्रियमनस्कारयोर्विषयत्वप्रसङ्गस्तदवस्थः, विज्ञानं हि तयोर्विषयग्रहणप्रतिनियतबोधात्मकत्वलक्षणमाकारं बिभर्त्ति, ताभ्यां चोत्पद्यते, अपिच–अर्थानुभवसिद्ध्यर्थं साकारत्वं विज्ञानस्य

कल्प्यते, न च साकारेण ज्ञानेन कश्चिदनुभवनीयोऽर्थोऽस्ति, निवृत्तत्वात्, न च निवृत्तो विषयोऽनुभूतो नाम, अनुभवस्य विद्यमानविषयत्वात्, यदि च ज्ञानाकारानुभव एव विषयानुभव इष्यते, एवं तर्हि नीलादिवत्केशकलापाकारे चेतसि संवेद्यमाने केशकलापेऽपि बाह्योऽनुभूतोऽभ्युपगन्तव्यः, विशेषाभावात्, स्यादेतद्–यस्यान्वयव्यतिरेकावनुविधत्ते बुद्धिप्रतिभासः स प्रत्यक्षः, केशकलापादिप्रत्ययश्च विप्लवः, वस्त्वननुरोधेन प्रतिभासमानतया विप्रलम्भात्, यदाह–"विसंवादादुपप्लवः" इति, तत्कथं तत्र बाह्यं वस्तु संविदितं शक्यते व्यवस्थापयितुं ?, तदपि निरूप्यं, किमसत्त्वात् केशकलापादिप्रतिभास उपप्लवः ? आहोश्वित्सन्नपि बाह्यवस्तुनिरपेक्षत्वात् ?, न तावत्पूर्वो विकल्पः, यस्मान्नीलादिप्रतिभासाद्विज्ञानारूढादनुभूयमानादस्य केशादिप्रतिभासस्य न कश्चिदनुभवकृतो विशेषो विद्यते येनायमसत्त्वादुपप्लवः स्यात्, इतरश्च सत्यो नीलादिप्रतिभासः साधकाद् अयमसत्य इति चेत्, एवं तर्हि सदसतोरेकत्वानुपपत्तेर्निराकारमेव केशादिज्ञानमेष्टव्यं, तत्र यथा भ्रान्तविज्ञानमसन्तमाकारमुपदर्शयति तद्वदभ्रान्तमपि निराकारमेव सन्तमाकारमादर्शयिष्यतीति साकारवादस्त्याज्यः। अथ निरपेक्षत्वादुपप्लुतो द्विचन्द्रादिप्रतिभास उच्यते, ननु सोऽपि वस्त्वननुरोधी प्रत्ययः कुत आयातः ? इति वक्तव्यं, यद्यालयविज्ञानवासनापरिपाकादित्युच्यते तर्हि नीलादिप्रतिभासा अपि वस्तुनिरपेक्षा वासनापरिपाकाधीननिष्पत्तयः प्राप्नुवन्ति, एवं च विशेषाभावात् सर्वेऽप्युपप्लुता अनुपप्लुता वा प्रत्ययाः स्युः, विशेषो वा वक्तव्यः, अथ विशेषममुं मन्यते भवान्–स्वसन्तानमात्राधीनप्रतिभासाः प्रतीतयः कथमसति बाह्ये वस्तुनि कदाचिदुत्पद्येरन् ?, तेन कादाचित्कत्वान्न बाह्यवस्तुनिरपेक्षः, यद्येवं द्विचन्द्रादिप्रतिभासो बाह्यवस्त्वननुरोधी कथमिव कदाचिदुत्पद्यते ?, अक्षविकारस्य कादाचित्कत्वादिति चेत्, ननु द्विचन्द्रादिविज्ञानप्रतिभासस्य वस्त्वननुरोधात्कुतः समुद्भवः ? इति भवान् पृष्टः, न पुनः प्रत्य-

यकारणं, तस्माद्वासनापरिपाकापेक्षप्रतिभासा खल्वियमिन्द्रियजा भ्रान्तिरभ्युपगन्तव्या, यदुक्तम्—"अस्तीयमपि सा याऽन्तरुपप्लवसमुद्भवा।" इति, भ्रान्तिवदभ्रान्तिरपि न वस्त्वनुरोधिप्रतिभासा, वस्त्वभावेऽपि तदाभासदर्शनात्, तदेवं सर्वबुद्धिप्रतिभासानामविशेषान्न किञ्चिद्व्यावर्त्तनीयमस्तीति सौभ्रा(त्रा)न्तिकनये प्रत्यक्षलक्षणावसरे भ्रान्तपदमनर्थकं प्राप्नोतीति साकारवादे दोषः। अपि च—यद्यर्थात्तदाकारता विज्ञानस्य तदा तद्वज्जडताऽपि स्यात्, अथ नीलाद्याकारतैवार्थाद्भवति, न जडता, ननु यदि नीलपरमाणुरूपता तदा कथं न जडता ?, अथापरमाण्वात्मके विज्ञाने नीलात्प्रतिबिम्बमात्रमेव भवति, यथाऽनीलात्मिके स्फुटिके नीलादिरिति, ननु न स्फुटिकस्यापि नीलपरमाणुपरिणतेरन्यत्प्रतिबिम्बं, तन्नाकारवादः कथञ्चिदुपपत्तिक्षम इति, यदुक्तम्—"स्वाकारजननमेवार्थस्य ग्राह्यत्व"मिति, तन्न संभवतीत्यर्थः, ग्रहणोपायाभाव एव परस्येति, कार्यग्राहिणा च प्रमाणेन कार्यमेव प्रतिपन्नं, न कारणं, कारणग्राहिणाऽपि कारणमेव प्रतिपन्नं, न कार्यं, न चोभयावभासनियतं रूपमस्ति, अस्मदभ्युपगमप्रसङ्गात्।

**क्षणिके कार्यकारणत्वाभावः**—ततः कार्यकारणभावव्यवस्थाऽपि न स्यात्, तेन यदुक्तं हेतुबिंदौ कार्यकारणसिद्धिः, य एवेदमस्योपलम्भे उपलब्धिलक्षणप्राप्तमनुपलब्धमुपलभ्यते सत्स्वप्येतेषु हेतुष्वस्याभावे न भवतीति तद्भावे भावस्तदभावेऽभावश्च, प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावस्तस्य सिद्धिः, कार्यकारणभाव एव ह्यर्थान्तरस्यैवं स्यात् यत्र धूमस्तत्रावश्यमग्निरिति, अग्निभाव एव हि भावो धूमस्य, तत्कार्यत्वमिति तद्वचनमात्रमेव, न खलु प्रत्यक्षमिदमस्योपलम्भे उपलब्धिलक्षणप्राप्तमनुपलब्धमुपलभ्यत इत्याद्यधिगमव्यापारप्रागल्भ्यं भवितुमर्हति, स्यादेतत्—निर्विकल्पकदर्शनद्वयानन्तरमिदमस्मादुत्पन्नमित्येवमाकारं स्मरणज्ञानमुदेति तेन तथाभावाधिगमः, तदप्यसत्, यतः स्मरणमनुभावानुसार्येवोत्पद्यते, न चानुभवद्वयेन कार्यकारणभावोऽभूत् येन तथा-



HB, p. 54, 11-14

स्मरणं स्यात्, आत्मनश्चाभावे कस्य तत्स्मरणम्?, अथेत्थमाचक्षीथाः—यथा कारणविषयं विज्ञानं कारणं गृह्णात्येव, तच्चाविशिष्टकार्यजननस्वभावमिति तथैव गृह्णाति, अन्यथा तदग्रहणप्रसङ्गात्, एवं कार्यमपि विशिष्टकारणजन्यस्वरूपमिति तथैव गृह्यते, ततस्तत्सामर्थ्यप्रभवो विकल्पस्तथैव प्रवर्त्तत इति युक्तः कार्यकारणभावावगमः, अत्रोच्यते, विशिष्टकार्यजननस्वभावत्वं विशिष्टकारणजन्यस्वभावत्वं चेतरेतरावधिकमवस्थितमित्युभयग्रहणमन्तरेण कथं ग्रहीतुं शक्यमिति व्याधूय व्यामोहं चिन्तय तावत्, यदि हि कार्यकारणयोरन्यतरदर्शनादेव कार्यकारणभावव्यवस्थाकारिविकल्पोदयस्तर्हि नालिकेरीद्वीपागतो गगनतलावलम्बिनीं बहलबहलधूमलतामुपलभ्योदितानलविकल्पः किमनलं तत्र न व्यवस्थापयति?, सङ्केताभावादिति चेत् तत्किं तेन धूमस्वरूपमपि न प्रतिपन्नं?, प्रतिपन्नं परं विकल्पोदयः सङ्केतमप्यपेक्षते, तर्हि न कार्यकारणस्वरूपग्रहणमात्रेणैव कार्यकारणभावव्यवस्थेति, उक्तश्च—"द्विष्ठसम्बन्धसंवित्तिर्नैकरूपप्रवेदनात्।" द्वयस्वरूपग्रहणे सति सम्बन्धवेदनमिति। ननु कार्यकारणभावः कार्यकारणस्वभावादभिन्नो भिन्नो वा?, यद्यभिन्नस्तदाऽन्यतरग्राहिणा प्रमाणेन कथमस्य न ग्रहणम्?, अथ भिन्नस्तर्हि तदाऽपरं तृतीयं वस्त्वन्तरं स्यात्, न चायं वस्त्वन्तरभूतो भवद्भिरभ्युपगम्यते, न चायमभ्युपगम्यमानोऽपि युक्तः, यतोऽयमन्यो भवन् स्वभावतोऽप्रतिपन्नकार्यकारणस्वरूपयोर्वा भवेत्?, यद्वा स्वभावेनैव कार्यकारणात्मनोः?, यद्याद्यः पक्षस्तदा सर्वत्रैवाकार्यकारणभूते वस्तुनि भवेत्, ततः सर्वं सर्वस्य कार्यं स्यात्। स्वभावेन चातद्रूपस्यान्ययोगेऽपि न तद्रूपता, नहि भावाः प्रतिनियतरूपत्यागेनान्ययोगेऽपि रूपान्तरमाभजन्ते, यतो नान्ययोगस्तेषां पूर्वरूपं नाशयति, विनाशहेत्वयोगात्, नाप्यपूर्वमुत्पादयति, तस्य ततोऽर्थान्तरप्रसङ्गात्, न हि तेषु निष्पन्नेषु निष्पन्नो भिन्नहेतुकोऽभिन्नहेतुको वा तत्स्वभावो युक्तः, 'अयं भेदो भेदहेतुर्वा यो विरुद्धधर्माध्यासः कारणभेदश्च' अतश्चेन्न भेदोऽन्यनिमित्ताभावाद्

एकद्रव्यं विश्वं स्यादित्यादि प्रसज्यते, प्रतिभासभेदोऽपि हीतरेतराभावरूपतया विरुद्धधर्माध्यासं नातिक्रामति, ततश्च पूर्ववस्तुनी तदवस्थे एवेति न तयोरन्ययोगेऽपि कार्यकारणरूपतापत्तिः, अथ द्वितीयः पक्षस्तदा स्वभावत एव तयोः कार्यकारणरूपत्वादन्यस्तद्भावः कथं न वैयर्थ्यमनुभवेत् ?, कार्यकारणबुद्धी अपि तद्भावभाविताामात्रनिबन्धने, नार्थान्तरनिमित्ते, तस्योपलब्धिलक्षणप्राप्यस्य कार्यकारणरूपस्य विवेकिना निरूपयता(अर्थान्तररूपताम)न्तरेणाप्रतिभासनात्, तथाविधस्यापि ग्रहणकल्पनायामतिप्रसङ्गः,अनुपलब्धिलक्षणप्राप्ततायां कथं कार्यकारणबुद्धी तन्निबन्धने ?, नहि तदर्थान्तरं स्वसत्तामात्रेण तद्बुद्धी प्रवर्त्तयति, सदा सन्निहितत्वेनास्य तयोः सर्वदोदयप्रसङ्गात्, न च विशेषणमगृहीतविशेष्यं स्वस्वविशिष्टप्रत्ययनिबन्धनमित्ययुक्ताऽस्यानुपलब्धिलक्षणप्राप्तता, न च दृष्टस्यानुपलब्धत्वं युक्तं, कार्यकारणबुद्ध्योस्तन्निबन्धनोपगमात्, न हि यन्निमित्तो योऽन्यत्रातद्बुद्धिभाजि व्यवसायः स तदनुपलक्षणे युक्तः, देवदत्ते दण्डिव्यवसायवद्दण्डानुपलक्षणं, न चार्थान्तरस्य कार्यकारणाभ्यां सम्बन्धो, घटात् सम्बन्धान्तरकल्पनायामनवस्थाप्रसक्तेः, कार्यकारणभावाभ्युपगमे कार्यकारणाभ्यामसहभाविता तद्भावस्य, ततश्च कार्यकारणकलितस्य तस्यासन्निधानात् कथं कार्यकारणबुद्धिहेतुता ?, निरुद्धयोरध्याहृत्य तत्प्रत्ययकल्पनायां च कल्पितविषय एव कार्यकारणव्यवसायः स्यात्, न वस्तुविषयः, स च विशिष्टभावाभावनिबन्धनोऽभ्युपगम्यत एवेति किमर्थान्तरपरिकल्पनया ?, कल्पितविषयत्वे तद्व्यवसायस्य वैयर्थ्यात्, कार्यकारणयोश्चायोगपद्यान्न सहिताभ्यामसौ जन्येत,प्रत्येकजन्यत्वे कथं कार्यकारणभावः ?,यदा च कारणेन जन्यते तदा किं स्वकार्यसहितोऽयं केवलोऽकेवलो जन्यते ?, अथ केवलः, केवलोऽपि किं स्वकार्यात्प्रागथ पश्चात् ?,यदि स्वकार्यसहितस्तदोभयोरन्यत एव भावात्परस्परसम्बन्ध इति कार्यसम्बन्धिताऽस्य हीयेत, अथ केवलः स्वकार्यात्प्राक्तदा क्षणिकतया कारणस्य तमेव जनयित्वा ध्वंसात् कथं स्वकार्यक्रिया ?,तस्यां

चासत्यां कथं तदपेक्षमस्य कारणत्वं ?, तस्मिंश्चासति कथमकारणेन कार्यकारणसम्बन्धो जन्यते ?, अथ स्वकार्यं कृत्वा पश्चाज्ज(न्यते तदा कार्यस्य जातत्वात् संबंधः कारणे) न कुतः ?, तद्भावश्च सम्बन्ध उच्यते, कार्यकारणयोश्चासहभावित्वात् कुतोऽस्य द्विष्ठता ?, तस्यां चासत्यां कथं सम्बन्धिता ?, अक्षणिकत्वेऽपि कार्यकारणयोस्तज्जननात् प्रागप्रतिपन्नतदाधारभावयोः पश्चादपि स्वभावापरावृत्तेरतदाश्रयत्वमनाश्रितं च कथं तद्भावः प्रत्ययहेतुर्वा ?, समवायिकारणस्यैव कार्यसमवायिकारणत्वं, न निमित्तासमवायिकारणयोः, कार्यस्य वा तत्समवायात्कार्यत्वं, अस्य च सर्वत्राविशेषात् तत्सर्वं वस्तु परस्परं कार्यकारणरूपं स्यात्, पूर्वोत्तरभावाभावविशेषणता चास्य तदसम्बन्धादयुक्ता, निरतिशयस्य तदयोगाच्च, तयोरेव चातद्विशेषणयोस्तल्लक्षणताऽस्त्वित्यभिप्रायवतैव धर्म्मकीर्त्तिनोक्तं– "तद्भावे भावस्तदभावेऽभावश्च कार्यकारणभावः" इति, तदत्र प्रतिविधीयते–अथ कोऽयं तदभावेऽभावस्तद्भावे भावश्च ?, य एव हि कारणाभिमतस्य भावः स एव भावः कार्यत्वेनाभिमतस्य, कारणत्वाभिमतस्य चाभावेऽभाव एव कार्यत्वेनाभिमतस्य, स एव कार्यकारणभावो, नान्यः, नन्वस्माभिरप्येवमिष्यत एव, केवलमेतद् ब्रूमो, यथा–कार्यकारणयोरन्यतररूपावगमादेवायमधिगन्तुमशक्यः, कथञ्चित्तद्धर्मत्वात्, धर्मधर्मिणोश्च भेदाभेदेन व्यवस्थानमिति निर्णेष्यामः, ततः पृथक्कार्यकारणस्वरूपग्राहिणा प्रमाणेनायमधिगंतुमशक्य इत्युभयग्राहिणा परिणमनस्वभावमनुगतमेकमात्मद्रव्यमस्तीति जैनानामुपपद्यते कार्यकारणव्यवस्था, न परेषामिति, एतेन यदुक्तं कल्याणचन्द्रे–'यथा कार्यस्य तावदनुत्पत्त्यवस्थायामसत्त्वादेव न कारणसम्बन्धित्वं, निष्पन्नावस्थायामप्येवं, निरपेक्षत्वात्, तथा कारणमपि कार्यनिष्पत्त्यवस्थायां कार्यासम्बध्येव, नाप्यनयोः कार्यकारणभावसम्बन्धो, भिन्नकालत्वात्, केवलमस्येदं कार्यं कारणं चेति कल्पितोऽयं व्यपदेशः, तेन स्वहेतोः सकाशात् स्वरूपलाभ एव भावस्य कार्यत्वं, कारणस्यापि कार्यं प्रति प्रागभाव एव कार-

णत्वं, कार्यकारणगतस्य स चात्मलाभः प्राग्भावश्च भावस्याभिन्नत्वात्प्रत्यक्षगृहीत एवेति, कथं न प्रत्यक्षग्राह्यः कार्यकारणभावः ?, केवलं कार्यदर्शने सतीदमस्य कार्यं कारणं चेति व्यवह्रियते, यतो नाकार्यकारणयोः कार्यकारणभावः संभवति, नापि कार्यकारणभावयोगात्तयोः कार्यकारणता भिन्ना कर्तुं शक्यते, विरोधात्, नापि भिन्ना, तयोः स्वरूपेणाकार्यकारणताप्रसङ्गात्, स्वरूपेण कार्यकारणयोरपि किं कार्यकारणभावेनार्थान्तरेण कल्पितेन ?, स्वरूपेणैव कार्यकारणरूपत्वात्, तस्मात्पूर्वोत्तरभाव एव तयोः कार्यकारणभावः, तेन पूर्वके वस्तुनि गृह्यमाणे कार्यं प्रत्यानन्तर्यं कारणात्मकं गृहीतमेव, उत्तरेण च ज्ञानेनोत्तरं वस्तु कारणानन्तरं गृह्यमाणं कार्यात्मकमेव गृह्यते, तदानन्तर्यस्य तदभिन्नस्वभावत्वात्, अत एव चास्मादनन्तरमिदं भवतीति स्मरणमपि भवति, आनन्तर्यस्यानुभूतत्वा'दित्यादि, तदप्यपाकृतम्, अन्वयिद्रव्याभावे इदमस्मात्पूर्वमिदं चानन्तरमित्यादेर्वचनमात्रत्वात्, उभयावभास्येकविज्ञाननिष्ठत्वादस्य व्यवहारस्येति। नन्वयं कार्यकारणभावः कार्यधर्मः ? कारणधर्मः ? उभयधर्मो वा ?, यदि कार्यधर्मस्तदा कार्यभाव एवायं, न कार्यकारणभावः, कारणधर्मत्वे तु कारणभाव इति चेत् (एव स्यात्) तथाऽपि न कार्यकारणभावः, उभयधर्मता तु दुर्घटा, तथाहि—कार्येणासौ संबध्यते तदा न कारणेन, तस्य ततो भिन्नत्वात्, अथ कारणेन संबध्यते तर्हि न कार्येण, उक्तादेव न्यायात्, ततः कथमयमुभयधर्मो युक्तः ?, नैतच्चारु, यतः कारणमेव कार्यरूपतया परिणमति, न पुनः कार्यकारणयोरत्यन्तनानात्वमेवेति कथमयमुभयधर्मो न युक्तः ?, सहकारिकारणानि तु न क्वचित्स्वतन्त्राणि कार्यमुत्पादयन्ति, किन्तूपादानकारणस्यैवायं स्वभावो येन तत्तत्सहकारिकारणमपेक्ष्य तथा परिणमतीत्युपादानमेवान्तरङ्गं कारणमिति तेनैव मुख्यः कार्यकारणभावः। ननु यदि सहकारिणां न कश्चिदुपयोगस्तर्हि तदुपादानं किमात्मानं तदपेक्षायां नियुंक्ते ?, तन्निरपेक्षमेव कार्यं कुर्यात्, अनुपकारिणोऽप्यपेक्षायां

तदन्यदप्यपेक्षमाणं न कदाचित्कार्यमुत्पादयेदिति, नैतत्सारं, यतस्तदुपयोगाभाव एतावतैवाभिधीयते, यतस्तानि सहकारिकारणानि तेन रूपेण न परिणमंतीत्येतावता तदुपयोगात् तदपेक्षायामात्मानं नियुंक्त इति कमुपालभेमहि ?, नहि स्वहेतुभ्यो भावास्तत्स्वभावतयोत्पन्नाः कस्यचित्पर्यनुयोगमर्हन्ति, यतश्च तदुपादानं सहकारिकारणान्यपेक्ष्य तथापरिणमनस्वभावं सत् कार्यमुत्पादयति, अतस्तत्रापि कार्यकारणभाव उपादानवद्व्यवह्रियत इति न कश्चिद्दोषः, दृष्टश्च कथञ्चिदेकोऽपि संयोगादिपरिणामः संयुक्तवस्तुद्वयनिष्ठः, न च दृष्टेऽनुपपन्नं नाम, तद्वदत्रापि वस्तुद्वयनिष्ठकार्यत्वाविरोधः, तद्वस्तुद्वयस्यैव कथञ्चित्तदात्मतया परिणामात्, तदियं कार्यकारणव्यवस्था नात्यन्तोच्छेदे, एवमन्यदपि सर्वमत्यन्तोच्छेदे बालप्रलपितप्रायमेव प्रसजति, नतु सङ्गतिक्षममिति स्फुटमेतत्।

**क्षणिकवादे प्रमाणाभावः**—तथा च 'सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति तद्व्युत्पाद्यते, द्विविधं सम्यग्ज्ञानं—प्रत्यक्षमनुमानं चे'त्यादिग्रन्थप्रबन्धप्रयासेनात्मपाण्डित्यप्रकटनं कूटनटनृत्यमिव न सहृदयहृदयानन्ददायि शाक्यसुतानां, तन्मते किं सम्यग्ज्ञानं ? को वा पुरुषार्थः ? का वा तस्यार्थसिद्धिर्या तत्पूर्विका ? कथं वा तन्निश्चयः ? इति परिभाव्यतामवहितेन मनसा, क्षणिकत्वादर्थकाले न ज्ञानमिति तदाकारतयैतदर्थस्य ग्राहकं कल्पितं, अर्थश्च विविक्तक्षणक्षयिपरमाणुलक्षणस्वलक्षणरूपोऽभ्युपेतः, स्थिरस्थूरावभासस्वभावाध्यासितं च विज्ञानं प्रतिप्राणि प्रसिद्धिसौधमध्यमध्यासीनमिति न तस्य कदाचित्सम्यक्त्वं, अतस्मिंस्तद्ग्रहो भ्रान्तिः, सा च सम्यक्त्वविरोधिनी, न च ज्ञानातिरिक्तः कश्चिज्ज्ञाता समस्तीति पुरुषोऽपि न कोऽपि, नापि तस्यार्थसिद्धिः, तदा स्वयमेव निरुद्धत्वात्, एवमपि चेदर्थसिद्धिरस्य परिकल्प्यते मृतस्य कामिनः कामिनीसमालिङ्गनसमुद्भवः सुखोदयः किं न परिकल्प्यते ?, न वा सा तत्पूर्विका संभवति, विनाऽन्वयमुत्पत्तेरेवाधः प्रतिक्षिप्तत्वात्, न च सम्यग्ज्ञानादिनिश्चयोपायः, यतो यथा-



प्रतिभासममलसलिलकल्लोलकलितप्रदेशे जलोल्लेखि संवेदनमुदयपदवीं समासादयति तादृशमेव मरुमरीचिकानिकुरुम्बचुम्ब्यपि तदा तदनुभूयते, ततः सम्यग्ज्ञानेतरयोः कथं सम्यगसम्यक्स्वरूपनिर्णयः?, संवादादिति चेत्, तथा हि–सम्यग्ज्ञानस्य संवादकमपरं ज्ञानमुत्पद्यमानं सम्यग्ज्ञानरूपतां निश्चिनोति, तदितरस्य न, संवादायोगात्, तर्ह्यत्रापि विचार्यं–तत्संवादकज्ञानं सहकारिकारणभूतं सन्निश्चयमुत्पादयति किं वा ग्राहकं सदिति?, यदि सहकारिकारणं तन्नोपपद्यते, भिन्नकालत्वात्, संभूयैककार्यकर्तृत्वं हि सहकारित्वं, तत्कथं भिन्नकालभाविषु भावेषु भावं भजेत्?, अथ ग्राहकं तर्हि तत्प्रथमज्ञानस्य कथं ग्राहकं? किं प्रत्यक्षं सत् किं वा लिङ्गभूतं?, न तावत्प्रत्यक्षं सत्, तदा प्रथमसंवेदनस्य दूरं नष्टत्वात्, किञ्च–इदं यत्संवादकत्वेनाभिमतं भावानां तर्हि तदिन्द्रियजं च ज्ञानं ज्ञानान्तरस्वरूपमपि न प्रतिपद्यते, कुतस्तद्गतसम्यक्त्वेतररूपनिर्णयं?, अथ लिङ्गभूतं तदपि नास्ति, यतो लिङ्गं गृहीतप्रतिबन्धमेव साध्यं गमयति, प्रतिबन्धग्रहणं न प्रवर्त्तकसंवादकाभ्यामेव, परस्परस्याग्रहणात्, नापि ज्ञानान्तरेण, तदुभयस्वाभावाग्रहणादेव, अनादित्वात्संसारस्य संवादकज्ञाननिबन्धनप्रवर्त्तकज्ञानस्य सम्यक्त्वमनेकशोऽपि निश्चित्य सन्देहभाजि प्रवर्त्तकज्ञाने संवादज्ञानात्तन्निश्चिन्वन्ति, नन्वत्र चक्रकदूषणं, तथाहि–सम्यक्त्वनिश्चयात् प्रवृत्तिः, प्रवृत्तौ संवादज्ञानं, संवादज्ञानाच्च सम्यक्त्वनिश्चयः, किञ्च–अनादौ संसारे निरात्मवादिनः सम्बन्धः केन गृह्यते?, अथास्त्यनन्तवासनाऽऽलयभूतमालयविज्ञानं रागादिबाह्याहङ्कारास्पदभूतं तेनेति चेत् ननु निरन्वयविनाशपक्षे नैतदुत्पत्तिक्षमं, तत्र ह्यनन्तवासना एव विज्ञानरूपाः स्युः, नापरमेकं किमपि विज्ञानं यदनन्तवासनाऽऽलयभूतं भवेत्, तदपि चेत्प्रतिपद्यते भङ्ग्यन्तरेणात्मद्रव्यमेव चिद्रूपमनेकस्वपर्यायव्यापकमभ्युपगतमित्यस्मदिष्टसिद्धिरेवैवं भवेत्। अपिच–संवादके स्वतः सम्यक्त्वनिश्चयः संवादकान्तराद्वा?, यदि स्वतस्तदा प्रथमेऽपि तथैवास्तु, किं संवादकापेक्षया?, अथ

संवादकान्तरात्तर्हि पूर्वोक्तमसमञ्जसं तदवस्थमनवस्था च, अथ प्रेक्षापूर्वकारिणः प्रयोजनमुद्दिश्य प्रवर्त्तंते, संवादकज्ञाने चार्थ-क्रिया सिद्धेति न तस्य प्रामाण्यपरीक्षायां मनः प्रणिदधति, नैतदस्ति, यतो यथा ते प्रेक्षावत्तया प्रवर्त्तकं विचारयन्ति तथा-ऽर्थक्रियाज्ञानमपि, तथाहि–इदमर्थक्रियाज्ञानं किं स्वप्नदशायामिवासत्यमुत सत्यमिति?, अथ स्वप्नज्ञानस्य बाधितत्वादसत्यत्वं, तथाहि–प्रबोधानन्तरमेव शरीरवस्त्रादेरनिस्यंदावस्थामुपलम्भमाना धिग्मिथ्येदं जलार्थक्रियाज्ञानमिति निश्चिन्वन्ति, जाग्रदव-स्थायां तु सर्वदैवाबाधितं ज्ञानमनुभवन्तो न साशङ्का इति। ए(वं च क्षणभंगभंगः स्पष्ट एव, यतः पूर्वक्षणज्ञानाद् न भिन्न-म)पि ज्ञानान्तरं तद्ग्रहणाय किमपि प्रवर्त्तेत इत्युक्तं प्राक्, किञ्च–तत्संवादज्ञानं किमेकसन्तानं भिन्नसंतानं वा?, तदपि किमे-ककालं भिन्नकालं वा?, तदपि किं समानजातीयमुत भिन्नजातीयं?, तदपि किमेकविषयमाहोश्विद्भिन्नविषयमिति?, तत्रैक-सन्तानवर्त्ति समानकालं समानजातीयं समानविषयं भिन्नविषयं वा युगपज्ज्ञानद्वयं नोपपद्यते, न ह्येकस्यैव देवदत्तस्यैकस्मादेवैक-क्षणभाविनश्चक्षुःक्षणादेकस्मिन्नेव घटे घटपटयोर्वा विषये संवेदनद्वयमुपजायते, भिन्नकालं तु तदेकविषयं नैमित्तिकचन्द्रद्वयदर्श-नेन व्यभिचारि, तैमिरिकस्य पुनः पुनस्तज्ज्ञानमुत्पद्यते, नतु सम्यक् तद्भवति, किञ्च–एकविषयत्वे पूर्वविज्ञानं सम्यग्रूपमसम्यग्-रूपं वा?, यद्यसम्यग्रूपं तदा तदुत्तरकालभावि संवेदनमपि तस्मिन्नेव विषये प्रवर्त्तमानमसम्यग्रूपं स्यात्, प्राक्तनस्य सम्यक्त्वे तद्विषयत्वादधिकं किञ्चिदपरिच्छिन्दतो गृहीतग्राहित्वेनाप्रामाण्यमुत्तरज्ञानस्य भवेत्, न चाप्रमाणकेन तेन सम्यक्त्वादिनिश्चयो युक्तोऽप्रमाणत्वादेव, भिन्नकालं तु भिन्नविषयं विज्ञानं संवादकं चेदिष्यते तदा मरीचिकाजलज्ञानस्यापि तदुत्तरकालभाविमरीचि-कारूपग्राहि संवेदनं संवादकं स्यात्, भिन्नजातीयं त्वेकसन्तानवृत्ति समानकालं भिन्नकालं वा?, यदि संवादकं तदा मिथ्यादर्श-

नस्याविभिन्नवस्तुस्पर्शादिविज्ञानं संवादकमापद्येत, एकं एकविषयत्वे सतीति चेत् कथं रूपस्पर्शादिज्ञानानामेकविषयत्वं, न चैवं द्रव्यमभ्युपगम्यते, भिन्नसन्तानं तु समानजातीयं भिन्नविषयं यदि संवादकं स्यात् मिथ्याज्ञानस्यापि तथा भवेत्, एकविषयं तु परसन्तानज्ञानस्वरूपापरिज्ञाने तत्कर्मताऽप्रतिपत्तौ तयोर्नोपपद्यते, अथ तुल्याभिधानप्रवृत्तिदर्शनात्तयोरेकविषयत्वं प्रतीयते, ननु तैमिरिकद्वयद्विचन्द्रदर्शनेऽप्येतदस्तीति तयोरपि परस्परं संवादकत्वेन सम्यग्रूपत्वं स्यात्, तन्न संवादकापेक्षित्वेन ज्ञानस्य सम्यक्त्वावगमो युक्तः, किन्तु बाधारहितत्वेन।

ज्ञानप्रामाण्यवादः–अत एवोक्तं "प्रमाणं स्वपराभासि, ज्ञानं बाधविवर्जित"मित्यादि, ननु ज्ञानस्य किं बाधकं? को वा तदभावः?, उच्यते–असत्प्रकाशनसामर्थ्यं बाध्यं, तथाहि–ज्ञानस्य सदर्थप्रकाशनशक्तिरिवासदर्थप्रकाशनशक्तिरप्यस्ति, न च सर्वमसन्तं प्रकाशयति, नियतविषयत्वाद्भ्रान्तीनां, ता हि क्वचिद् ग्राह्यसादृश्यात् भ्रमहेतोः, क्वचिद्विचित्रानुभवाहितवासनाप्रबोधविपर्यासात् विचित्ररूपत्वात्कर्मपरिणामस्य, बाधकमपि समानजातीयं विजातीयं वा विज्ञानं, समसमयमसमसमयं वा?, एकस्य वा प्रमातुरनेकस्य वा?, एकविषयत्वे सति ननु यदेव बाध्यत्वेनाभिमते विज्ञाने वस्तु प्रतिपन्नं तदेव यद्यक्षतं बाधकेऽपि प्रतिभाति तदा कथं तद्बाधकं?, नाक्षतमेव प्रतिभाति, किन्तु यदेव पूर्वज्ञानेनासदाकाररूपेण वस्तु प्रतिपन्नं तदेव बाधकेन तदाकारनिरासेनान्यथा प्रतीयते, अथैकं वस्तूभयविज्ञानगोचरचार्यन्यथा प्रतिभासे सति नास्तीत्युच्यते, तदसत्, यतो विज्ञानप्रतिभासभेदवदभेदप्रतिभासोऽप्यात्मनोऽस्ति, तथाहि–तदेवेदं वस्तु मरुमरीचिकारूपेण चकास्ति यत्पूर्वं जलरूपेण प्रतिभातमासीदिति, एतदुत्तरत्र प्रसाधयिष्यामः, अभावोऽपि न तुच्छादिरूपः, किन्तु प्रामाण्यस्यैव तदाभासविविक्तमात्मस्वरूपं, ततस्तदेव वस्तुग्राहि प्रमाणं

विपर्यस्तप्रमाणान्तरशून्यमात्मानं स्वग्राह्यमारोपितासदाकारविविक्तं च प्रतिपद्यमानं सम्यक्त्वेतरावगमाय प्रभवति, नान्यथा, एतच्च कथञ्चिदन्यसद्भाव एवोपपद्यते, द्विविधं सम्यग्ज्ञानमित्याद्यपि च, ततः सकलवस्तुव्यवस्थाव्यवच्छेद एवात्यन्तोच्छेद इति कर्मतत्फलसम्बन्धाद्यसङ्गतिः सङ्गतैव।

**संताननिरासः**–अथ–"यस्मिन्नेव हि सन्ताने, आहिता कर्मवासना। फलं तत्रैव संधत्ते, कर्पासे रक्तता यथा ॥१॥" इति स्वसन्तानापेक्षया सर्वमुपपद्यत इति का नाम किलात्रासङ्गतिः?, तदेतदप्यसमीचीनं, यतो भेदाविशेषात्परसन्तानोऽपि न परसन्तान इत्यसमञ्जसमेव प्राप्तं, तथाहि–यद्येनासम्भवद्विशेषं तत्तेन समानरूपं दृष्टं, यथाऽसम्भवद्विशेषः पटः पटान्तरेण, असम्भवद्विशेषश्च स्वसन्तानः परसन्तानेन परसन्तानो वा स्ववन्तानेनेति, नायमसिद्धो हेतुः, यतः स्वपरत्वाभिमतयोः प्रतिक्षणं स्वभावभेदो निर्विशिष्टः, अन्वयरूपस्तु विशेषो नेष्टः, प्रतिनियतस्वभावतालक्षणस्तु विशेषः सन्नपि न प्रस्तुतार्थोपयोगीति नाश्रयणीयः, तन्नायमसिद्धो हेतुः, सपक्षे भावान्न विरुद्धः, विशेषासम्भवेऽप्यसमानरूपकल्पनायां न किञ्चित्केनचित्सह समानरूपं स्यादिति सजातीयविजातीयव्यवस्थोच्छेद एव भवेदिति विपर्यये बाधकप्रमाणसद्भावान्नानैकान्तिकोऽपि, यदा चोक्तन्यायाद्विशेषासम्भवेऽपि स्वपरसन्तानयोरसमानरूपतां परे न प्रतिपद्यन्ते तदा विशेषासम्भवस्य समानरूपतायाश्च कथञ्चिद्भिन्नरूपताऽपीष्टैवेति न प्रतिज्ञातैकदेशासिद्धत्वमप्यस्य, ननु चायं सन्तानिभ्यो भिन्नः स्यादभिन्नो वा?, यद्यभिन्नस्तदा सन्तानिन एव, न सन्तानः, अथ भिन्नस्तर्ह्यसौ परमार्थतः सन्नसन् वा?, यद्यसन् नभःकुशेशयकल्पेन किमनेन परिकल्पितेन?, क्वचिदपि तत्त्वानुपयोगित्वात्, अथ परमार्थतः सन्नयमिष्यते सोऽपि प्रतिक्षणं विनश्वरस्वरूपः? किं वा नित्य?, प्रथमपक्षे तदवस्थः प्रसङ्गः, द्वितीये क्षणभङ्गभङ्गः, अत एवोक्तं

केनचित्–"अथापि नित्यं परमार्थसन्तं, सन्ताननामानमुपैषि भावम्। उत्तिष्ठ भिक्षो! फलिता तवाशा, सोऽयं समाप्तः क्षणभङ्ग-वादः ॥१॥" उभयरूपनिषेधस्तु वस्तुनो नोपपद्यते, तस्यैवाभावप्रसङ्गात्, भेदाभेदपक्षस्तु नेष्टो भवद्भिरसदभ्युपगमप्रसङ्गात्, तस्मादयं स्वसन्तानः परसन्तानश्चायमिति स्वहृदयविनोदमात्रफला परस्य परिकल्पना, न तात्त्विकीं कर्मतत्फलसम्बन्धादिव्यवस्थां कर्तुं प्रभवतीति, स्यादेतत्–यद्यपि न कश्चिदेकस्तात्त्विकः सन्तानः समस्ति तथाऽपि प्रतिक्षणविनश्वरभावा भावाः प्रतिनियतशक्तिभ्यः प्रत्ययेभ्यः समुपजायमानाः प्रतिनियतस्वभावाध्यासिततनव एवोपजायन्ते, ततस्त एवोपादानोपादेयभावेन कारणकार्यप्रबन्धरूपतामनुभवन्तः स्वसन्तानव्यपदेशभाजो भवन्ति, अपरे त्वन्यथेति, तथाहि–भिन्नेष्वपि पितृपुत्रादिष्वयमस्मत्सन्तानो नायमिति लोकेऽपि व्यवहारः प्रवर्त्तते, तेन न कृतनाशाकृताभ्यागमप्रसङ्गः, क्षणभेदेऽप्युपादानोपादेयभावेनैकस्यामेव सन्ततावाहितसामर्थ्यस्य कर्मणः फलदानात्, अतो य एव सन्तानः कर्त्ता स एव भोक्तेति, तथाहि–यः कुशले कर्मणि प्रवर्त्तते स यद्यपि तदैव सर्वथा विनश्यति तथाऽपि निरुध्यमानः स्वानुरूपकार्योत्पादनसमर्थं सामर्थ्यं विज्ञानसन्ततावाधाय निरुध्यते, यतः सामर्थ्यविशेषादुत्तरोत्तरक्षणपरिणामेन कालान्तरपरिणामसञ्जातवासनापरिपाकात्सहकारिप्रत्ययसमवधानोपनीतप्रबोधात्फलमिष्टमनिष्टं चोपजायते, ततो न यथोक्तदोषः, प्रतीतश्चायमर्थः, तथाहि–रसायनादिभिः प्रथमोपनिपातवेलायामाहितो विशेषो देहे तदुत्तरोत्तरावस्थाभेदोपजननेन पश्चाद्देहाद्यतिशयस्य बलमेधाऽऽरोग्यादेर्निष्पादकः, तथा लाक्षारसोपनीतसामर्थ्यं मातुलङ्गकुसुममुत्तरोत्तरविशेषोपजननेन फलोदरान्तर्वर्त्तिनः केसरस्य रक्तताहेतुर्भवत्येवेति दृष्टत्वान्मुच्यतामभिनिवेशमिति, बन्धमोक्षव्यवस्थाऽप्येवमेव सङ्गता, प्रतिक्षणनिरन्वयनश्वरात्मपक्ष एव युज्यमानत्वात्, तथाहि–नैरात्म्यवादिनः क्षणिकाः पदार्थाः यथाहेतुसंनिधानं विक्रियमाणाः समुपरोधहेतु-

भिर्यदापीड्यते क्रियाभोगाधिष्ठाता, स्वतन्त्रो ह्यात्मा निरात्मा, तत्स्वातन्त्र्यलक्षणत्वात्, आत्मनस्तद्रूपं नैरात्म्यं, नात्मनि त्रिमात्रं दुःखं, विशेषाध्यासितोत्तरोत्तरक्षणोत्पत्तितः, ततस्ते निर्विद्योक्तोत्तरोत्तरक्षणसमुत्पादान्निर्विण्णास्तदुत्तरोत्तरश्रुतभावनाद्यक्लिष्टैकक्षण- परम्परोत्पादनेन दानदमसंयमाद्यनेकप्रकारशुभधर्माध्यासाद् रागादिबीजोन्मूलसमर्थमार्गप्रभावनातः प्रतिकलमवदायमानविशुद्धप- र्यन्तवर्त्तिक्षणोत्पादादधिगतमुक्तयः कथ्यन्त इत्यनवद्यं,अन्यथाऽऽत्मनोऽव्यवस्थितत्वाद्वेदनाया अभावाद् भावे वा विकारान्तराभा- वात्प्रतिपक्षाभ्यासेनाप्यनाधेयातिशयत्वाच्च परपक्षे मुक्त्यसम्भवः, तथा विशिष्टामेव रूपादिसामग्रीं प्रतीत्य विशिष्टमेव संवेदनमुप- जायते, ततश्च तदेव तस्य ग्राहकमभिधीयते, एवं कार्यकारणभावादिव्यवस्थाकारि स्मरणाद्यपि भावनीयमिति विनैवैकेन केनचिद- न्वयिना रूपेण सर्वमुपपन्नमेव तथागतानामिति तदेतत्सर्वं व्यामोहविजृम्भितमेव, यतस्तन्मते कार्यकारणभाव एव न घटाकोटि- माटीकत इति प्रतिपादितमेव प्रागिति। अपिच–एवमपि परमार्थतोऽन्वय एवाङ्गीकृतः, तथाहि–य एव भोक्तेत्युक्तं, न च हेतु- फलभावोऽन्यः सन्तानः, न च हेतुफलयोरेव कर्तृत्वभोक्तृत्वे, प्रत्येकमुभयाभावात्, अन्यकाले ज्ञानानभ्युपगमात्, य एव स एवेति वा वैयर्थ्यप्रसङ्गात्, अतस्तस्यैव तथाभवनेन हेतोरेव कार्यभावे य एव स एवेत्युपपद्यते, नान्यथा, सन्तानान्तरवन्नानात्वाबोध- नात्, तथेदं चोक्तं–'यः कुशले प्रवर्त्तते स यद्यपि तदैव सर्वथा विनश्यति तथाऽपि निरुध्यमानः स्वानुरूपं कार्योत्पादनसमर्थं सा- मर्थ्यं विज्ञानसन्ततावाधाय निरुध्यत' इत्यादि, अत्रापि न तत्सामर्थ्यमन्यदेव स्वानुरूपकार्योत्पादानक्षमं, ततश्च कुशलमेवोत्तर- विज्ञानमाधत्त इति तदेव तद्युक्तं तथा भवति, इत्येवमुत्तरोत्तरभावेन युक्तमिष्टानिष्टं फलजन्म, अन्यथोक्तवत्तदयोगात्, एवं समय- रोधहेतुभ्यः पीडा प्रतिकलमवदायमानता चान्वयानुसारिण्येव, अन्यथा पीडाद्युत्कर्षासिद्धिः, न ह्येकगुणतीव्रताभावो तद्विगुणादि-

तीव्रताभावे इति, अनुभवसिद्धा चेयं, सह तारतम्येन एकगुणशुद्धियुक्तजन्मेत्यपि व्यवस्थापनमेकगुणाक्षेपोभयविषयसंवेदननान्तरीयकमेवेत्यन्वयसाधनमेव, किं बहुना जल्पितेन ?, विहायान्वयमेकाधिकरणौ बन्धमोक्षावपि न युज्येते, यदा च बद्ध एव न मुच्यते तदा व्यर्थैव बन्धमोक्षचिन्तेति, एवमन्यान्यपि दूषणानि तदवस्थानि, यस्तु भिन्नेष्वपि पितृपुत्रादिषु अयमस्मत्सन्तानो नायमिति लोके व्यवहारः प्रवर्त्तते स न परमार्थचिन्ताधिकारे समाविशति, पारमार्थिककर्मतत्फलाद्याश्रयी च प्रेक्षावतां सुगताद्याराधनप्रयासो, न व्यसनमात्रमप्रेक्षावत्त्वप्रसङ्गात्, यदपि रसायनादिभिः प्रथमोपनिपातवेलायामाहितो विशेषो देहे तदुत्तरोत्तरावस्थाभेदोपजननेन पश्चाद्देहाद्यतिशयस्य बलमेधाऽऽरोग्यादेर्निष्पादक इत्याद्युक्तं तदपि कथञ्चिदन्वयमन्तरेण सन्तानान्तरवदुरुपपादं, अन्वयसद्भावे तु तदेव च रूपं रसायनादिसंस्कृतं पश्चाद्देहाद्यतिशयरूपतया परिणमति, यद्वा तत्सहकारिकारणभूतमवलम्ब्य देशकालाद्यपेक्षं रूपान्तरं वा विशिष्टरूपतया परिणमतीति मातुलुङ्गकेसरादे रक्ततादयोऽपि संभवन्ति, तस्मादयं परमार्थतः परैरपि प्रतिपन्नः, तदुक्तम्—"सा वासना सा क्षणसन्ततिश्च, नाभेदभेदानुभयैर्घटेते। ततस्तटादर्शिशकुन्तपोतन्यायात्त्वदुक्तानि परे श्रयन्ति ॥१॥" (अन्ययोगव्यवच्छेदद्वात्रिंशिकायां श्रीहेमचन्द्रसूरिः)तस्माद् 'अन्वयस्यापि सद्भावान्न नाशः सर्वथा सत' इति सिद्धं ॥ न चानुगताकारा बुद्धिः सविकल्पत्वादप्रमाणं, यतः—

इन्द्रियाधीनजन्मेयमभेदग्राहिणी मतिः। प्रामाण्यं बाधवैकल्यादश्नुते भेदबुद्धिवान् ॥ १७ ॥

भेदबुद्धिरपि हि भेदवादिभिरिन्द्रियान्वयव्यतिरेकानुविधानाद्बाधवैकल्यात् प्रमाणमिष्यते, तदेतदभेदबुद्धावपि समानं, ततः कथमेषां न प्रामाण्यमश्नुवीत ?, तदयमत्राशयः—यद्यपि 'अभिलापसंसर्गयोग्यप्रतिभासाप्रतीतिः कल्पने'त्यादिना केनापि न्यायेना-

भेदावभासा बुद्धिः सविकल्पकतां प्रतिपद्यते तथाऽपि न प्रामाण्यमस्या व्याहन्यते, यतः सविकल्पकं बोधिज्ञानं यथाऽवस्थितवस्तुस्वरूपावभासं चेद्भवति तदा प्रमाणं, अन्यथा त्वप्रमाणं, तस्माद् यथाऽवस्थितवस्तुस्वरूपावभासित्वेन व्याप्तं प्रामाण्यं, तद्व्यावृत्तावेव व्यावर्त्तते, न ह्यव्यापकनिवृत्तौ व्याप्यस्य निवृत्तिरतिप्रसङ्गात्, तस्मात्कल्पनाऽपोढत्वव्यावृत्तावपि प्रामाण्यं न व्यावर्त्तते, मा व्यावर्त्ततां, अप्रत्यक्षे तु प्रमाणता कल्पनापोढत्वेनैव व्याप्ता, यदुक्तं-'प्रत्यक्षं कल्पनापोढमभ्रान्त'मिति, ततः कल्पनापोढत्वव्यावृत्तावत्र सा व्यावर्त्तत एव। ननु कल्पनापोढत्वं प्रमाणरूपताया व्यापकमुत प्रत्यक्षरूपतायाः ?, न तावत्प्रमाणरूपतायास्तदभावेऽपि तद्भावात्, नहि यदभावेऽपि यद्भवति तत्तस्य व्यापकं नाम, प्रत्यक्षरूपताऽपि वस्तुसाक्षात्कारितामात्रेण व्यवतिष्ठमाना न निमित्तान्तरमपेक्षते, तस्मात्कल्पनापोढत्वं प्रमाणतां प्रत्यक्षतां वा प्रति न प्रयोजकमिति प्रत्यक्षेऽन्यत्र वा तद्व्यावृत्तौ प्रामाण्यस्य न व्यावृत्तिरिति सविकल्पकमपीदं प्रमाणमस्तु। ननु कल्पना हि नाम नामजात्यादियोजना, सा च न वस्तुनो रूपं, निरंशत्वाद्वस्तुनः, तथाहि-प्रत्यक्षस्य स्वलक्षणं विषयः 'तस्य विषयः स्वलक्षण'मित्यभिधानात्, तत्र च न नामजात्यादयः कथंचनापि संभवन्ति, न तावदर्थे शब्दाः सन्ति तदात्मानो वा नो येनेदं तत्सामर्थ्यप्रभवं विज्ञानं सविकल्पकं सिद्ध्येत्, जात्यादियोजनाऽपि, "व्यक्त्यजन्मन्यजाता चेदागता नाश्रयान्तरात्। तच्छून्ये न स्थिता देशे, सा तया सङ्गता कथम् ? ॥१॥" इत्यादिना प्रतिषिद्धैव, तस्मात्कल्पनाज्ञानमवस्तुप्रतिभास्येव परमार्थतः, अत एवोक्तं 'कल्पनाज्ञानमर्थान्तरे प्रत्यक्षाभासं सज्ज्ञानं, घटः पट इति वा विकल्पयतः समुत्पद्यते तदर्थस्वलक्षणाविषयत्वात् प्रत्यक्षाभासमिति, तदेतत्सर्वमप्यसमीचीनं, यतो यद्यपि नार्थे शब्दाः सन्ति नापि तदात्मानस्तथाऽपि तत्सामर्थ्यप्रभवं विज्ञानं यथा बोधरूपोपादानप्रभवतया बोधरूपं सिद्ध्यति, एवं शब्दादूषितबोधोपादानप्रभवतया सविकल्प-

कल्पनायाः
अप्रामाण्या-
प्रयोजकता

कमपि तत्सिध्येत्, जात्यादियोजनाऽपि यथा जैनेरभ्युपगम्यते तथा प्रतिषेद्धुमशक्यैव, तन्न कल्पनाज्ञानमवस्तुप्रतिभास्येव। यदि हि शब्दाधारतया शब्दात्मतया वा बाह्यमर्थमिदं संवेदनं प्रतीयात् तदा यथाऽवस्थितवस्तुप्रतिभासान्न विरुध्येत, अतस्मिंस्तद्ग्रहो भ्रान्तिरितिकृत्वा, न चैवमिहास्ति, इदं हि संवेदनं घटोऽयं पटोऽयमित्यादिशब्दोल्लेखितयाऽन्तः स्फुरदपि ऊर्ध्वचतुरस्रादिरूपं भावानामात्मतत्त्वमेवावभासयति, विचित्रतत्कर्मक्षयोपशमस्य कदाचित्कथञ्चिद् बोधप्रवृत्तेः, अत एव-"विकल्पोऽवस्तुनिर्भासाद्विसंवादादुपप्लवः।" इति प्लवते, तस्माद्यथा वस्तुस्वरूपातिरेकिणीं बोधरूपतामनुभवदपि बाधारहितं किमपि विज्ञानं वस्तुविषयतामवलम्बते तथा शब्दोल्लेखितया प्रथमानमिदमपि। ततो यथा भेदज्ञानं तद्वादिभिरिन्द्रियान्वयव्यतिरेकानुविधायितया प्रत्यक्षमुपेयते तथाऽभेदाध्यवसायिन्यपि पूर्वदर्शनाहितसंस्कारप्रबोधप्रभवस्मरणसहायेन्द्रियान्वयव्यतिरेकानुविधायिनी प्रत्यभिज्ञापि प्रमाणमभ्युपगंतव्या। **प्रत्यभिज्ञाप्रामाण्यम्**-नन्वध्यक्षं वर्त्तमानकालभाविन्यर्थे प्रत्यासीदति ततस्तदनुसारिणी धीस्तत्रैव प्रवर्त्तितुमुत्सहते, न सर्वत्र, नैतदस्ति, यतः पूर्वं न प्रवर्त्तत इति कोऽभिप्रायः?, किं पूर्वस्मिन् काले न प्रवर्त्तते? किं वा पूर्वकालभाविनि भावस्वरूपेऽपि?, यदि प्रथमः पक्षस्तदा न नः काऽपि क्षतिः, यतस्तत्र मा प्रवर्त्ततां नाम प्रत्यक्षं तत्काले, ननु तदा यद्वस्तुरूपं विशेषितं तत्र तस्य प्रवृत्तिः केन निषिध्यते?, ननु तत्कालविशिष्टं वस्तुस्वरूपमिदानीं न विद्यते, पूर्वकालस्यैवाभावात्, तद्भावे वा भावानां वर्त्तमानत्वमेवापतेत्, तथा च न नित्यत्वं, वर्त्तमानताया एव ग्रहणादिति चेन्नैतच्चारु, विकल्पानुपपत्तेः, तथाहि-पूर्वकालविशिष्टं वस्तुस्वरूपमिदानीं सर्वथा न विद्यते कथञ्चिद्वा?, न तावत्सर्वथा, तत्कालाभावे तद्विशिष्टतारूपेणैव तन्निवृत्त्युपपत्तेः, तथाहि-नीलं पूर्वकालविशिष्टतया व्यावर्त्तमानं तद्विशिष्टताव्यावृत्त्यात्मनैव व्यावर्त्तितुमुत्सहते, नतु नीलस्वरूपव्यावृत्त्यात्मनाऽपि, ननु न नीलस्वरूपं तद्विशिष्टतातिरेकि

कल्पनायाः अप्रामाण्याप्रयोजकता

किञ्चिद्, अत्रापि यदि सर्वथैवाभेदस्तर्हि यथा तत्पूर्वकाले विशिष्टतया व्यावृत्तमिदानीं तदात्मवान् (तदात्मतया न) प्रकाशते, तथा नीलात्मनाऽपि न प्रकाशेत, तदा तदन्यदेव नीलमुत्पन्नमिति चेत् किमपि प्रमाणं?, न तावत्प्रत्यक्षं, अस्यान्वयव्यतिरेकबुद्धिहेतुत्वेनैव साफल्यात्, तद्धि प्रत्यक्षं विधिप्रतिषेधविकल्पौ यदा स्वविषये जनयति तदैव साफल्यं, तदैव च प्रमाणमिष्यते, नान्यदा, अतः क्षणिकतादावन्वयव्यतिरेकबुद्धी जनयितुमसामर्थ्यात्तत्रास्य प्रामाण्यं नेष्यते भवद्भिः, ततो न प्रत्यक्षात्प्रतिक्षणं भावभेदसिद्धिः कदाचनापि, तदेवेदं नीलमित्याद्युल्लेखेन चाभिन्नं किमपि पूर्वमत्र स्फुटमेव चकास्ति,ततः सर्वथा प्रतिक्षणं भावानां स्वरूपभेदो न नापलप्यः। अथ यथा शालिबीजं तदङ्कुरजननस्वभावं तदभावे शाल्यङ्कुरभावादर्शनात्प्रत्यक्षतोऽवगम्यते, यवबीजं वा न तज्जननस्वभावं तद्भावे शाल्यङ्कुरानुपलब्ध्या, तद्विविक्तबीजग्राहि प्रत्यक्षं बीजग्राहिप्रत्यक्षरूपतया प्रतीयते, तथाऽत्राप्यवस्थाद्वये शालिबीजस्य तदङ्कुरविविक्तावस्थाग्राहिप्रत्यक्षबलादेव स्वाङ्कुरजनका(न्या)जनकस्वभावता किं न निश्चीयते ?, नन्वेवमपि प्रतिपादयन् कथञ्चिद्भेदमेव समर्थयसे, शालिबीजावच्छेदेनैवोभयस्वभावोपदर्शनात्, तस्माद् अवस्थाभेदेऽप्यवस्थावतः कथञ्चिदभेदस्तर्हि तस्यावस्थारूपविवेकिना रूपान्तरेण प्रत्यक्षे प्रतिभासनप्रसङ्गो, नहि यदात्मविवेकेन स्वज्ञानेन प्रतिभासते तस्य प्रत्यक्षता युक्ता,बीजरूपतायाः कथञ्चिदवस्थाविवेकेन प्रतिभासनादयमदोषः, सर्वथा अवस्थातद्वतोर्न स्वभावभेदो, नापि तथा प्रतिभासनमिति। नन्ववस्थाभ्योऽनवाप्तभेदस्यावस्थानात्मनस्तद्भेदे सत्यभेदो न सङ्गच्छते, ततश्चावस्थामिवात्मभेदमनुभवतः कथमवस्थातृत्वमस्य ?, कथञ्चिद्भेदस्यापि भावादयमदोषः। नन्वेवमपि यमात्मानं पुरोधायायमवस्थाता, अवस्थाश्चेमा इति व्यावर्ण्यते तेनावस्थातद्वतोर्यदि भेदस्तदा भेद एव, अथ तेनात्मनाऽभेदः अवस्थावदभेदप्रसङ्गोऽवस्थातुस्तद्वदवस्थानामभेदस्य वा, तदेतदपि तत्त्वापरिज्ञानविजृम्भितं परस्य,यतः कथञ्चिद्भेद इत्यस्य

हि नायमर्थो, यदुत–स्वस्वभावमग्नमवस्थातृस्वरूपं केवलमेव किमपि अत्यन्तभिन्नस्वभाववताऽवस्थारूपेण सहाभिन्नं भूत्वा ततस्तद्भेदं प्रतिपद्यते, किन्त्वयमर्थो यदुत यदवस्थातृरूपमवस्थारूपमपि तदेव, अवस्थास्वरूपं च परस्परमत्यन्तविलक्षणमविलक्षणं वा न क्वचिदुपलभ्यते, किन्तु जात्यन्तरात्मकं, अतो नात्यन्तमवस्थानानात्वमवस्थातुर्वा सर्वथैकरूपता, किन्तु ता एवावस्था ऐकान्तिकवैरूप्यविलक्षणत्वादवस्थातृरूपतामवलम्बन्ते, ऐकान्तिकसाररूप्यवैलक्षण्याच्चावस्थारूपतां, न चैवमभेदरूपतासम्पादकमन्यदेव किमपि तत्र रूपं तद्विदा मृग्यते यदाऽवस्थातृरूपं केवलं किमपि भवेत्, यदिवा ताः कदाचिदेकान्तेन भिन्नेन केनचिदात्मना कथञ्चिल्लाभमासाद्य पश्चादैकान्तिकीं कांचिदभेदरूपतामपेक्ष्यावस्थातृरूपतामीहेरन्, एकांतेनाभेदरूपाऽपि न ता इति भेदरूपताऽपि नासां रूपान्तरापेक्षिणी। तथा च 'यमात्मानं पुरोधायायमवस्थाता अवस्थाश्चेमाः इति व्यावर्ण्यते तेनावस्थातद्वतोर्यदि भेदस्तदा भेद एवे'त्यादि फल्ग्वेव, न हि एकमवस्थातृ एकां वाऽवस्थां पुरोधाय काश्चिदत्यन्तं भिन्नरूपाः केनचित्कदाचिदवस्था व्यावर्ण्यन्ते, न खलु जैना एवं व्यावर्णयन्ति, किन्तु ता एवावस्था यथोक्तरूपाः प्रथमानास्तथा क्षयोपशमवशात्पूर्वोक्तन्यायेनोभयरूपां धियमादधानाः कदाचित्कस्यापि रूपस्य प्रधानोपसर्जनभावेनोभयरूपं व्यवहारमारचयन्ति, योऽपि चावस्थावद्भेदप्रसङ्गोऽवस्थातुः तद्वदवस्थानामभेदस्य वा सोऽपि यदि कथंचिदिति प्रेर्यते तदेष्यत एव, अवस्थातुरेवावस्थात्मना विवर्त्तनात्, तथा च तद्भेदे तस्यापि भेदात्, न च ता अवस्थाः काश्चित्स्वतन्त्राः, किन्त्वेतस्यैव कथञ्चिदन्यथात्वात्मिकाः, तथा च तासां कथञ्चिदभेदोऽपि न बाधकः। एवं चात्र भेदाभेदे व्यवस्थिते यदपरमप्याशङ्क्योक्तं परेण यथा–'तयोरपि कथञ्चिद्भेदाभेदाविति चेत् तयोस्तर्ह्यवस्थातद्वदात्मनोर्भेदवतोः कथञ्चिदभेदनिमित्तं रूपान्तरं स्यात्, तथा च रूपान्तरस्यापि ताभ्यां कथञ्चिद्भेदः, अन्यथा तदेकस्वभावादत्यन्तमभेदादवस्थातद्वतोः परस्परमत्यन्तभेदा-

भेदौ प्रसज्येयातां, रूपान्तरस्य कथञ्चिद्भेदे तन्निबन्धनमपरं रूपं तथाऽस्यापि तदन्यदिति अपरिमितरूपतैव वस्तुनः समासज्येत, न चापरिमितरूपप्रतिभासि प्रत्यक्षमनुभवामः, अननुभवन्तश्च कथं तत्कल्पनयाऽऽत्मानमात्मनैव विप्रलंभेमहि ?, तस्मादवस्थारूपविवेकेनोपलब्धिलक्षणप्राप्तस्यानुपलम्भादपरिमितरूपप्रसङ्गाच्च कथञ्चिद्भेदाभेदवतोऽवस्थातुरसत्त्वमेव, ताश्चावस्था जनकस्वभावभेदवत्यः प्रत्यक्षत एवावगम्यन्ते इति तदैकत्वाध्यावसायि प्रत्यभिज्ञानं तद्बाधामनुभवत्कथं प्रमाणं स्यात् ?' इत्यादि, तदपि प्रतिक्षिप्तमवगन्तव्यं, यतो यथाऽसौ तदवस्थाविवेकेनास्ति तथा नानुपलम्भः, वस्तुन एव तस्य तादृशत्वाच्च नापरिमितरूपप्रसङ्ग इति, तस्मादुक्तन्यायेन कथञ्चिद्भेदाभेदवतोऽवस्थातुः सत्त्वमेव, ताश्चावस्था जनकाजनकतया स्वभावभेदमनुभवन्त्योऽपि सर्वथैव स्वभावभेदवत्य इति कुतोऽपि प्रत्यक्षान्नावगम्यन्ते, न खल्वत्र जनकमजनकं वा किमप्यत्यन्तभिन्नं रूपमाभाति, तथाविधवर्णसंस्थानाद्यात्मनः शालिबीजाभिधानस्य पदार्थस्योभयावस्थाकालेऽप्यत्रुटितरूपस्यैव प्रकाशनात्, न हीदं जनकमजनकं वेत्यर्वाग्दृशा प्रत्यक्षतोऽवसातुं शक्यं, फलानुमेयत्वाद्भावशक्तीनां, तथाहि–शालियवबीजादीनां वर्णाकाराद्यात्मना वैलक्षण्योपलम्भाद् यथा भेदः प्रत्यक्षसिद्धस्तथा नेह, तन्न प्रत्यभिज्ञाप्रमाणमध्यक्षबाधितं, न चेदं शक्यते वक्तुं–अवस्था एवाङ्कुरादिजननस्वभावा नावस्थातेति, तस्य सर्वसामर्थ्यविरहलक्षणस्यासत्त्वमेव, यथोक्तरूपाणामवस्थानामुपगमेऽवस्थातुरपि कार्यजनने व्यापारात्, नहि बीजस्वभावविरहितो जनकस्वभावः एकः कश्चिद्दण्डायमानस्तदाऽङ्कुरादिकार्यमुत्पादयति, किन्तु तदेव बीजमजननपर्यायत्यागेन जनकपर्यायतया विवर्त्तते, नतु शालिबीजादिरूपतामपि जहाति, तस्माद्बीजादिरूपतामन्वितामधिगच्छत्प्रत्यभिज्ञानं प्रमाणमिति, तत्प्रतिभासिनो ह्यभिन्नरूपस्यालीकत्वे क्षणसमुद्भवामपि वृत्तिमनुभवतोऽस्य तैमिरिकादिधियामिवाप्रत्यक्षतेति वक्तुं शक्यते, नान्यथा, न च तत्प्रतिभासिनो रूपस्यालीकत्व-

व्यवस्थापकं किमप्यस्ति, ननु नार्थक्रियानिबन्धनं रूपमपहाय बीजादेरपरः स्वभावोऽस्ति यस्याधिगमात्प्रत्यभिज्ञानं प्रमाणं भवेत्, अर्थक्रियासामर्थ्यलक्षणत्वात्परमार्थसतः, तस्मात्सदृशापरभावनिबन्धन एवायं केशकदलीस्तम्बादिष्विवाकारसाम्यमात्रापहृतहृदयानां भ्रान्त एव तत्त्वाध्यवसायो मन्तव्यः, ततः सतोऽपि प्रतिक्षणभेदस्यानुपलक्षणं बालानां, यदा तु विधुरप्रत्ययोपनिपाताद्विसदृशापरभावप्रसवस्तदाऽस्य तत्त्वाध्यवसायी प्रत्यभिज्ञाप्रत्ययो न भूतिमवलम्बते, ते च तदाकारपरामर्शलक्षणामर्थज्ञानादिलक्षणां वाऽर्थक्रियां कुर्वन्ति नापर इति, एतदप्यसम्बद्धाभिधानं परस्य, एकान्तनश्वरेष्वर्थक्रियाया एवापास्तत्वात्, न च वर्णसंस्थानाद्यभेदप्रतिभासविषयवस्तुव्यतिरेकेणापरमर्थक्रियासामर्थ्यमपि प्रमाणेनोपलभ्यते यदुभयावस्थाभेदसम्पादकं परिकल्प्येत, केशकदलीस्तम्बादिषु च यद्यपीदं कस्यचिद्भेदावभासि समुपजायते तथाऽपि तद्भेदग्राहिणा जनान्तरदर्शनेन तद्बाध्यत इति भ्रान्तं युक्तम्, इह तु न कदाचित्कस्यचिद्भेदाभासि संवेदनमुदयदवीमासादयतीति, वचनमात्रेणैव यदि परं भ्रान्तं, ततः सतोऽपि प्रतिक्षणभेदस्यानुपलक्षणं बालानामिति स्वशिष्याणामेव विस्मयमुत्पादयति, यदाऽपि विधुरप्रत्ययोपनिपातस्तदाऽपि न सर्वथा विसदृशापरभावप्रसवो, नापि तत्त्वाध्यवसायिनः प्रत्यभिज्ञाप्रत्ययस्य न प्रभवः, घटादिविनाशेऽपि मृदादिरूपेणानुगताकाराया धियः संवेद्यमानत्वात्, ते च तदेकाकारपरामर्शलक्षणामर्थज्ञानादिलक्षणां वाऽर्थक्रियां कुर्वन्तः प्रमाणदृष्टत्वाद् यथा भवद्भिरभ्युपगम्यन्ते तथा क्वचिदेकस्वभावा अभ्युपगन्तव्याः, तन्न प्रत्यक्षबाधितेयं प्रत्यभिज्ञा, यत्पुनः 'यद्यदा यज्जननस्वभावं तत्तदा तज्जनयत्येव, अजनकस्य तज्जननस्वभावविरोधात्, अन्यस्य वा तत्स्वभावतापत्तेः, यथा तदेव बीजादिकं सलिलादिसंनिधिकाले, कुशूलाद्यवस्थास्वपि चेदं बीजादि स्वकार्यजनकस्वभावमेव प्रत्यभिज्ञया व्यवस्थाप्यत इति स्वभावहेतुप्रसङ्गः, न च जनयति तन्न जननस्वभावमिति विपर्ययप्रयोगः, यद्यदा

यज्जननस्वभावनिर्वर्त्त्यं कार्यं न जनयति न तत्तदा तज्जननस्वभावं, तद्यथा शाल्यङ्कुरजननस्वभावनिर्वर्त्त्यं कार्यमजनत् कोद्रवबीजं, न जनयति च सलिलादिकारणसंनिधेः प्राक् तत्कार्यं जननस्वभावनिर्वर्त्त्यं स्वकार्यं बीजादिकमिति व्यापकानुपलब्धिः, ततोऽनुमानतोऽपि बाधामनुभवत्प्रत्यभिज्ञानं कथं प्रमाणं स्यादि'त्याद्यनुमानबाधितत्वमस्याः परैरुच्चैःकारं किलोच्यते तदपि नासत्पक्षक्षेपक्षममित्याचक्ष्महे, तथाहि-यद्यदा यज्जननस्वभावं तत्तदा तज्जनयत्येव अजनकस्य तत्स्वभावविरोधा'दिति यदुच्यते तत्राजनकस्य तदा तज्जननस्वभाव एव विरुध्यते तदा शाल्यङ्कुरार्थिभिर्नेदमुपादीयते, उपात्तं वा तदङ्कुरं नोत्पादयेत्, यत एवमपि प्रसङ्गविपर्ययौ प्रवर्त्तेते-यच्छालिबीजस्वभावं न भवति न तत् शाल्यंकुरार्थिभिरुपादीयते, अतत्स्वभावस्यातज्जनकत्वविरोधात्, यतः कुतोऽपि वा यस्य कस्यचिद्भावोत्पत्तेः, यथा यवबीजादि, अशालिबीजस्वभावं चानुमानेनैकान्तेन भेदरूपतया व्यवस्थाप्यमानं तदुपादानमिति व्यापकानुपलब्धिप्रसङ्गः, न च तन्न जनयति, तन्नाशालिबीजस्वभावं तदिति विपर्ययः प्रयोगः-यद्यत्स्वभावनिर्वर्त्त्यं कार्यं जनयति तत्तत्स्वभावं तद्यथोभयाभिमतं विज्ञानाद्युपादानं, जनयति च शालिबीजस्वभावनिर्वर्त्त्यं शाल्यङ्कुरादिकार्यं परम्परया तदपीति स्वभावहेतुः, तस्मादेतदेव युक्तं यथा तच्छालिबीजमेवविधस्वभावमेव येनाजनकमपि तत् सलिलादिसंनिधिकाले तज्जननस्वभावतया परिणमतीति, तथा च शालिबीजस्वभावस्यैव जनकाजनकोभयस्वभावापादनेन यदि कथञ्चिद्भेदः साध्यते सिद्धसाध्यता, अथ सर्वथा भेदस्तदा प्रमाणबाधा,तत्कथमनुमानाद्बाधामनुभवत् प्रत्यभिज्ञानमप्रमाणं स्यात्?। किञ्च-इदं कारणं यदा तज्जननस्वभावं तदैव यदि कार्यं जनयति तर्हि कारणक्षण एव कार्यं जायेत, न ह्यन्यदा तत्कारणेन जन्यते अन्यदा च स्वयमुपजायत इति स्वातन्त्र्यमस्य युक्तं, तथा च कार्यकारणयोरेककालताप्रसङ्गः, कार्यस्वरूपातिरेकिणो जन्मनोऽसम्भवात्, न चेदमस्ति, तेनानैकान्तिकोऽपि प्रसङ्गहेतुः

परस्य, अथ न व्यापारसमावेशात्किञ्चित्केनचिज्जन्यते, किन्तु स्वहेतुप्रतिनियमादीदृशमेव किमपि तत्कारणं जातं येन तदनन्तरं किमप्युपजायते, एतावन्मात्रेण च तत्तेन जन्यत इत्युच्यते इति नोक्तदोषप्रसङ्गः, नन्वेतच्छठोत्तरमक्षणिकवादिनोऽपि न दुर्लभं, तथाहि–तेनाप्येवं वक्तुं शक्यत एव यथा स्वहेतुप्रतिनियमादीदृशमेव किमपि तत्कारणं जातं यत् तदा तदा तत्तत्सहकारिकारणसंनिधौ तत्तत्कार्यमुपजायते, इयन्मात्रेण च तत्तेन जन्यत इत्युच्यते, न पुनरस्मत्पक्षेऽपि व्यापारसमावेशात्किमपि कारणं कार्यं जनयति, तथा च कारणे तत्र सदा संनिहितेऽपि यदा स्वहेतुभिः सहकारिणः संनिधीयन्ते तदैव तज्जायत इति, ननु चास्य कारणस्यायमपि स्वभावः स्वहेतुभिस्तथा निर्मितो येन सहकारिणोऽपि सर्वानेकदैव संनिधापयति, न च तत्र कार्ये समुत्पन्ने कारणस्य तत्स्वभावेन विगमः यदिहायं कार्यात्मनि संक्रामति तदा विगच्छति, यदा तु स्वहेतुभिरेवंविध एव निर्मितो येन तत्संनिधिमात्रेणापरं वस्त्वन्तरमुपजायते तदा तदुत्पादानन्तरं कथमस्य विगमः सङ्गच्छत इति साधुधियः सम्यग्विभावयन्तु, नापि कृतस्य पुनः कारणप्रसङ्गोऽपि दोष उपढौकते, यतस्तदैव तदुपजायते, नान्यदा, तत्क्षण एव सकलापरकारणकलापस्यासंनिधानादिति, तन्नेदं प्रसङ्गसाधनं साधीयः, विपर्ययश्च प्रसङ्गमूलः, तत्र प्रतिहते स प्रतिहत एव।

**क्षणिकत्वानुमाननिरासः**–यदपि 'तत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा इमे' इति क्षणिकत्वप्रसाधनाय कृताभिषेकमनुमानं तदप्यन्वयानुविद्धमेव क्षणिकतां साधयति, यतः सत्त्वमर्थक्रियाकारित्वेन व्याप्तं, अर्थक्रियाकारित्वं च कूटस्थनित्यादक्षणिकाच्च व्यावर्त्तमानमुत्पादव्ययध्रौव्यवत्येव वस्तुनि व्यवतिष्ठत इति प्रदर्शितं प्राक्। एवमन्यदप्येकान्तक्षणिकत्वप्रसाधकमनुमानमविद्यमानप्रतिबन्धमसिद्धविरुद्धानैकान्तिकदूषणानामन्यतरन्नातिक्रामति, (यदपि वारिदज्ञातं) तदपि दूषण(शतसंकुलं, प्रत्यभिज्ञाने)

नैव बाध्यमानत्वादप्रमाणं, न चानुमानेन बाध्यमानत्वात्प्रत्यभिज्ञानमपि न प्रमाणमिति वाच्यं, इतरेतराश्रयदोषात्, ननु न प्रत्यभिज्ञानस्याप्रामाण्यात्क्षणिकानुमानं प्रमाणमिति, किन्तु स्वसाध्यप्रतिबन्धात्, स च विपर्यये बाधकप्रमाणान्निश्चित इति, एतदप्यचारु, यतः क्षणिकस्य विपर्ययोऽक्षणिकत्वं, तत्र कतरत्प्रमाणं हेतुसद्भावं बाधेत?, न तावत्प्रत्यक्षं अक्षणिकत्वस्य केनचित्कदाऽपि प्रत्यक्षेणाग्रहणात्, तद्ग्रहणे वा कथं सर्वं क्षणिकं साध्येत?, अथ नाक्षणिके वस्तुनि प्रवर्त्तमानं सत् प्रत्यक्षं हेतोः सद्भावं बाधते, किन्तु निवर्त्तमानं, तर्हि का प्रत्यक्षस्याक्षणिकान्निवृत्तिः?, किं तत्राप्रवृत्तिमात्रमुत तद्विपर्ययप्रवृत्त्यात्मिका?, प्रथमपक्षे स्वापमदमूर्छाद्यवस्थास्वपि तन्निश्चयः स्यात्, द्वितीयस्तु पक्षस्तदा विद्वज्जनमनोमोदाय कक्षां बध्नाति यदाऽक्षणिकता प्रत्यक्षाऽवसेया स्यात्, न चायमभ्युपगमो भवतां, तन्नाध्यक्षरूपं विपर्यये बाधकं प्रमाणं, नाप्यनुमानरूपमनवस्थाप्रसङ्गात्, सा हि तदा न भवेत् यदा मूलभूतं तद्ग्राहकं प्रत्यक्षं क्वचिदुपेयते, नान्यथा, न च प्रत्यक्षानुमानातिरिक्तमपरं प्रमाणमिष्यते विद्वद्भिः, तन्न कस्यचिद्धेतोः स्वसाध्यप्रतिबन्धः, तन्न प्रत्यभिज्ञा अनुमानबाधामश्नुते, याऽप्याकारसाम्यान्नीलेतरकुसुमादेः सर्पादिवस्तुन एकतां प्रतीयती प्रत्यभिज्ञोपजायते साऽपि तत्समानाकारपरिणामरूपामेकतां प्रतीयती प्रमाणमिष्यत एव, अपरस्तु विशेषस्तत्र प्रमाणान्तरादस्तु, न तावता तदप्रमाणता भवति, न चैकत्र भ्रान्तं प्रत्यभिज्ञानं सर्वत्र भ्रान्तमिति वक्तुं शक्यमतिप्रसङ्गात्, अथ प्रस्तुतेऽपि प्रतिक्षणं स्वभावभेदेऽप्याकारसाम्यमात्रादेव प्रत्यभिज्ञोदयः किं नेष्यते?, स्यादेतत्, यदि प्रतिक्षणं स्वभावभेदः केनचित्कदाचिदात्यन्तिकः प्रतिपन्नो भवेत्, न चैतदस्ति, प्रतिक्षणभेदग्राहिणः कस्यचित्प्रमाणस्याननुभवात्, तस्मात्पूर्वदर्शनाहितसंस्कारप्रबोधप्रभवस्मरणसहायेन्द्रियान्वयव्यतिरेकानुविधायिनी पूर्वोत्तराऽनेकपर्यायव्यापिद्रव्यविषया प्रत्यभिज्ञा प्रमाणं, यदि च नियतव्यक्तिसम्बद्धेन्द्रियजनितप्रत्यक्षं नाती-

तादिपर्यायात्मकद्रव्यग्राहि स्यात् तदा यदेतत् सुप्रसिद्धं धूमाद्धूमध्वजानुमानं तदपि न स्यात्, तद्धि महानसादिव्यवस्थितधूमधूमध्वजसम्बद्धेन्द्रियजनितप्रत्यक्षेण शेषत्रैलोक्योदरविवरवर्त्तिधूमवह्निविशेषव्यवस्थिततिर्यक्सामान्ययोर्व्याप्तिग्रहणे सति प्रवर्त्तते, तच्चेन्द्रियसम्बद्धवस्तुमात्रविषयप्रत्यक्षतायां न स्यात्, तस्माद् यथा प्रत्यक्षं व्याप्तिग्राहकमशेषविशेषविशेषात्मकतिर्यक्सामान्यग्राहि तथा प्रत्यभिज्ञाप्रत्यक्षमन्वयरूपोर्ध्वतासामान्यग्राहीति, न चैवमनाद्यनन्ताखिलस्वपर्यायव्यापिनो द्रव्यस्य ग्रहणात्सर्वप्राणिनां सर्वस्वजन्मपरम्पराग्रहणप्रसङ्गः, यथाक्षयोपशममेव विज्ञानप्रसूतेः, समस्तावरणापगमे तु सर्वविदामनाद्यनन्तजन्मादिपरम्परावभासोऽपि न विरुध्यते। प्रत्यभिज्ञायामपूर्वार्थज्ञानं नन्वन्वयसद्भावे यदेव पूर्वप्रमाणेन वस्तु प्रतिपन्नमिदानीमपि तदेव प्रतिभासेत्, अथ चानधिगतार्थाधिगमाभावात् प्रत्यभिज्ञा ज्ञानं कथं प्रमाणतामधिगच्छेत् ?, अनधिगतार्थाधिगन्तृ हि प्रमाणं प्रमाणविद्भिः परकीर्त्तितं, किञ्च—एवमेकरूपत्वे वस्तुनो यथेदानीमिदमुपजायते तथा प्रथमदर्शनकालेऽप्युपजायते, न ह्यक्रमात् क्रमिणो भावा भवितुमर्हन्ति, समधिगताशेषस्वभावेन भावेन तदैव सकलस्वकार्यसम्पादनात्, अपिच—स एवायमित्युल्लेखेन प्रत्यभिज्ञानस्य प्रसवः, तत्र स इत्यनेन दृष्टत्वमुल्लिख्यते, अयमित्यनेन च दृश्यमानत्वं, ततश्चात्र दृष्टत्वं दृश्यमानत्वं चैक्येन प्रतीयते किं वा भेदेन ?, पूर्वस्मिन् स इति अयमिति वा स्यात्, अन्यतररूपस्यान्यतररूपानुप्रवेशेनैव प्रतिभासनात्, द्वितीयेऽपि यदा सोऽयमिति विरुद्धमेतद्द्वयमाभाति तदैतयोर्विरुद्धज्ञानयोः कुतः सामान्याधिकरण्यम् ?, अथ प्रत्ययभेदेऽपि प्रतिभास्यं न भिद्यते तर्हि स्वतन्त्रं प्रतिभास्यं स्यात्, ततो ज्ञानमात्रमेवावशिष्यते, तस्मात्प्रमाणाधीनां प्रमेयव्यवस्थामिच्छद्भिः सद्भिर्यथाप्रतिभासमेवासावभ्युगन्तव्या, तथा च भिन्नमभिन्नरूपतया प्रतिपद्यमाना प्रत्यभिज्ञा शुक्तिकारजतवद्भ्रान्तैव युक्ता, स्मार्त्तमेव चेदं प्रत्यभिज्ञानरूपं विज्ञानं, न तु प्रत्यक्षरूपं, तदुक्तम्—"पूर्वकालविशिष्टेन, सदृशे-

ऽर्थेऽवलोकिते। सहचारितया ज्ञानं, स्मार्त्तं चन्दनगन्धवत् ॥ १ ॥" तथाहि-चन्दने गन्धे रूपेण सहचारिणि रूपदृष्टेः स्मृतिर्गन्धे यद्वत् तद्वत्पूर्वविशेषणेऽदृश्यमानार्थतुल्येन वस्तुना सहचारि यत्पूर्वकालादि तत् स्मार्त्तं वर्त्तमानविशेषणं,ततः स्थितं-स्मरणाध्यक्षं कल्पनाज्ञानमीदृशं यत् स एवायमिति, अस्य नापूर्वार्थमविदितपरमार्थस्य परस्य प्रलपितं, यतो नानधिगतार्थाधिगन्तृत्वं प्रामाण्ये निबन्धनं, अपि तु बाधरहितत्वम्, अन्यथा समस्तवस्तुस्तोमव्यापि योगिविज्ञानं प्रथमक्षण एव प्रमाणं भवेत्, तदुत्तरकालभावीनि तु तद्विज्ञानानि तस्मिन्नेव विषये प्रवर्त्तमानान्यप्रमाणताभाञ्जि भवेयुः, अथ तदपि किञ्चिदस्ति यदाद्यक्षणे तेन न ज्ञातं, तर्हि प्रतिक्षणमपरापरवस्तुग्रहणादसर्वज्ञतैव सुगतस्यासज्येत, यतो भवद्भिरपीदमङ्गीक्रियत एव, यथा-"एको भावः सर्वथा येन दृष्टः, सर्वे भावाः सर्वथा तेन दृष्टाः। सर्वे भावाः सर्वथा येन दृष्टा, एको भावः सर्वथा तेन दृष्टः ॥१॥" तस्मात्सर्वात्मना सर्वभावान् प्रतिक्षणमीक्षमाणानां सर्वज्ञप्रत्यक्षक्षणानामाद्यक्षणव्यतिरेकेणातिप्रसङ्गादनधिगतार्थाधिगतृत्वमव्यापकं प्रमाणतायाः,न च क्षणादूर्ध्वं सर्वज्ञज्ञानमप्रमाणं यदि भवति तथाऽपि न नः किमपि क्षुण्णमिति सचेतसः प्रतिपादयितुमुचितं।

**आगमप्रामाण्यवादः**-असदादिभ्योऽप्यपकृष्यमाणत्वेन तदागमे प्रेक्षावतां क्वचिदपि प्रवृत्त्यसिद्धेः, प्रेक्षावन्तो हि प्रमाणादेव प्रवर्त्तन्ते, अप्रमाणात्प्रवर्त्तमानानां प्रेक्षावत्तैव न स्यात्, अथ तेऽपि कृषीबलादय इव कदाचिदर्थसंशयेऽपि प्रवर्त्तन्त इत्यभिधीयते तदप्यचारु, यतो युक्ता कृषीबलादीनामवधृतबीजाबीजस्वभावानामुपायनिश्चये सत्युपेयसन्देहेऽपि प्रवृत्तिः, इह त्वागमाप्रामाण्ये स्वर्गापवर्गादिसाधनस्योपायस्य न निश्चयोऽस्ति ततः कथं ततस्ते तत्र प्रवर्त्तेरन्?, आगमश्च शब्दात्मकः, शब्दानां च सत्यासत्यत्वं विवक्षावशात्, विवक्षैव हि पुरुषसत्यासत्यत्वेन सत्येतरा भवन्ती शब्दानां सत्यासत्यत्वमावेदयतीति, ततः पुरुष-

प्रामाण्यमेव दर्पणसङ्क्रान्तप्रतिबिम्बमिव शब्देष्वभिधीयते, यदि च क्षणादूर्द्ध्वं सर्वज्ञज्ञानमप्रमाणं तदा तदागमः कथमिव प्रमाणं भवेत् ?, ननु यदि पुरुषप्रामाण्याच्छब्दानां प्रामाण्यं तर्हि कथमेवमुच्यते–'पुग्गलरूवो सद्दो तहऽत्थवत्ता तहापयइए उ। सच्चाइचित्तधम्मा तेण उ ववहारसिद्धित्ति ॥१॥" इह तथाप्रकृत्यैवास्य सत्यादिचित्रधर्मत्वमभ्यधायीति, नैष दोषः, यतः सा सत्यधर्मता यद्यप्यात्मभूतैवास्य तथाऽपि यतः प्रमाणभूतं प्रतिपादकमपेक्ष्य ते पुद्गलास्तथा परिणतास्ततस्तत्प्रामाण्यादस्य प्रामाण्यमुच्यत इति, अत एवात्रेदमप्यनवकाशं यदुच्यते परैः–यथा यद्येनासम्बद्धस्वभावं न तत्तस्य गमकं, यथा रजोरज्ज्वादि राज्यादेः, अर्थेनाप्रतिबद्धस्वभावाश्च सिद्धाः शब्दाः, तथाहि–शब्दार्थयोः सम्बन्धस्तादात्म्यलक्षणः तदुत्पत्तिलक्षणः संयोगलक्षणः समवायलक्षणो विषयविषयिभावलक्षणो वा भवेत् ?, तत्र न तावत्तादात्म्यलक्षणः संभवति, अप्रतीतेः, अन्यथा क्षुरिकामोदकादिशब्दोच्चारणान्मुखपाटनपूरणादिरुपलभ्येत, तन्न प्रथमपक्षः, नापि द्वितीयो, यतः शब्देन वाऽर्थो जन्येत ? अर्थेन वा शब्दः ?, प्रथमपक्षे न कश्चिदपरिपूर्णेच्छः स्यात्, द्वितीयेऽपि अर्थेषु यथास्वं पुरुषबुद्धिनिरपेक्षाणां शब्दानां श्रवणं स्यात्, न चार्थमात्रात्पुरुषबुद्धिनिरपेक्षाच्छब्दा उत्पद्यन्ते, तथाहि–प्रथममर्थदर्शनं ततस्तत्प्रतिपादनाभिप्रायः ततो विवक्षा ततः स्थानकरणाभिघातः ततः शब्दनिष्पत्तिरिति, नार्थजन्यता शब्दानां, तन्न तदुत्पत्तिलक्षणयोऽप्यत्र सम्बन्धः, नापि संयोगलक्षणः, यतो मुखे शब्दस्योपलम्भो भूमावर्थस्य, नापि समवायलक्षणः, अयुतसिद्धानामाधार्याधारभूतानामेव हि स व्यावर्ण्यते, न च शब्दार्थयोरयुतसिद्धिराधाराधेयभावो वा घटते, विषयविषयिभावस्तु वाच्यवाचकभाव एव, स च सति सम्बन्धे स्यात्, स च तात्त्विको नास्तीति सङ्केतमात्रनिर्मित एवायमिति शब्दानामर्थं प्रति प्रामाण्यं नास्ति परमार्थत इति, यतः सङ्केतवशादपि तावद्वाच्यवाचकभावलक्षणः सम्बन्धः सुकर एवेति न प्रयोजनम-

परसम्बन्धपरिकल्पनायाः, स च सङ्केतः प्रमाणभूतपुरुषनिर्मितो नार्थसत्तामतिक्रम्य कदाचिदपीति, सिद्धमर्थं प्रति प्रामाण्यं प्रदर्शितन्यायेन शब्दस्य, तेन—"नायं स्वभावः कार्यं वा, वस्तूनां वक्तरि ध्वनिः। न च तद्व्यतिरिक्तस्य, विद्यतेऽव्यभिचारिता ॥ १ ॥ प्रवृत्तिर्वाचकानां च, वाच्यदृष्टिकृतेति चेत्। परस्परविरुद्धार्था, कथमेकत्र सा भवेत् ॥२॥ वस्तुभिर्नागमास्तेन, कथञ्चिन्नान्तरीयकाः। प्रतिपत्तुः प्रसिद्ध्यन्ति, कुतस्तेभ्योऽर्थनिश्चयः ? ॥३॥' इत्यपास्तं, स च स्वप्रामाण्यान्यथानुपपत्तेः प्रतिपादयितुः प्रामाण्यमाविष्करोति, तस्मात् पूर्वप्रत्यक्षक्षणैरभिन्नयोगक्षेमत्वेऽपि यथोत्तरकालयोगि प्रत्यक्षं प्रमाणं एवं यदि प्रत्यभिज्ञापि स्यात् न किञ्चिदयुक्तं पश्यामः।

अनधिगन्तृलक्षणपरीक्षा—किञ्च—सर्वथा यदि यदनधिगतमर्थमधिगच्छति तत्प्रमाणं तर्हि क्षणिकत्वादिप्रसाधकमनुमानमप्रमाणं भवेत्, न हि प्रत्यक्षविषयादपरस्यैव कस्यचिदनुमानेन क्षणिकत्वादि साध्यते, वस्तुसतः स्वलक्षणस्य क्षणिकत्वप्रसङ्गात्, अथानुमानेनान्यसमारोपव्यवच्छेदः क्रियते, ननु तस्मिन्नपि कृते यदि वस्तु स्वरूपेण न क्षणिकं (तदा न सतः क्षणिकत्वं) सिध्येत, तथा चान्धकारनृत्यमिवानुमानं न क्वचिदुपयोगि, अथैतत्स्वलक्षणं यदध्यक्षमीक्ष्यते तदक्षणिकव्यावृत्तात्मनाऽपि प्रत्यक्षेण न गृहीतमिति तदनुमानं प्रमाणं तर्हि कथञ्चिद्गृहीतग्राहिणोऽपि प्रामाण्यमनिवार्यं, तथा च प्रत्यभिज्ञाऽपि प्रामाण्यमश्नुवीत, नहीयमपि यथैव पूर्वप्रत्यक्षेण वस्तु प्रतिपन्नं सर्वात्मना वा तथैव प्रतिपद्यते, कथञ्चिदन्यथा तदधिगमात्, कूटस्थनित्यताऽयोगात्, अत एव प्रथमदर्शनकाले न प्रत्यभिज्ञोदयः, तदा तादृशपरिपर्यायाया विशिष्टतायाश्चाभावात्, न च दृष्टत्वदृश्यमानयोरेकान्तेनैक्यमत्यन्तभेदो वाऽत्र, नीलादिरूपमेव हि पूर्वदर्शनविषयताऽपेक्षया दृष्टमित्युच्यते, इदानींतनदर्शनापेक्षया च दृश्यमानमिति तन्नेदमेकान्तेन तयो-

रैक्यमत्यन्तभेदो वा, नीलादिरूपतुल्याधिकरणताऽप्यत एवात्रोपपद्यते, नहि 'सोऽयमिति' इतीदं द्वयं सर्वथैव (भेदव)दाभाति, किन्तु कथञ्चिदभेदानुविद्धं, ततो यादृशं तद्वस्त्वस्ति तादृशमवभासयन्ती प्रत्यभिज्ञा कथं भ्रान्ता स्यात्?, तस्माद् यथा नीलादिव्यवस्थानिबन्धनं नीलादिदर्शनं स्वविषये न भ्रान्तमिति प्रमाणं तथा प्रत्यभिज्ञाऽपि, अत एव च स्मृत्यूहादीनामपि प्रामाण्यं प्रमाणविदो वदन्ति, इच्छाद्वेषादीनां च न बाह्यवस्त्ववभासित्वमस्तीति न प्रामाण्यं, यतः–"प्रमाणं स्वपराभासि, ज्ञानं बाधविवर्जितम्।" इति येन(इत्येवं) प्रमाणलक्षणं व्यावर्ण्यत इति, न चेदं प्रत्यभिज्ञानं स्मार्त्तमेव, न प्रत्यक्षं, अक्षान्वयव्यतिरेकानुविधानात्, यत्तु "पूर्वकालविशिष्टेन, सदृशेऽर्थेऽवलोकिते। सहचारितया ज्ञानं, स्मार्त्तं चन्दनगन्धवत् ॥१॥" इत्याद्यवादि न तत्र वचनमात्रादन्यत्प्रमाणं, किञ्च–यस्यैव रूपदर्शनं तस्यैव गन्धस्मरणं? किं वाऽन्यस्य?, प्रथमपक्षे यथा कथञ्चिदेकस्यैवेदं स्वभावद्वयमविरुद्धं तथा द्रव्यस्याप्यतीतानागतपर्याययोगित्वं न विरुध्येत, द्वितीयपक्षे एतयोः स्मरणदर्शनयोरनुसन्धानं न स्यात्, नहि देवदत्तयज्ञदत्तविज्ञानयोः कदाचिदनुसन्धानं, स्वसंवेदनसिद्धं चेदमपह्नोतुमशक्यं, तस्मादेनयोः संवेदनयोः कथञ्चिदेकस्वभावत्वमेष्टव्यं, तथा तद्विषययोरपि नात्यन्तभेदः प्रतीतिपथमवतरति, सद्वर्णं सुगन्धीदं चन्दनमिति द्रव्यरूपताया(गन्धादीनामपि) कथञ्चिदेकतया प्रतिभासनात्, न च तत्रान्ये रूपपरमाणवोऽन्ये च गन्धपरमाणवः केचनापि प्रतिभासन्ते, तस्मादेक एव स्कन्धस्तत्र रूपगन्धस्पर्शाद्यनेकात्मतया परिणतस्तथा तथा प्रतिभासत इति न रूपगन्धयोरपि सर्वथा भेदः, तथा स एवायमित्यत्रापि प्रतिभासमानस्य रूपस्य कथञ्चिदेव भेदात् प्रमाणमेव स एवायमित्याद्युल्लेखेन प्रथमाना प्रत्यभिज्ञेति, किञ्च–प्रथमं यदर्थविषयं कदाचित्प्रत्यक्षमुदेति तदपि किञ्चिन्मुहूर्त्तादिकालमवतिष्ठमानं स्थिरवस्तुस्वरूपावभास्येवानुभूयते, न प्रतिक्षणभेदावभासीति, तत्र प्रतिक्षणमेकरूपावभासिनि प्रकाशमाने किम-

भिधानीयं ?, न च सादृश्यमात्राद्विभ्रम एवायं, सादृश्यस्योभयनिष्ठत्वात्, भवन्मतेन च क्षणमात्रातिरेकेण न क्वचिदस्य प्रवृत्तिः, तस्माद्यथाऽवभासमेव तत्सत्यमिति युक्तं, किमन्यप्रकारपरिकल्पनया ?, तस्माद्-इन्द्रियाधीनजन्मेयमभेदग्राहिणी मतिः। प्रामाण्यं बाधवैकल्यादश्नुते भेदबुद्धिवत् ॥१॥ इति साधूक्तम्, अत एवोक्तं सूरिभिः-"भेदज्ञानात्प्रतीयन्ते, यथा भेदाः परिस्फुटम्। तथैवाभेदविज्ञानादभेदस्य व्यवस्थितिः ॥१॥ घटमौलिसुवर्णार्थी, नाशोत्पादस्थितिष्वयम्। शोकप्रमोदमाध्यस्थ्यं, जनो याति सहेतुकम् ॥२॥ दुग्धव्रतो न दध्यत्ति, न पयोऽत्ति दधिव्रतः। अगोरसव्रतो नोभे, तस्माद्वस्तुत्रयात्मकम् ॥३॥ नान्वयो भेदरूपत्वान्न भेदोऽन्वयवृत्तितः। मृद्भेदद्वयसंसर्गवृत्तिर्जात्यन्तरं घटः ॥४॥ इत्यादि"॥ इति व्ययाधिकारः ॥ तदेवमुक्तात् न्यायाद् उत्पादव्ययस्वरूपस्थित्यन्यथाऽनुपपत्तेः पर्यायनयवादिभिरन्वयोऽपि तावदभ्युपगन्तव्यः,न चैवमुत्पादविनाशाभ्यामन्वयस्य विरोधः, यतः—

**यदभेदस्य भेदेन, भवनं सोऽयमन्वयः। एकान्तेन न नित्यत्वं, प्रमाणानुपपत्तितः ॥ १८ ॥**

अभेदः-सुवर्णं सुवर्णमित्याद्यनुगताकारप्रत्ययवेद्यं वस्तुनो रूपं, तस्य यत्कटककेयूरादिना भेदेन भवनं परिणामिस्वभावतया सोऽयं प्रत्यक्षादिप्रमाणप्रसिद्धोऽन्वयः, न पुनरेकान्तेन नित्यत्वं, तदयमाशयः-यद्यप्रच्युत्यनुत्पन्नस्थिरैकरूपतालक्षणस्त्वयमभ्युपेतः स्यात् तदाऽयमुत्पादविनाशाभ्यां सह विरुध्येत, यदा त्वभेदस्यैव भेदेन भवनमन्वयस्तदा नोत्पादविनाशाभ्यां सहास्य विरोधः सम्पद्यते, स हि तादृशोऽन्वयस्तदन्तरेणानुपपद्यमानः प्रत्युत तावपेक्षते, न पुनस्ताभ्यां सह विरुध्यते, नन्वभेदस्य भेदेन भवनमित्यत्यन्तसाहसं,

**भेदाभेदसिद्धिः**-तथाहि-अभेदो नामैकस्वभावत्वं, भेदस्तु नानारूपता, तदेतत्परस्परविरुद्धमेकत्र न संगच्छते, ततो यद्ययमभेदस्तदा न कदाचिद्भेदो भवेत्, भावानां स्वभावान्यथात्वाभावात्, अथ भावः स्वस्वभावापरिहारेणैव भेदरूपतामासादयती-

त्यमिदध्याः, नहि शब्दब्रह्माद्या हेतुवादाः कथङ्कारमपाकरणीयाः, द्वैतोपलम्भो ह्यद्वैतप्रतिषेधमावेदयति, द्वैताद्वैतयोः परस्परवि-रुद्धयोरेकस्वभावत्वायोगात्, यदा त्वभेदस्यैव भेदरूपताऽऽपत्तिरिष्यते तदैतत्सकलस्तम्भेभकुम्भाम्भोजभास्कराद्येकस्यैव ब्रह्मणो रूपमित्यपि स्यात्, तन्न किञ्चिदन्वितं रूपं कदाचिद्भेदरूपतां प्रतिपद्यते, यदपि-"घटमौलिसुवर्णार्थी, नाशोत्पादस्थितिष्वयम्। शोकप्रमोदमाध्यस्थ्यं, जनो याति सहेतुकम् ॥१॥" इत्यादिनोत्पादव्ययध्रौव्याणामविरोधं वर्णयन्ति भवत्सूरयस्तदपि न युक्तं, अत्र हि पूर्वावयविनो घटत्वसुवर्णत्वजातियुक्तस्य विनाश एव, तद्विनाशेऽपि जातिरेकाऽपि न विनष्टा, सुवर्णत्ववद् घटस्यापि व्यक्त्यन्तरे प्रत्यभिज्ञानात्, उत्तरं च द्रव्यं घटत्वयुक्तं नोदपादीति तदिच्छोः शोकः, अपूर्वं च द्रव्यं मौलित्वयुक्तमभूत्वाऽभूदिति तल्लिप्सोः प्रमोदः, सुवर्णत्वयोगस्तु पूर्वोत्तरयोरप्यवयविनोरस्तीति तद्रुचेर्माध्यस्थ्यं, यथा केनचिद्वाणिजकसद्मनि द्युम्नं न्यासीचक्रे, तच्चामुना स्वोपयोगि कृत्वा अन्यत्तथाभूतं तस्मै व्यतारि, ततोऽसौ माध्यस्थ्य एव स्थितिं बध्नाति, सुवर्णजातिस्तु तदवयविविनाशेऽप्यवयवेष्वनन्तरभाव्यवयव्यन्तरे चास्तीति सुवर्णप्रत्ययसातत्यादविनष्टाभिमानः, प्रदीपादिवद्वा तत्सदृशनिरन्तरभावात्तदेवेति मन्यमानस्तदर्थी माध्यस्थ्यमवलम्बते, तस्मान्नैकस्य रूपत्रययोगः, त्रयाणामाकाराणामसंसर्गात्, संसर्गे वा घटार्थिनः शोकवत्प्रमोदमाध्यस्थ्ये अपि स्यातां, भेदे सुवर्णं कुण्डलं भवतीत्यादिसामानाधिकरण्यानुपपत्तिरिति चेत्, न, तद्वति सामानाधिकरण्यात्, दण्डकुण्डलादीनां भेदेऽपि तदाश्रये पुंसि दण्डी कुण्डली देवदत्त इत्यादिसामानाधिकरण्यवत्, यदि चामीषामाकाराणामेकवस्तुरूपताऽपि स्यात् तदा घटाकारादिग्रहान्मुकुटाकारादिग्रहोऽपि स्यात्, गृहीतागृहीताकारयोरेकत्वायोगात्, एकत्वे वा अश्वरथयोरपि भेदो न स्यात्, यस्मा-दयमभेदोऽपि यदि स्यात्तदा भेदः कदाचिन्न भवेत्, प्रयोगः-विवादाध्यासितोऽभेदो भेदरूपतां न प्रतिपद्यते, यो यो भेदः

स स भेदरूपतां न प्रतिपद्यते, यथोभयाभिमतो घटस्वभावाद्यभेदः, अभेदश्चायं तस्माद्भेदरूपतां न प्रतिपद्येत, ततो नान्वयस्योत्पादविनाशाभ्यामविरोधः सिद्धिरिति, तदत्र प्रतिविधीयते, तत्र यदुक्तम्–अभेदो नामैकस्वभावता, भेदस्तु नानारूपता, तदेतत् परस्परविरुद्धमेकत्र न सङ्गच्छत इति तत्तावन्न सङ्गतं, यतोऽन्यः खल्वयमभेदो भेदश्च यावन्योऽन्यं विरुध्येते, स्यादभेदस्य तु स्याद्भेदेन भवने को विरोधः?, यत एव ह्ययं भेदो भवत्यप्यत एव स्यादभेदः, भेद एव केवलस्तर्हि किं नासौ? इति चेत् सर्वथा नानात्वाभावात्, प्रमाणाधीना हि प्रमेयव्यवस्थितयः, ततस्तत्र यः सर्वथैकरूपतः प्रकाशतेऽसावभेदो भवति, सर्वथा नानारूपतया तु प्रतिभासमानो भेदः, यस्तु न सर्वथैकरूपः प्रकाशते न च सर्वथैव नानास्वभावः स नाभेद एव न च भेद एव, अपि तु भेदाभेदाख्यं जात्यन्तरमेवेदं, वक्ष्यति च–"नाभेद एव पश्यामः" इत्यादि, ततो यथा भवद्भिः किञ्चित्सामान्यमिष्यते कश्चिद्विशेषः कश्चिच्च द्रव्यत्वादिसामान्यविशेषस्तथाऽन्यत्रापि कश्चिदभेदः कश्चिद्भेदः कश्चिद्भेदाभेद इत्येष्टव्यं, अन्यथा द्रव्यत्वादिसामान्यविशेषो न सिध्येत, यतस्तत्राप्येवं प्रेर्यमवतरति–द्रव्यत्वादि यदि सामान्यरूपं तदा कथं विशेषः?, विशेषश्चेत्सामान्यं कथम्?, अथ द्रव्यत्वादिषु सामान्यशब्दो मुख्योऽनुवृत्तिहेतुत्वस्य सामान्यलक्षणस्य सम्भवात्, विशेषशब्दस्तु भाक्तः, स्वाश्रयो विशिष्यते–सर्वतो व्यवच्छिद्यते येन स विशेष इति लक्षणस्यात्राभावात्, तद् न सङ्गतिक्षमं, यथाऽनुगतप्रत्ययहेतुत्वादिह सामान्यशब्दोऽनुपचरितस्तथा द्रव्या(गुणा)दिभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषशब्दोऽप्यनुपचरित एव स्यात्, यदि तु स्वाश्रयः सर्वतो नानेन व्यवच्छिद्यत इति भाक्तोऽत्र विशेषशब्दस्तर्हि सर्वथाऽनुवृत्तिहेतुत्वस्याप्यभावात्सामान्यशब्दोऽत्र कथमभाक्तो भवेत्?, तन्नानयोरेकत्राप्युपचारो युक्तः, विशेषाभावात्, न चैकान्तेन सामान्यस्वभावत्वे विशेषरूपत्वे वाऽऽत्यन्तिके एकस्य सामान्यविशेषतेति जात्य-

न्तरमेवेदमभ्युपगन्तव्यं, ततो यथैकस्यैवास्य सामान्यविशेषरूपता न विरुध्यते तथा क्वचिद्भेदाभेदरूपतायामप्यविरोधः, तथाहि-य एव परमाणवः शरावरूपतया परिणतास्त एव घटमुकुटाद्याकारेणापि परिणमन्ति, अन्यथा सुवर्णादिप्रत्ययवेद्याद्भास्वरादिस्वभावादूर्द्ध्वाद्याकाररूपं घटावयविद्रव्यं पृथगेवेवावभासेत, न च तत्तदतिरेकिणाऽऽकारेण दण्डादिव काण्डं केनचित्प्रमाणेन प्रतिभासते, अत्रापि च यदि घटाद्यवयवि द्रव्यं ततः सुवर्णादिरन्यदेव तर्हि सुवर्णकारादिः सुवर्णादेः पृथक् किं न करोति ?, नन्वभेदपक्षेऽपि घटनाशे सुवर्णं किं न नश्यति ?, नश्यत्येव, तदात्मना तस्यैव नाशात्, न हि सुवर्णप्रत्ययवेद्ये रूपे सर्वथैकस्वभावतयैव वेद्यमाने ततोऽन्यदेव किञ्चिदाकारान्तरं अतोऽत्यन्तभिन्नमेव क्वचिद्विनाशमाप्नुवदुपलभ्यते, तस्यैव तन्निवृत्त्युपलब्धेः, तर्हि मुकुटोत्पत्तिकाले सुवर्णरूपं कथमुपलभ्यते ?, इति चेत् तस्यैव तदात्मना भवनात्, अनुभवसिद्धिश्चात्र, प्रतिक्षेपाभिमानः परेषां धीजडत्वं व्यसनमात्रं वा, अत एवोक्तम्-"घटमौलिसुवर्णेषु, बुद्धिर्भेदावभासिनी। संविन्निष्ठा हि भावानां, स्थितिः काऽत्र विरुद्धता ?॥१॥"

तथाहि-अन्यत्रापि नीलपीतादिव्यवस्था संवेदननिबन्धनैव तदिहापि संवेदनमेव प्रमाणमिति, शब्दाद्वैतवादनिरासः-अत एव शब्दब्रह्माद्यद्वैतवादा अपाक्रियन्ते, तत्र प्रमाणाभावात्, ननु कथमत्र प्रमाणाभावः ?, अत्रापि शब्दार्थयोस्तादात्म्यमिष्यते, तत एव तत्प्रतीतेः, वृक्षत्वशिंशपात्ववत्, यथा वृक्षत्वप्रतिपत्तिनान्तरीयका शिंशपात्वप्रतिपत्तिरित्यनयोस्तादात्म्यम्, एवं शब्दप्रतिपत्तिनान्तरीयकैवार्थप्रतिपत्तिरित्यनयोरपीदं न्याय्यं, शब्दानुविद्धश्चाखिलोऽर्थावबोध इत्यनुभवः प्राणभृतां, तदभावे बोधानुपपत्तेरिति, आह च शब्दार्थतत्त्ववित्-"वाग्रूपता चेदुत्क्रामेदेवं बोधस्य शाश्वती। न प्रकाशः प्रकाशेत, सा हि प्रत्यवमर्शिनी ॥१॥ न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं, सर्वं शब्देन जायते ॥२॥" इत्यादि, न चालोचनाज्ञानमपि न शब्दा-

नुविद्धं, तथाऽननुभवेऽपि सुप्तादिबोधवत्सूक्ष्मभावोपपत्तेः, ऊर्द्धं तत्स्थूरभावात्, न चासावहेतुकः, सदा तद्भावादिप्रसङ्गात्, न चैवमालोकाद्यनुविद्धो बोध इति तदङ्गत्वेऽपि नार्थतादात्म्यमस्य, न च तदभावेऽपि स्पर्शनेनार्थग्रहस्तथाऽप्रतीतेः, न चैवं शब्दाननुविद्धेन बोधेन तद्ग्रहः, अत एव हेतोरिति शब्दार्थयोस्तादात्म्यसिद्धिः, नीलादेरिव ज्ञाने शब्दप्रतिभासनात्, तर्हि कथं क्षुरिकानलाचलादिशब्दोच्चारणे न वदनपाटनदहनपूरणादय इति?, उच्यते, तद्बोधभावे पाटनादिबोधाभाववत् तदवस्थाभेदहेतुत्वात्पाटनादीनां, बाह्यार्थपक्षेऽपि यत्नतः क्षुरिकादिमुखावेशतदभाववत्तदवस्थाभेदे हेतुत्वमेव पाटनादीनामिति यथोक्तदोषाभावः, एवं शब्दब्रह्मपरिवर्त्तमात्रं जगत्, कथं तर्हि परं ब्रह्म शब्दाविषयः?, यदाह–'अतः परं वाचो निवर्त्तन्ते' इत्यादि, उच्यते, वाच्यवाचकभावप्रपञ्चाभावतो, न शब्दरूपाभावेन, न खलु शब्द इन्द्रियाद्यभावे शब्द इत्यगृह्यमाणः स्वसत्तां जहाति, अतो वाच्यवाचकभावातीतमिदमेव परं ब्रह्मेति न कश्चिद्दोषः, तदेतत्सर्वमनुचितं, तथाहि–यदुक्तं 'तच्छब्दार्थयोस्तादात्म्यमिष्यते' इति, तदेव तावन्न युज्यते, शब्दार्थानुपपत्तेः, तथाहि–शब्दार्थयोस्तादात्म्यमिति कोऽर्थः?, यदि तदात्मनोर्भावस्तादात्म्यं, एवं तर्हि तौ द्वावपीष्टावेव पृथग्भावाभिधानात् नानयोरैक्यमिति, नैवं शब्दब्रह्म परिवर्त्तमानं जगदित्यैदंपर्यविरोधः, विजातीयपरिवर्त्तयोगात्, इन्द्रियगम्येषु तथाऽदर्शनात्, नहि मृदम्भोरूपेण परिवर्त्तते तदा तद्रूपेण, सकललोकसिद्धमेतत्, अस्यान्यथात्वाभ्युपगमे प्रतीतिबाधा, द्रव्यवर्गणानामौदारिकवैक्रियादिविजातीयपरिवर्त्तस्त्वसन्मते देशादिभेदनिबन्धनः, निरवयवं च शब्दब्रह्म सावयवत्वे चास्यापरनाम्ना धर्मास्तिकायाद्यभ्युपगम एवेति न काचिन्नो बाधा, अथ तदात्मनो भावस्तादात्म्यमित्येकवचनं तदत्रापि वक्तव्यं, कस्यायमात्मा यदात्मनो भाव इत्यभिधीयते यदि शब्दस्य तदा तद्व्यतिरेकिणोऽर्थस्याभावात् सर्वस्य शब्दमात्रत्वात् शब्दार्थयोस्तादात्म्यतिति न न्याय-

सङ्गतं, नहि देवदत्तवन्ध्यासुतयोस्तादात्म्यमित्यभिदधति विद्वांसः, न च देवदत्तोपलब्धौ तद्भेदेन वन्ध्यासुतप्रतीतिश्चिन्ता वा तद्भेदादिगोचरा, अस्ति च शब्दोपलब्धौ तद्भेदेन तत्प्रतीतिश्चिन्ता वा तद्भेदादिगोचरेत्येतदुभयं अर्थे, न चैतच्छब्दगोचरमेव, तद्भेदस्य तत्प्रतिभाससंवेदनेनावेदनात्, नहि चन्दनशकलं कुङ्कुममिति वेद्यते, शब्दाद्भिन्नप्रतिभासितया घटादिः, बधिरोऽपि हि वाहीकः पश्यति पनसमिति सुप्रतीतं, शब्दानुगतबोधसिद्धावपि न बोधाभिन्नदेशेऽर्थ इति कुतः शब्दार्थयोस्तादात्म्यं ?, यच्चोक्तं–'तत एव तत्प्रतीतेः, वृक्षत्वशिंशपात्ववदित्यादि' तदप्ययुक्तम्, अत्रापि धर्मभेदनिबन्धनत्वादस्य, वृक्षत्वशिंशपात्वे हि विशिष्टौ वस्तुधर्मौ कथञ्चिद्भेदाभेदवृत्ती, नान्यथाऽनयोस्तादात्म्यं, तथाहि–यदि वृक्षत्वमेव शिंशपात्वमिति निम्बाद्यभावप्रसङ्गः, तत्र वृक्षत्वस्य विद्यमानत्वात्तस्य चाशिंशपात्वादिति, अथ विशिष्टं वृक्षत्वमेतत्, किमस्य विशेषणमिति चिन्त्यं, ननु शिंशपात्वमेव कथञ्चिदन्यत्तर्हि तत्ततः, अन्यथा पूर्वोक्तदोषानिवृत्तिः, अवृक्षव्यावृत्तिनिबन्धनमेतदशिंशपाव्यावृत्त्या विशिष्यत इति चेत्, अतस्त्वेनुदे(स्त्वेतद्, ए-) वमप्यस्मदभ्युपगमसिद्धिरेव, अशिंशपाव्यावृत्तिरहितस्यापि वृक्षत्वस्य धवादिषु भावात्, शब्दान्तरवाच्ययोर्विशिष्टयोर्धर्मयोरेव तादात्म्यमित्यस्मदभ्युपगमसिद्धिः, परिकल्पितत्वं च व्यावृत्तीनां प्रागिरस्तमेवेति न पुनः प्रतन्यते, एवं च वृक्षत्वप्रतिपत्तिनान्तरीयका शिंशपात्वप्रतिपत्तिरित्यनयोस्तादात्म्यमिति सुन्दरमेव, कथञ्चित्तदुत्पत्तेः, अन्यथाऽयोगादित्युक्तप्रायम्, एवं शब्दप्रतिपत्तिनान्तरीयिकैवार्थप्रतिपत्तिरित्यनयोरपीदं न्याय्यमिति त्वसुन्दरम्, अर्थस्य बोधभिन्नदेशतोपपत्तेः तथाऽनुभवसिद्धत्वात्, तदुपलब्धावपि तदर्थं प्रवृत्तिसिद्धेः, अभेदपक्षे हि नार्थो बोधवद्भिन्नदेश इति कथं कस्यचित्प्रवृत्तिः स्यात् ?, भ्रान्तिमात्रमेतदर्थस्य बोधाद्भिन्नदेशतादि तत्त्वत इति चेत् किमत्र प्रमाणं ?; तयोरेव तादात्म्यमिति चेत् तदिदमसिद्धमसिद्धेन साध्यत इति यत्किञ्चिदेतत्, देशभेदेन

तद्भेद एव प्रतीयत इति चेत्, न, तस्यापि देशभेदस्य शब्दात्मकार्थभेदत्वेन भेदकत्वायोगात्, न ह्यविशिष्टमम्भस्तदन्यस्य भेदकं भवति, न च कथञ्चिद्भिन्नं विशेषणमन्तरेण विशिष्टता, स्वरूपवैशिष्ट्यस्याप्यन्यतो देशभेदादिना विनाऽयोगात्, एवं च शब्दानुविद्धश्चाखिलोऽर्थावबोध इत्यनुभवः सर्वप्राणभृतां, तदभावे बोधानुपपत्तेरिति, देवदत्तकान्तेतररूपचिन्तायामनाभोगवद्भोजनमात्रकथनमेतत्, सत्यप्यस्मिन्निष्टार्थासिद्धेः, तथाहि—यदि नाम बोधः शब्दानुविद्धस्तदा शब्दार्थयोस्तादात्म्यमिति काऽत्रोपपत्तिः ?, अन्यच्च—बोधशब्दयोरपि तादात्म्यमतात्म्यं वा स्यात्, न चातादात्म्ये शब्दस्यापि बोधमात्रतापत्तिरिति तन्मात्रवादसिद्धिः, बोधस्य वाऽचेतनत्वं शब्दात्मकत्वेन, तथा चानुभवविरोधः, चेतनाचेतनत्वे च शब्दात्मनो नामकरणं जगद्वैचित्र्यस्य, एतेन यदुक्तम्—"आह च शब्दार्थतत्त्ववित्—वाग्रूपता चेदुत्क्रामेदित्यादि कारिकाद्वयम्।" तदपि प्रत्युक्तं, तुल्ययोगक्षेमत्वात्, आह च वादिमुख्यः—"बोधात्मता चेच्छब्दस्य, न स्यादन्यत्र तच्छ्रुतिः। यद्बोद्धारं परित्यज्य, न बोधोऽन्यत्र गच्छति ॥१॥ न च स्यात्प्रत्ययो लोके, यः श्रोत्रा न प्रतीयते। शब्दाभेदेन सत्येवं, सर्वः स्यात्पर(मार्थ)वित् ॥२॥" इत्यादि। यच्चोक्तं—"न चालोचनाज्ञानमपि न शब्दानुविद्धं, तथाऽननुभवेऽपि सुप्तादिबोधवत्तत्सूक्ष्मभावोपपत्तेः, ऊर्ध्वं तत्स्थूरभावात्।" इत्यादि, तदपि न नो बाधायै, तत्तदनुबोधेऽप्युक्तवच्छब्दार्थयोस्तादात्म्यायोगात्, न च सुप्तादिबोधः सूक्ष्मः सन्नन्यूनातिरिक्ततद्भाव ऊर्ध्वं स्थिरो भवति, एकान्तेनैकस्य तदन्यप्रतिबन्धकाभावेऽवस्थाभेदानुपपत्तेः, प्रतिबन्धकभावे च तत्कृतश्चैतन्यक्रियानिषेधः, तदभावे च तत्क्रियेति न सूक्ष्मस्य स्थूरभावः, उपचयकर्तृदलाभावादिति, एवं च सति 'न चासावहेतुकः, सदा तद्भावादिप्रसङ्गादि'त्यप्यनालोचिताभिधानम्, उपादानहेतोस्तद्वृद्धिकर्तुरसत्त्वात्, तदितरस्य च तद्भेदत्वेन प्रकृतानुपयोगित्वात्, न ह्युपादानहेतोरितरो हेतुः सन्नप्युपादानाद्भिन्नस्तद्भावमभजन् प्रकृतेः

क्वचिदुपयुज्यते, स ह्युपादानदलस्योपचयकर्त्तुरुपष्टम्भको युक्तः, निरंशे चान्यूनातिरिक्ते वस्तुतत्त्वे किमुपादानदलमुपचयकारि येनायं तदतिरिक्तः स्थूरत्वं प्रत्युपयुज्येत ?, किं वाऽऽलोचनाज्ञानगतः सूक्ष्मः शब्दः, किं बोधात्मकः ? उत तदतिरिक्तशब्दात्मकः ?, यदि बोधात्मकः कथमुच्यते न चालोचनाज्ञानमपि न शब्दानुविद्धं, तज्ज्ञानमात्रत्वेन शब्दार्थानुपपत्तेः, आत्मनाऽऽत्मानुवेधाभिधानस्येत्थमयुक्तत्वात्, अथ तदतिरिक्तशब्दात्मकः कथं तेन तदनुवेधः ?, अर्थेनास्य तादात्म्याभ्युपगमात् अर्थसूक्ष्मभावोपपत्तेः, अलौकिकं चैतत्, यदुत सूक्ष्मावला(लोका)द्यनुविद्धमालोचनाज्ञानमिति, एवं च 'न चैवमालोकाद्यनुविद्धो बोध इति, तदङ्गत्वेऽपि नार्थतादात्म्यमस्य, न च तदभावेऽपि स्पर्शनेनार्थग्रहः, तथाऽप्रतीतेः, न चैवं शब्दाननुविद्धेन बोधेन तद्ग्रहस्तत एव हेतोरिति शब्दार्थयोस्तादात्म्यसिद्धिः, नीलादेरिव ज्ञानशब्दप्रतिभासनादि' त्याद्यप्युपन्यासमात्रफलमेव अभीष्टफलविकलत्वात्, अत्र हि बोधार्थयोस्तादात्म्यप्रतिषेधः बोधमात्रेण चार्थाग्रहः चाक्षुषस्य स्पर्शनेन ग्रह इत्यैदंपर्यमेव, तच्च सर्वमपि सूक्ष्मेक्षिकया निरूप्यमाणं न भवेदित्यैदंपर्याविरोधि, तथाहि–यदि शब्दार्थयोस्तादात्म्यं तदाऽऽलोकस्याप्यर्थत्वेन शब्दात्मकत्वात्, 'न चैवमालोकाद्यनुविद्धो बोध इत्यनिरूपिताभिधानं, शब्दस्यैव तत्त्वादिति,असदेतत् यदुत नार्थतादात्म्यमस्य,शब्दतादात्म्यादेतत्सिद्धेरिति भावनीयं,न च बोधमात्रेणार्थाग्रहस्तन्मात्रस्यावग्रहेण ग्रहणात्, न च चाक्षुषार्थस्य स्पर्शनेन ग्रहः इन्द्रियार्थप्रतिनियमानुपपत्तेः अन्धाद्यभावप्रसङ्गादिति, तथा नीलादेरिव ज्ञाने शब्दप्रतिभासनादित्यनेनार्थस्य बोधाद्भेद उक्तस्ततस्तदात्मकः शब्दः कथं बोधाभिधो भवेत् ? इत्यलमसद्वादनिरूपणाभरेण ॥ यच्चोक्तं "कथं तर्हि क्षुरिकानलाचलादिशब्दोच्चारणे न वदनपाटनदहनपूरणादय इति, उच्यते तद्बोधभावेऽपि पाटनादिबोधाभाववत् तदवस्थाभेदहेतुत्वात्पाटनादीना" मित्यादि तदप्ययुक्तं, जैनमतापरिज्ञानात्, न खलु बौद्धविशेषयोगाचारमतमिव ज्ञान-

मात्रं तत्त्वमिति जैनं मतम्, अपि तु बाह्यार्थाभ्युपगमरूपमपि, ततश्चानभ्युपगतदोषाख्यानमात्रमेतदिति । ननु बाह्यार्थपक्षेऽपि यत्नतः क्षुरिकादिमुखावेशतदभाववत्तदवस्थाभेदस्योपपत्तेः, तद्व्यतिरिक्तभेदकभावात्, तथाहि–पुरुषप्रयत्नादयस्तद्भेदका इति न्याय्यः क्षुरिकादीनामवस्थाभेदः, शब्दब्रह्ममात्रतत्त्ववादिनस्त्वस्या भेदकाभावेन वैचित्र्यानुपपत्तेः, निरवयवैकस्वभावत्वाभ्युपगमात्, तत्तत्स्वभावत्वकल्पनाऽसिद्धेः, तत्स्वभावस्य तद्ब्रह्ममात्रत्वात्, तस्य च तथाऽविचित्रत्वात्, विचित्रत्वे च जगद्वैश्वरूप्यस्यैव तन्नामकरणात्, न तद्व्यतिरिक्तभेदकभाव इति तदवस्थाभेदानुपपत्तेर्यत्किञ्चिदेतत्, एवं शब्दब्रह्मपरिवर्त्तमात्रं जगदिति प्रलापमात्रं ।

**वाच्यवाचकभावसिद्धिः**–यच्चोक्तं–'कथं तर्हि परब्रह्म शब्दाविषयो, यदाह–अतः परं वाचो निवर्त्तन्त इत्याशङ्क्य वाच्यवाचकभावप्रपञ्चाभावतो न शब्दरूपाभावेन' इत्यादि, तदप्ययुक्तमेव, वाच्यवाचकभावप्रपञ्चरहितस्य शब्दरूपस्यानुपपत्तेः, स्ववचनविरोधात्, तथाहि–वाच्यवाचकभावप्रपञ्चरहितं च शब्दरूपं चेति व्याहतमेतत्, न हि सद्रूपरहितं सत्त्वं नाम, अन्यच्च–अतः परं वाचो निवर्त्तन्त इतीयमपि वागेव, इयं चेत्तत्र प्रवर्त्तते कथं वाच्यवाचकभावप्रपञ्चाभावः ?, न चैतत्प्रवर्त्तेत इति कथमपरवाचां निवृत्तिः ?, एवं च 'न खलु शब्द इन्द्रियाद्यभावे शब्द इत्यगृह्यमाणः स्वसत्तां जहाति, अतो वाच्यवाचकभावातीतमिदमेव परं ब्रह्मे'-त्यपि व्युदस्तं, ततश्च किमुच्यते–न कश्चिद्दोष इति ?, ननु दोष एव केवलः, तथाहि–यद्यपि शब्देन्द्रियाभावे शब्द इति न गृह्यते तथाऽपि नासौ स्वभावसत्तां जहाति, तद्योग्यतोपपत्तेः, तद्रहितस्य स्वसत्ताऽयोगात्, तथाहि–इन्द्रियेण न गृह्यते तद्ग्रहणयोग्यताविकलश्च कथमसौ शब्दो इन्द्रियं नामेति चिन्त्यं ?। किंच–तत्सङ्कल्पनानिबन्धनभूता तत्र शक्तिः स्याद्वा न वा ?, यद्यस्ति तर्हीत्थं कल्पनागतशब्दवाच्याऽसाविति कथं वाच्यवाचकभावातीतार्थसाधनायोदाह्रियते ?, अथ नास्ति कथं तच्छून्य एवेत्थं कल्पनाशब्दः

प्रवर्त्तते ?, प्रवृत्तौ वा कथं शब्दार्थयोस्तादात्म्यं ?, विनाऽर्थेनास्य प्रवृत्तेरित्यलं प्रसङ्गेन ।



स्फोटस्फोटनं–किञ्च–कः पुनरयं शब्दो यस्यार्थेन तादात्म्यमिष्यते ?, किमत्रोच्यते, यतः साक्षादिमदर्थप्रतिपत्तिरिति, आह च भाष्यकारः–"येनोच्चरितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः,वर्णेभ्यस्तत्संप्रत्ययानुपपत्तेः, एकाकारो ह्ययं नानेकेभ्यो वर्णेभ्यो भवितुमर्हति, अनेकेभ्यो वर्णेभ्योऽनेकप्रत्ययभावात्, अयं च स्फोटरूप एक एवेति युक्तोऽस्माद् यथोक्तः संप्रत्ययः, आह–कुतोऽयमुत्पद्यते ?, नन्वयं नित्यः सर्वगतो नोत्पद्यत एव, आह–किमित्यतो न सर्वदा सर्वत्र संप्रत्ययः ?, हन्ताभिव्यञ्जकाभावेन, अभिव्यञ्जका ध्वनयः, ते च पुरुषप्रयत्नसापेक्षा इति न सदा संप्रत्ययः, आह–स किमनेकध्वनिव्यङ्ग्यः ? उतैकध्वनिव्यङ्ग्योऽपि ?, अनेकध्वनिव्यङ्ग्यत्वे सदेशताऽनभिव्यक्त्यादि, एकध्वनिव्यङ्ग्यत्वे तु शेषवैयर्थ्यं, एकाभिव्यङ्ग्यादेव, ततस्तत्संप्रत्ययसिद्धेः, यत्किञ्चिदेतत्, निरवयवत्वेन सदेशताऽयोगात्, एकध्वनिव्यङ्ग्यत्वेऽपि च सकृच्छ्रुतानुवादकवदनेकव्यक्तिग्रहणोपपत्तेः, ध्वनिसंस्कृतं चैन्द्रियं स्फोटं गृह्णातीति न सर्वत्र तत्संप्रत्यय"इति, अत्रोच्यते–सर्वमिदमयुक्तमनालोचिताभिधानात्, तत्र यत्तावदुक्तं 'यतः साक्षादिमदर्थप्रतिपत्तिरित्याह च भाष्यकारः–येनोच्चरितेने'त्यादि, अत्र किमिदमुच्चारणं नाम ?, नन्वभिव्यक्तिरिति, किमुक्तं भवति ?–येनोच्चरितेन–येनाभिव्यक्तेनेति, हन्तालौकिकः शब्दार्थः, का चेयमभिव्यक्तिः ?, इन्द्रियग्राह्यस्वभावता, किं नेयमस्य स्वतत्त्वं ?, न न, किन्त्वावृतेति, किमस्यावरणं ?, श्रोत्रियाऽविद्या, कुतस्तदपगमः ?, वक्तृध्वनेः, किमत्र मानं ?, स्फोटोपलब्धिः, किं न सदेयं ?, भूयो विघातः, कुतोऽसौ द्रागेव ?, तम इव प्रदीपाभावे ध्वन्यभावतः, किं स्फोटस्याविद्याभावाभावयोरस्ति कश्चित्स्वभावभेदः किं वा न ?, यद्यस्ति अनित्यता स्वाभावान्तरोपमर्देन स्वभावान्तरोपपत्तेः, इष्यत एवमीदृशीति चेत् नित्य-

प्रतिज्ञाव्याघातः, परिणामवादापत्तेः, अथ नास्ति सदा ग्रहणादिप्रसङ्गः, तद्ग्राह्यताद्येकस्वभावत्वान्यथानुपपत्तेः, अविद्याऽभावे ग्राह्यैकस्वभाव एवायमित्यप्यसत्, सदा तद्भावेन तद्ग्रहणप्रसङ्गादित्यतिसूक्ष्ममतिविषयमेतत्। किञ्च–'येनोच्चरितेने'त्यत्र वर्णात्मकेन शब्देनोच्चरितेन यथाक्षयोपशममसौ प्रत्ययो भवति, तथाऽनुभूतेः, गकारादिदलगोशब्दसंवेदनात्, तद्व्यतिरिक्तस्य चापरस्याक्रमवत एकस्यासंवेदनात्, तथाहि–गौरिति गकारौकारविसर्जनीयवर्णप्रतिभास्येव तत्संप्रत्ययः, कथमयमुच्चरितध्वंसिभ्य एतेभ्यः?, तथेतरेतरप्रतिबद्धस्वभावतयाऽऽत्मनि बोधकरणेन, न च क्रमभाविनां तथा बोधकरणविरोधः, तस्यापि क्रमेणैव तथाभावात्, अर्द्धोच्चारितविरामेऽभावात्, ध्वनेश्चैकत्वाभ्युपगमेनार्द्धोच्चारितत्वासम्भवः, तदनेकत्वेऽपि स्फोटैकत्वतोऽर्द्धाभिव्यक्त्ययोग इति भावनीयं, एवं च 'वर्णेभ्यस्तत्संप्रत्ययानुपपत्ते'रित्ययुक्तं, उक्तवत् उपपत्त्ययोगात्, नैकाकार एवायं, किं न ह्येकाकारः?, अनेकाकारगकारादिवर्णात्मकगोशब्दवेदनात्, तथा दीर्घकालेनैव तत्तद्वर्णजबोधान्वयाविरोधादित्यतः किमुच्यते 'नानेकेभ्यो भवितुमर्हति' तथाऽनेकात्मकस्यान्यथाभवनायोगात्, एवं चानेकेभ्योऽनेकप्रत्ययभावादित्यपि वचनमात्रं, तेषां तथाप्रतिबद्धस्वभावतयैकान्ततोऽनेकत्वासिद्धेः, तदितराक्षेपस्वभाववन्तो ह्यमी एकानेकरूपास्तथैव प्रतिभासन्त इति न कश्चिद्दोषः। यच्चोक्तम्–'अयं च स्फोटरूप एक एवेति युक्तोऽस्माद् यथोदितसंप्रत्यय' इत्येतदप्यचारु, एकस्यासंवेदनादित्यप्युक्तप्रायं, यच्चोक्तं 'आह–कुतोऽयमुत्पद्यते ? इत्याशङ्क्य नन्वयं नित्यः सर्वगतो नोत्पद्यत एवेत्ये'तदप्ययुक्तं, नित्यसर्वगतत्वेऽस्य प्रमाणाभावात्, नित्यस्य सर्वथैकस्वभावत्वेन प्रमाणपरिच्छेद्यस्वभावत्वे सर्वदा सर्वपरिच्छेदापत्तेः, अन्यथा नित्यत्वायोगात्, कादाचित्केन चिद्ग्रहे तद्ग्राह्यस्वभावत्वात् तदन्यग्राह्यस्वभावत्वाभावात्, भावे वा कदाचित्केनचिद्ग्रहणवत्तदन्यग्रहणापत्तेः, अभावे चान्यदा तद्भावात् तत्तथाभवनेन परिणामवादापत्तेः। एतेन यदप्याह

'किमित्यतो न सर्वदा सर्वत्र तत्संप्रत्यय ? ' इत्याशङ्क्योक्तं हन्ताभिव्यञ्जकाभावेन, अभिव्यञ्जकाश्चास्य ध्वनयः, ते च पुरुषप्रयत्नसापेक्षा इति न सदा तत्संप्रत्यय' इत्येतदप्ययुक्तं, अभिव्यक्तेरेवोक्तयुक्तेरसिद्धेः, ध्वनयश्च वर्णात्मका एव तद्व्यतिरेकेण तत्स्वरूपासिद्धिः, कलकले तन्मात्रग्रहणात्तत्सिद्धिः, वर्णास्तु स्फोटप्रस्वेदसंस्थानीया इति चेत् न, अविचारितरमणीयत्वात्, कलकला हि तत्समुदायधर्मः तद्भावभावित्वात्, तत्समानपरिणाममात्ररूपो ह्ययं, अत एव श्रोत्रेण गृह्यते, अन्यथा अशब्दत्वात् कथमस्य श्रोत्रेण ग्रह इति चिन्त्यं, स्फोटप्रस्वेदसंस्थानीयत्वे वर्णानां तदनित्यतापत्तिः, तदात्मभूतप्रस्वेदगलत्वात्, एतेन 'स किमनेकध्वनिव्यङ्ग्य उतैकध्वनिव्यङ्ग्यः ? इत्याशङ्क्य यदुक्तं यत्किञ्चिदेतत् निरवयवत्वेन सदेशताऽयोगादि'त्यादि, तदपि वस्तुतः परिहृतमेव, परिहृतेन तुल्ययोगक्षेमत्वात्, नवरं ध्वनिसंस्कृतं चैन्द्रियं स्फोटं गृह्णातीति न सर्वत्र तत्संप्रत्यय इति यदुक्तमत्रोच्यते–अथ कोऽयं ध्वनिनेन्द्रियसंस्कारः ?, अविद्यापनयनं, किं न यथास्थितं स्फोटं गृह्णाति ?, हन्त गृह्णात्येव, कथं न तद्व्यापित्वादिग्रहः ?, संस्कारप्रतिनियमाद् नेति, निरवयवत्वाद्यस्य केन हेतुना ?, न तस्यान्यथाग्रहः ? इतिकृत्वा, न हि शुक्लः पीत इति गृह्यतेऽभ्रान्तेनेति, तस्माद्वर्णात्मक एव शब्दश्चित्रस्वभावत्वात्तथा श्रोत्रद्वारेण छद्मस्थेन गृह्यते, योगिना कार्त्स्न्येनेति कृतं प्रसङ्गेन, तदेवं शब्दाद्यद्वैतवादिभिः शब्दब्रह्मादि यथेष्यते तथा तन्न केनचित्प्रमाणेन प्रतीयते, तदभिमतप्रमाणस्य प्रदर्शितन्यायेन प्रमाणाभासत्वात्, यथा तु प्रमाणेन तत्स्वरूपमधिगम्यते प्रमाणवद्भिस्तथा तदिष्यत एवेति शब्दब्रह्माद्वैतवादाः कथंकारमपाकरणीया इत्यादि यदुक्तं तदयुक्तमिति स्थितं।

**अवयव्यवयवभेदाभेदः**–यत्पुनः 'घटमौलिसुवर्णार्थी'त्याशङ्क्याभिहितं, अत्र हि पूर्वावयविनो घटत्वसुवर्णत्वजातियुक्तस्य नाश एव, तद्विनाशेऽपि जातिरेकाऽपि न विनष्टा, सुवर्णवद् घटत्वस्यापि व्यक्त्यन्तरे प्रत्यभिज्ञानात्, उत्तरं च द्रव्यं घटत्वयुक्तं

नोदपादीति तदिच्छोः शोकः, अपूर्वं च द्रव्यं मौलित्वयुक्तमभूत्वाऽभूदिति तल्लिप्सोः प्रमोदः, सुवर्णत्वयोगस्तु पूर्वोत्तरयोरप्यवयविनोरस्तीति तद्रुचेर्माध्यस्थ्य'मित्यादि तन्न साधीयः, यतोऽवयवावयविनोः किमभेदः ? किं वा भेदः ?, यद्यभेदस्तदाऽवयविमात्रमवयवमात्रं वा स्याद्, इतरेतराव्यतिरेकादितरेतरस्वरूपवत्, अथ भेदस्तदपि न चारु, न ह्ययमवयवेभ्योऽत्यन्तभेदेन क्वचिदुपलभ्यते, प्रतिक्षिप्तश्चायमेकान्तव्यतिरिक्तोऽधस्तात्, समर्थितश्च कथञ्चिद्भिन्न इति, तस्मात्त एवावयवास्तथा परिणमन्तः कदाचिद् घटाद्यवयविरूपतां प्रतिपद्यन्ते कदाचिन्मुकुटाद्यवयविरूपताम्, एतावदेव प्रमाणव्यापारसमधिगम्यमितीयदेव न्याय्यं, तथा च पूर्वावयविनः सर्वात्मना न नाशो, न चोत्तरस्यात्यन्तमसत उत्पादः, तदवयवानामेव तथाभावोपलम्भात्, न च काचिद् घटत्वसुवर्णत्वादिजातिर्व्यक्तिव्यतिरेकिणी समस्तीति प्रतिपादितं प्राक्॥

**सामान्यसिद्धिः**—याऽपि सर्ववस्तुषु बुद्धिः स्वव्यावृत्त्यनुगमात्मिका जायते तद्द्वयात्मकत्वेन विना सा च न युज्यते, न चात्रान्यतरा भ्रान्तिरुपचारेण वेष्यते, दृढत्वात्, सर्वदा बुद्धिभ्रान्तिवादिनामित्यादि परिभावयतां सामान्यपरिकल्पनाभिमानः सोऽपि न युक्तः, यतः सामान्यं यदि व्यक्तिभ्यो भिन्नं तदा कथं द्व्यात्मकत्वं वस्तुनः ?, न चेयमुभयाकारा बुद्धिरेतदाकारद्वयमन्योऽन्यव्यतिरेकवदेवावभासयतां प्रतीयते, किन्तु तदेव वस्तु वस्त्वन्तरेण सह समानाकारमेव प्रकाशयन्ती प्रथत इति, न हि तावदिन्द्रियबुद्धौ स्फुटनीलाद्याभासायामपरः कश्चिदस्फुटो(स्ति सामान्याकारः) तद्भावेऽपि व्यक्ति द्वया(द्वया)धा(रा)न्तरालमव्याप्नुवतः कथं तदनुगमः ?, व्याप्तौ वोपलभ्यस्य सततस्तत्रानुपलक्षणं कुतः ?, न हि तस्या व्यक्ताव्यक्तरूपसम्भवः एकत्वात्, उक्तश्च—"व्यक्तौ चैकत्र सा व्यक्ता, भेदात्सर्वत्रगा यदि। जातिर्दृश्येत सर्वत्र, नहि सा व्यक्त्यपेक्षिणी ॥१॥" एकत्रापि च व्यक्तावुपल-

भ्यमानायाः सकलत्रैलोक्यव्यापि रूपं सकलस्वाश्रयव्यापि वा दृश्येत, न ह्येकस्यापि किञ्चिद्दृष्टमदृष्टं चेति विरोधभीरुभिर्भवद्भिर्विरोधपरिहारौ प्रायमपश्यद्भिर्व्यवस्थापयितुं शक्यं, ततः सर्वगतरूपदर्शने सर्वार्थानां दर्शनप्रसङ्गः, नहि तद्दर्शने तत्सहचारिण उपलभ्यस्य तदभिन्नस्वभावस्यानुपलम्भो युक्तः, तन्नेन्द्रियबुद्धिरुभयाकाराऽनुभूयते यथा परैरिष्यते, नाप्यनुमानादिबुद्धिः, यतः तत्रापि न व्यक्तिव्यतिरिक्तं किञ्चित्सामान्यं प्रतीयते, किन्तु ता एव व्यक्तयः तत्राप्यस्पष्टरूपतया प्रतीयन्ते, अत एवोक्तं–"द्रव्यपर्यायसामान्यविशेषास्तस्य गोचराः। अविस्पष्टास्त एव स्युरनध्यक्षस्य गोचराः ॥१॥" अथाविस्पष्टप्रतिभासानुमानादिबुद्धिः सामान्यविषयेष्यते तर्हि व्यक्तिविषयत्वमस्या न सिध्यति, नीलादेः स्पष्टरूपस्यापरस्यास्यामप्रतिभासनात्, यदि चास्पष्टप्रतिभासानुमाना बुद्धिः सामान्यावभासिनीत्यभिधीयते तदाऽनुमानादेर्न कश्चिद्वर्त्तेत, सामान्यस्यार्थक्रियाकारित्वविरहात्, अथ कामर्थक्रियां सामान्यं न करोति ?, यद्यन्यसाध्यां तदाऽन्योऽप्यर्थक्रियाकारी न स्यात्, नहि नीलमपि पीतसाध्यामर्थक्रियां करोति, अथ स्वसाध्यां तदाऽभिन्नज्ञानाभिधानलक्षणां करोत्येव, कथमर्थक्रियाशून्यं सामान्यमिति, यद्येवं सुतरां न प्रवर्त्तेत, तत्प्रतीतिकाल एव तदर्थक्रियायाः सिद्धत्वात्, न चैकान्तनित्यस्य सामान्यस्य स्वविषयज्ञानोत्पत्तावपि सामर्थ्यमस्तीति, अथ सामान्यं प्रतीयमानं विशेषेषु प्रवर्त्तयति, तदसत्, न ह्यन्यस्मिन् प्रतीयमानेऽन्यत्र प्रवृत्तियुक्ता अतिप्रसङ्गात्, सम्बन्धात्प्रवृत्तिरिति चेत् नैतदस्ति, न ह्येकभ्रातृप्रतीतौ द्वितीयेऽपि प्रतिपत्तिर्दृश्यते, अथ सामान्यं विशेषैर्विना न संभवति तेन तेषु प्रवर्त्तयति, ननु सामान्यं किमविशिष्टं प्रतीयमानं विशेषेषु प्रवर्त्तयति किं वा विशिष्टमिति ?, यद्यविशिष्टं तदा धूमात्सामान्यं प्रतीयमानं विशेषमन्तरेणानुपपद्यमानं सलिलादावपि प्रवर्त्तयति, न च प्रवर्त्तयति, अथ विशिष्टं तदा वैशिष्ट्यं वक्तव्यं, किं तत्र समवायः किं वा तस्येदमिति प्रतीतिः ?,न तावत् समवायस्तस्य निराक-

रिष्यमाणत्वात्, साधारणस्य च समवायस्य न विशेषकारित्वं, द्वितीये तु पक्षे इतरेतराश्रयत्वं, तथाहि–विशिष्टसामान्यप्रतीतौ विशेषप्रतीतिः, तत्प्रतीतौ च विशिष्टसामान्यप्रतीतिरिति, किश्च–तस्येदमिति प्रतीतावपि नियतदेशविशेषाप्रतीतौ नानुमानादिः प्रवर्त्तेत, व्याप्तिग्रहणकाले च वह्न्यादिसामान्यस्य सिद्धत्वाद् गृहीतग्राहित्वेन चानुमानस्य प्रामाण्यं न स्यात्, विशेषाः सामान्येन प्रतीयंत इति चेत् सामान्येनेति कोऽर्थः?, किं सामान्यमेव सामान्यं प्रतीत्य प्रतीयते? किं वा विशेषः?, यदि सामान्यं तदा तेनापि पुनरन्यत् सामान्यं ततोऽप्यन्यदित्यनवस्था, विशेषपक्षे तूक्त एव दोषः, अथ नास्ति लक्षणा, किन्तु युगपदुभयं प्रतीयते, नैतदस्ति, उभयाप्रतीतेः, न ह्येकं दण्डायमानं सामान्यं परो विशेषस्तत्र लक्ष्यते, उक्तश्च–"दोहिवि नएहिं नीयं सत्थमुलूएण तहवि मिच्छत्तं। जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा ॥१॥" तन्नास्पष्टप्रतिभासा अनुमानादिबुद्धिः सामान्यावभासिनी, अपि तु व्यक्त्यवभासिनी, तासामेव व्यक्तीनां तथाक्षयोपशमवशेन तथाप्रतिभासनात्, एवं हि सदृशाकारपरिणतिः सामान्यं, 'सदृशः परिणामो यत्तत्सामान्य'मिति वचनात्, इह हि भावानां सदृशपरिणतिः सामान्यं, समान एव सामान्यमिति न्यायात्, अन्यथा स्वरूपसामान्यमन्तरेणान्यसामान्ययोगेऽपि समानरूपताऽऽकाशस्यैव सोपपद्यते, यदि चासमानामपि सामान्ययोगात् समानरूपता भवति किं न महिषाश्वयोः?, पराभ्युपगतस्य सामान्यस्य तत्रापि भावात्, विजातीयत्वान्नेति चेत् इतरेतराश्रयत्वं, विजातीयत्वे सामान्यायोगः, सामान्यायोगे च विजातीयत्वमिति, अपिच–सामान्येनासमानानां यदि समानरूपता जन्यते तदा स्वकारणादेव सा युक्ता, किमन्यतस्तत्कल्पनया?, तस्माद्वस्तुस्वरूपमेव समानपरिणामं सामान्यम्, अत एव–"सामान्यं नान्यदिष्टं चेत्, तस्य वृत्तेर्नियामकम्। गोत्वेनापि विना कस्माद्गोबुद्धिर्न नियम्यते ॥१॥ अथातुल्येऽपि भिन्नत्वे, केषुचिद्वृत्त्यवृत्तिता। गोत्वा-

देरनिमित्ताऽपि, तथा बुद्धिर्भविष्यति॥२॥" इति पूर्वपक्षयित्वा–"विषयेण हि बुद्धीनां,विना नोत्पत्तिरिष्यते । विशेषादन्यदिच्छन्ति, सामान्यं तेन तद्ध्रुवम् ॥१॥ ता हि तेन विनोत्पन्ना,मिथ्या स्युर्विषयादृते । न त्वन्येन विना वृत्तिः, सामान्यस्येह दुष्यति ॥२॥" इति यदुक्तं तदपि नात्मनो बाधाविधायि भवति, वस्तुसमानपरिणामरूपसामान्याभ्युपगमे तस्य निरवकाशत्वात्, एकान्तव्यतिरिक्तसामान्याभ्युपगमे तु बुद्धीनामशक्यप्रतिषेधमेव भ्रान्तत्वं, यतस्तत्तासु न कर्मतापन्नमवभासते, किन्तु ता एव व्यक्तयः स्वयमसमानाः सत्यस्तत्र समानरूपाः प्रकाश्यन्ते, ततस्तामन्यद्रूपमन्यथा प्रतिपद्यमानां कथं मिथ्यारूपता नोपतिष्ठेत् ?, तन्न काचिद् घटत्वसुवर्णादिजातिर्या व्यक्तिविनाशेऽप्यविनष्टैवावतिष्ठेत, न चैकस्माद् घटाद् घटान्तरमुपलम्भमानस्य तदेवेदं घटत्वमुपलभे यत्पूर्वं घटव्यक्तावुपलब्धवानिति कस्यचित्प्रत्यभिज्ञा प्रादुरस्ति, किन्तु तत्समानोऽयमितीयदेव तत्र प्रकाशते, स च तादृशः स्वहेतुभ्य एव समजनि, न पुनः स्वव्यतिरिक्तापरसामान्याभिसम्बन्धात्, स्वयमसमानस्यापि सामान्याभिसम्बन्धात् समानरूपता चेद्भवेत् एवं सति घटोत्तरद्रव्यं मुकुटलक्षणमपि घटरूपमुपलभ्येत, यतः–एकं नित्यं निरवयवमक्रियं सर्वगतं च सामान्यं, तस्य च व्यक्तिषु समवाय एव तद्योगः, तस्य चाप्रच्युतानुत्पन्नस्थिरैकरूपत्वान्न क्वचिद्विशेषः, ततः कदा किं केन घटत्वेन सम्बद्धमिति स्फुटैव मुकुटादेर्घटादिरूपताप्रसक्तिः, एवं मुकुटत्वस्यापि घटत्वप्रसङ्गाद् घटोऽपि मुकुटरूप उपलभ्येत, तथा चोत्तरं च द्रव्यं घटत्वयुक्तं नोदपादीति तदिच्छोः शोकः, अपूर्वं च द्रव्यं मौलित्वयुक्तमभूत्वाऽभूदिति तल्लिप्सोः प्रमोद इति प्लवते, तस्मादेकस्यैव सुवर्णरूपतापरिणतपुद्गलस्कन्धस्योभयरूपस्योपलम्भादस्मदभ्युपगम एव ज्यायान्। यत्त्वेकत्वमन्तरेणापि माध्यस्थ्यमुपन्यस्तं तदपि न चारु, तत्रापि तत्समानाकारपरिणामस्य भावात्, न खल्वेकत्वाश्रय एवायं माध्यस्थ्यभाव इत्याचक्ष्महे, किन्तु कथञ्चिच्छोकप्रमोदजन-

काकाराद्पराकारनिबन्धनः, स चात्रापि माध्यस्थ्यमिच्छोः समानाकारपरिणामात्मकः समस्त्येव, यस्तु तद्विशेषमाकाङ्क्षति न तस्य द्युम्नमात्रादेव समीहितसिद्धिः,ततस्तस्यात्रापि तदाकाङ्क्षायां कस्यचिच्छोकः कस्यचित्प्रमोदः, प्रकृतेऽपि घटमुकुटलक्षणे आकारद्वये तत्समानपरिणाम एव माध्यस्थ्यभावनिबन्धनं भविष्यति, न पुनरेक इति चेत्, न, प्रमाणाभावात्, तथाहि–एकस्मिन्नेव घटे सर्वात्मना स्वरूपनियते प्रतीतिवीथिमवतरति न तदेव रूपं घटान्तरेऽपि परिकल्पयितुं पार्यत इति तत्समानपरिणामात्मकोऽसावतिष्ठते, इह तु तद्भेदकल्पनाबीजं न किञ्चिदस्तीति कथमेवमेवासत्कल्पनयाऽऽत्मानं विप्रलभेमहि?, अथात्रापि घटात्मना स्थितं रूपं मुकुटात्मना न भवतीति कल्पना भवतु, तदाकारमात्रेण तर्हि तद्भेदः, नतु सर्वथेति, अतः 'सुवर्णत्वजातिस्तु तदवयविविनाशेऽप्यवयवेष्वनन्तरभाव्यवयव्यन्तरे वाऽस्तीति स्वर्णप्रत्ययस्य नोत्पादविनष्टाभिमानः, प्रदीपादिवद्वा तत्सादृशनिरन्तरभावात्तदेवेति मन्यमानस्तदर्थी माध्यस्थ्यमवलम्बते, तस्मान्नैकस्य रूपत्रययोग' इत्याद्यनिरूपिताभिधानमेव। यदप्युक्तं 'त्रयाणामाकाराणामेकवस्तुसंसर्गे घटार्थिनः शोकवत् प्रमोदमाध्यस्थ्ये अपि स्याता'मिति, तदप्यसत्, यतो न सर्वथैव सर्वेऽप्याकारास्तत्र संनिधीयंते,येनायं दोषः स्यात्, किन्तु कथञ्चित्, ततः कोऽपि कदाऽपि किमपि रूपं प्रधानतयाऽवलम्बमानः शोकादीनामन्यतरावस्थामधिगच्छतीति भावानां त्रैरूप्यमवतिष्ठत एव, अत एव सुवर्णं कुण्डलं करोतीत्यादौ सामानाधिकरण्यं, अन्यथा घटपटवदत्यन्तभेदे तन्न भवेत्,यत्तु 'दण्डकुण्डलादिविशेषणाभेदेऽपि दण्डी कुण्डली देवदत्त' इत्यादि सामानाधिकरण्यमुपवर्णितं तदपि न युक्तं,तत्रापि देवदत्तस्य तद्वत्तया परिणामात्, अत एव दण्डी कुण्डलीत्यादिमत्वर्थीयान्तेनैव सामानाधिकरण्यप्रत्ययः, न दण्डादिविशेषणेनैव, अथ दण्डी कुण्डलीत्यादयोऽपि शब्दा दण्डकुण्डलादिसंयोगनिष्ठा एव, संयोगश्च गुणो, गुणश्च द्रव्यादन्य एवेत्यभिधीयते, एतदप्यचारु, यतो

॥१३५॥

न संनिहितवस्तुद्वयातिरिक्तमाकारान्तरमाबिभ्राणः कश्चित्संयोगनामा पदार्थः प्रत्यक्षेणोपलभ्यते, तयोरङ्गुल्योः संयोग इति प्रतीतेः, कथं नोपलभ्यते ? इति चेत् तासामङ्गुलीनामयं मुष्टिरिति किं न व्यतिरेकप्रत्ययः, एषोऽपि संयोगविशेषनिमित्त एवेति चेत् ननु संयोगविशेषनिमित्तत्वे संयोगविशेष इत्येव भवेत्, नतु मुष्टिरिति, नहि नीले पीतमिति प्रत्ययः प्रवर्त्तते, अथ सङ्केतवशादेवमस्य प्रवृत्तिरित्युच्यते तर्हि केचिदेवंविधाः प्रत्ययाः पुरुषेच्छानिर्मितं सङ्केतमात्रमाश्रित्य प्रवर्त्तमाना न बहिस्तथैव वस्तुतत्त्वमत्रस्थापयन्तीति नैतद्वशाद्वस्तुतत्त्वव्यवस्था विदुषामुपपन्ना, अन्यथेदं नगरमित्यत्रापि निमित्तमभिधानीयं, तत्र न तावन्नगरद्रव्यं, गृहैरसंयुक्तैर्विपरीतैश्च तदनारम्भात्, कतिपयगृहाणामस्ति संयोग इति चेत् तत्किं संयोगेष्वपि संयोगः ?, यतो गृहाण्यपि न द्रव्यरूपाणि विजातीयैः काष्ठेष्टकादिभिस्तदनारम्भात्, (संज्ञायाश्चानादि) रूढिस्थनित्याया विशेषणायोगात्, अकिञ्चित्करस्याविशेषणत्वात्, किञ्चित्करत्वे तु नित्यत्वहानिः, षण्णगरीत्यत्र समूहार्थो वाच्यः, सत्ताया एकरूपत्वेन समूहार्थत्वानुपपत्तेः, तस्माद्गृहाणां संयोगरूपाणां संयोगाभावाद्गुणैर्द्रव्यानारम्भाच्चेति न कश्चित्संयोगः प्रत्यक्षगम्यः, अनुमानात्तत्प्रतीतिरिति चेत्, तथाहि–क्षितिबीजसलिलादयः सर्वे विरलदेशस्था अन्यनिमित्तापेक्षाः, सामर्थ्ये सति कार्यानुत्पादकत्वात्, यद्यत् सामर्थ्ये सति कार्यानुत्पादकं तत्तदन्यनिमित्तापेक्षं यथा त एवान्यतरविकलाः, नोत्पादयन्ति च समर्था अपि विरलदेशस्थाः सर्वे बीजादयोऽङ्कुरं, तस्मादन्यनिमित्तापेक्षाः, यत्तन्निमित्तं स संयोग इति, ननु बीजादयो दूरदेशस्था अपि सहकारिणं किं न संयोगमुत्पादयन्ति ?, तस्याभावादिति चेत् स किं न भवति ?, कारणाभावात्, किं तस्य कारणं ?, त एव, किं न दूरदेशस्थाः ?, संयोगाभावात्, तत्किं संयोगेष्वपि संयोगः ? तत्राप्यपर इत्यनवस्था, अथ योग्यदेशस्थाः संयोगमन्तरेणापि संयोगमुत्पादयन्ति, कार्येण किमेषामपराद्धं यत् तत् नोत्पादयन्ति ?, अपि-

च–किमेषां दूरदेशस्थानां कार्यानुत्पादकत्वं संयोगापेक्षया व्याप्तं प्रत्यक्षेण प्रतीयते ? किं वाऽनुमानेन ?, न तावत्प्रत्यक्षेण, तेन तस्याप्रतीतेरित्युक्तत्वात्, नाप्यनुमानेन, अनवस्थाप्रसङ्गात्, अथ निमित्तमात्रापेक्षया व्याप्तं तर्हि योग्यदेशादिविशिष्टं जननसामर्थ्यमात्मपर्यायमपेक्षमाणास्ते कार्यं न कुर्वन्ति, न तु संयोगमिति। किञ्च–अयं संयोगो यदि संयोगिभ्यो भिन्नस्तदा तत्सम्बद्धः स्यादसम्बद्धो वा ?, यद्यसम्बद्धस्तदा जगतोऽपि स्यात् न वा कस्यचित् तत्सम्बद्धतानिमित्तं ?, सम्बन्धान्तरपरिकल्पनायामनवस्थाप्रसङ्गात्, समवायादेव स तत्र सम्बद्ध इति चेत्, न, तस्यापि निराकरिष्यमाणत्वात्। यदि तु द्रव्यस्य संयुक्ततापरिणामलक्षणेयमिष्यते तदा साध्वेव, किन्तु नायं द्रव्यादत्यन्तव्यतिरिक्त इत्यसत्पक्ष एव विजयते, अथोच्येत 'न दण्डी कुण्डलीत्यादयः शब्दा वस्तुस्वरूपमात्रमवलम्बंते, किन्तु विशिष्टं, विशिष्टता च स्वरूपातिरेकिण्येव या दण्डीत्यादिज्ञाने प्रतिभासते, न खलु तत्र पुरुषमात्रप्रतीतिर्नापि दण्डयोगितामात्रस्य, तथा च दण्डीति प्रतीतावितरविलक्षण एव पुरुषः संवेद्यते, वैलक्षण्यं चास्य दण्डोपसर्जनत्वमेव, अत एव विशेषणं व्यवच्छेदकमिति गीयते, दण्डो हि स्वोपसर्जनाप्रतिपत्तिं पुरुषे कुर्वन् पुरुषमितरस्माद्व्यवच्छिनत्ती'त्यादि, तदपि न सारं, यतो विशिष्टता यदि वस्तुस्वरूपातिरेकिणी तदा तद्वस्तु कथमितरस्माद्व्यवच्छिद्येत ?, न हि यावद्भावः प्रतिनियतात्मस्वरूपनियतो न भवति तावदितरस्माद्व्यवच्छिद्यते इति तत्पर्यायविशेष एव विशिष्टताऽपीति, तस्माद् यत्र भेदप्रतिभासः स भेदः, यत्र चाभेदप्रतिभासोऽसावभेदः, यत्र चोभयावभासः स स्याद् भेदः स्यादभेद इति त्रैविध्यमेव वस्तु युक्तमिति, यदप्यभेदस्य भेदभवनप्रतिषेधाय साधनमुपन्यस्तं तदपि न साधीयः, यतो यो विवादाध्यासितोऽभेदः स स्यादभेदः, तस्य च भेदप्रत्याख्यानपरमनुमानमध्यक्षबाधितत्वादश्रावणः शब्द इत्यनुमानवदप्रमाणं, तथाहि–प्रत्यक्षेण सुवर्णाद्यात्मा न क्वचित्कदाचित्केनचिदेकान्तेनैकस्वभावोऽनु-

भूयते, न च सर्वथा नानास्वभावः, किन्तु कथञ्चिदभिन्न एव स स्वर्णादिरूपेण स्याद्भिन्ने घटमुकुटाद्यात्मना विवर्त्तमानः समुपलभ्यते, न चास्योपलम्भस्य भ्रान्तत्वनिवेदकं वस्तुनः प्रकारान्तरव्यवस्थापकं च मुग्धजनविस्मयकारिणो वचनमात्रादपरं प्रामाणमस्ति, तथाऽनुमानविधानमपीदं (न) भवत्साधनं,तथाहि–ये यदपेक्षात्मस्थितयस्ते तद्भाव एव भवन्ति, यथा चूतत्त्वादयो वृक्षत्वादिसद्भाव एव स्याद्, भेदापेक्षात्मकश्चायं विवादाध्यासितोऽभेद इति हेतुरपि यद्येकान्तेनाभेदरूप इष्यते तदाऽसावसिद्धः, अन्यः स्यादभेदरूपस्तर्हि विरुद्धो, विपर्ययस्यैव साधनात्, दृष्टान्तश्च साधनविकलस्तत्र स्यादभेदात्, अथ सामान्येनाभेदमात्रं हेतुस्तर्ह्यनैकान्तिकः, विपर्यये बाधकप्रमाणाभावात्, न ह्यभेद इति शब्दसाम्यमात्रेणैव सर्वेणाप्यभेदेनैकरूपेण भवितव्यमिति कश्चिन्नियमः, उक्तञ्च–"मधुरं न हि सर्वं स्यात्कफहेतुर्यथा मधु। तीक्ष्णं वा पित्तजनकं, यथा मागधिका मता ॥१॥" यदि तु तच्छब्दवाच्यतामात्रसाम्यादेव भावास्तत्स्वभावा भवेयुस्तर्हि विषाणि वज्रं गोशब्दवाच्यत्वात् शाबलेयादिवदित्याद्यनुमानानामपि प्रामाण्यमासज्येत, प्रत्यक्षादिबाधितत्वान्नेति चेत् भवदनुमानेऽपि समानमेतदित्यलं जाल्मोक्तेष्वतिसंरम्भेण। तदेवं यथा जैनाभिमतं वस्तुतत्त्वं न तथा तत्र दूषणानि क्रामन्ति, यथा तु तानि क्रामन्ति न तथा जैनाभ्युपगम इति युक्तमुक्तं 'यदभेदस्य भेदेन, भवनं सोऽयमन्वय' इति। नन्वेवमप्यभेदं भेदं वा प्रतिनियतमपश्यद्भिः सद्भिर्भवद्भिः कथमित्थमभिधातुं पार्यते–अभेदस्य भेदेन भवनमिति, भेदाभेदात्मकस्य जात्यन्तरस्यैव भावान्नैष दोषः, यत इत्थं शबलरूपे वस्तुतत्त्वे व्यवस्थितेः कदाचित्कस्याश्चिदाकाङ्क्षायां गुणप्रधानभावेन कथञ्चिच्छब्दप्रवृत्तिः सप्तभङ्गीप्रसाधनात्, पुरुषस्य हि कदाचिददृष्टादिवैचित्र्यात् कथञ्चिदप्यभिसन्धिः समुपजायते, स च शबलस्वरूपतयाऽवस्थिते वस्तुतत्त्वे स्याद्वादनीत्या गुणप्रधानभावेन अभेदादिशब्दान् प्रवर्त्तयन्न वस्तुतत्त्वं निरुणद्धि, न ह्यत्राभेदशब्दो भेद-

शब्दो वा केवलमभेदं भेदं चाश्रित्य प्रयुक्तः, अपि त्वभेदप्राधान्यविवक्षायां भेदस्य च तदन्तर्गतस्यैवौदासीन्यभावेनाभेदशब्दः प्रयुक्तः भेदशब्दश्चातोऽन्यथेति तस्मादयमेवान्वयः, न पुनरेकान्तेन नित्यत्वं प्रमाणैरनुपपद्यमानत्वादस्य ॥ तथाहि—

**भावा ज्ञेयस्वभावाश्चेन्नित्यं तज्ज्ञानसम्भवः। त(अ)थाज्ञेयस्वभावास्ते, कदा तज्ज्ञानसम्भवः? ॥ १८ ॥**

यदि भावा ज्ञेयस्वभावास्तदा नित्यं ज्ञायेरन्, चक्षुरादिव्यापारविरहेऽपि, एकरूपत्वात्, प्रयोगः—ये यदा ज्ञेयस्वभावास्ते तदा ज्ञायन्त एव, यथा विवक्षिते क्षणे, ज्ञेयस्वभावाश्च नित्यं भावाः, नायमसिद्धो हेतुः, सर्वदैवैकस्वभावत्वोपगमात्, सपक्षे भावान्न विरुद्धो, ज्ञेयस्वभावे सत्यपि तत्र ज्ञानासम्भवे सर्वदैव तदसम्भवो विपर्यये बाधकं प्रमाणं निमित्तान्तरभावात्। अथाज्ञेयस्वभावास्त इति न ज्ञायन्ते तर्हि कदाचनापि न ज्ञायेरन्, इहापि प्रयोगः—यदज्ञेयस्वभावश्चक्षुरादिव्यापारविरहकाले, (ते चक्षुरादिव्यापारकालेऽपि न ज्ञायेरन्, तथास्वभावात्) अज्ञेयस्वभावाश्चक्षुरादिव्यापारकालेऽपि घटादय इति, हेतुसिद्धिः पूर्ववत्, ज्ञेयाज्ञेयस्वभावद्वययोगस्तु नैकान्तनित्यस्येति, उपलक्षणमेतत् सर्वावस्थाभेदे भावानां कूटस्थनित्यतानिषेधार्थं, अथ यदैव स्वविषयं विज्ञानममी जनयंति तदैव ज्ञायन्ते, तदभावे तु न, तदुक्तम्—"नहि प्रविष्टमात्राणाममुष्णाद्गर्भगृहादिषु। अर्था न प्रतिभांतीति, गृह्यंते नेन्द्रियैः पुनः ॥१॥" ततो ज्ञेयस्वभावाः सर्वदा संतोऽपि कदाचिदेव ज्ञायन्ते, न तु सर्वदा, तन्निमित्ताभावात्॥ न च स्वसत्तामात्रेणैव नित्यात्कार्योदयः, किन्तु सहकारिकारणसव्यपेक्षात्, सहकारिसंनिधानं त्वस्य कादाचित्कमिति, अत्रोच्यते—

**सहकारिव्यपेक्षाऽपि, नित्यैकान्ते न युज्यते। नाधेयं नापनेयं वा, रूपं तैस्तस्य किञ्चन ॥ १९ ॥**

नैकान्तनित्यस्य काचित्सहकारिव्यपेक्षा, यतो न तस्य तैः किमपि रूपमाधीयतेऽपनीयते वा, अन्यथैकान्तनित्यत्वहानिप्रसङ्गः,

तथाहि–नित्यस्य भावस्य सहकारिभिः किमपि क्रियते वा न वा ?, अकरणे साकल्येन सकलजगदप्यपेक्ष्येत, अथ प्रागसमर्थस्यास्य सह-
कारिसंनिधानात्सामर्थ्यमुपजायते, ननु तत् तत्स्वभावमतत्स्वभावं वा स्यात् ?, तत्र सामर्थ्यस्य अतत् भावस्वभावत्वेऽपूर्वोत्पत्तिरेव सा, त-
त्स्वभावत्वे भावस्याकारत्वमेव, भिन्नादेव सामर्थ्याख्यात्पदार्थान्तरात्कार्योत्पत्तेः। तत्समवायात्तस्यापि कारकत्वमिति चेत् , न, तस्या-
भावात् , भवतु वा तथापि तदाऽपि न भावः पररूपेण कार्यं करोति, स्वरूपं चास्य प्रागपि तदेवेति कथं कदाचित्क्रियाविरामः स्यात् ?
तथाहि–तत्समवायेऽपि यद्ययं न कर्तृस्वभावस्तदा प्रागिव न जनयेत् , सामर्थ्यस्यैवायं महिमा यदिदं तत्र भवति, तत्र समवेतं च
सत्कार्यमुत्पादयति, अभावस्येदं याचितकमण्डनं विडम्बनैव, अथ यथा गजे गच्छत्यारोहकस्य गतिरुपलभ्यते तथाऽत्रापि भावस्यापि
कारकत्वे क इह विरोधः संभाव्येत ?, न, तत्रारोहकादेस्तत्संनिधाने तथापरिणतिभावात् , अन्यथा वाद्यादेरपि तत्पृष्ठसम्बन्धमात्रेण
तथा गमनप्रसङ्गात् , अथ भावो जनकस्वभावः सर्वदैव तर्हि समवायः किमस्य करिष्यति ?, तन्निरपेक्ष एवायं प्रसभं स्वकार्यमुत्पा-
दयेत् , तदतत्स्वभात्वे तु सामर्थ्यस्य वस्तुनः परिणामित्वप्रसङ्गः, योऽपि मन्यते अक्षेपक्रियाधर्मैव स तस्य स्वभावो, न स साहि-
त्यमपेक्षते, कार्यं तु प्रत्ययान्तरापेक्षमिति, स हि तेभ्य एव जायते न केवलेभ्य इति, तस्यापि कथं स भावः ?, केवलोऽपि करोत्येव,
कार्यं च तस्मान्नोत्पद्यत इति तदवस्थो विरोधः, न केवलः करोत्येवेति चेत् कथमिदानीमक्षेपक्रियास्वभावः ?, नन्वेतदेव परिदी-
पितं भवति करोत्येवेति, कार्यं चायं केवलोऽपि समर्थः सन् परमपेक्षमाणं कथमुपेक्षेत ?, परमनादृत्यैतत्प्रसह्य कुर्यात् , एवं ह्यनेना-
त्मनः सामर्थ्यं दर्शितं भवति, कार्ये न परमपेक्षत इति, ततः केवलादनुत्पत्तिरुक्ता भवति, केवलोऽपि समर्थस्वभाव इति तत उत्पत्तिः,
एते चैकत्र कथं स्यातां ?, तदयमीर्ष्याशल्यवितुद्यमानमर्मा विक्लवं विक्रोशतीत्युपेक्षामर्हति, तन्न नित्यस्य काचित्सहकारिव्यपेक्षा

युज्यत इति, नित्यं तु न स्वकार्यमुत्पादयेन्न वा कदाचिदपैति, न चैवं एवं वदद्भिर्भवद्भिरेकान्तक्षणिकवाद एव समर्थित इति वाच्यं, तत्राप्यर्थक्रियां प्रति सहकारिणामकिञ्चित्करत्वं किञ्चित्करत्वं च, तस्मात्परिणामवाद एवाभ्युपेयः, स एवास्माभिरेव समर्थितः ॥ पराभिप्रायमाशङ्क्य स्वाभिमतसाधनायाह—

**वस्तुतोऽचिन्त्यशक्तित्वादे(त्त्वमे)व चेदिष्यते परैः। द्रव्यरूपस्य पर्यायैरैक्यं दृष्टं न किं मतम्? ॥ २० ॥**

तस्य ह्ययमेव स्वभावो येन तत्र तत्र तदा तदा तत्तत्सहकारिकारणमासान्न(द्यान)नुभवन्नपि स्वभावभेदं क्रमादिना कार्यं जनयति, न खलु विशेषोत्पादनमेव सहकारिणां सहकारित्वं, अपि त्वेकार्थक्रियाऽपि, तेनैकस्वभावादेव भावात्तेषु सहकारिषु संनिहितेषु तत्तत्कार्योदयः, तदभावे तु नेति, न चैवं जनकाजनकत्वेऽस्य स्वभावभेदः, एकस्यैवात्मातिशयस्य तादृशत्वात्, अन्यथैकस्यैव पावकादेरेकं दहतस्तदपरं चादहतः स्वभावभेदप्रसङ्गः, न ह्येकस्यैव दहनमदहनं चेति विरुद्धं स्वभावद्वयमुपपद्यते, अथैकत्रैवाश्रये दहनमदहनं चेति विरुध्यते, एकं किमपि दहतस्तदपरं चादहतः को नाम विरोधः?, तर्ह्यत्राप्यसौ भावो यत्संनिधौ यत्कार्यं जनयति तत्संनिधावेव यदि तत् न जनयेत्तदा विरोधः सङ्गच्छेत, तत्संनिधौ जनयतस्तदभावे त्वजनयतो न कोऽपि विरोध इति कथं तद्भेदप्रसङ्गः?, अथास्य तत्तत्संनिधौ तत्तज्जनकत्वमिति यद्यवस्थितः स्वभावस्तर्हि तत्संनिधानेनाप्यवश्यं भवनीयं, अन्यथा स तस्य स्वभाव एव न सिध्येत, ननु यद्ययमस्य स्वभावो भवेत् यथा सहकारिसन्निधानेन, तत्संनिधौ चावश्यं तत्कार्येण भवितव्यमिति तदा तत्संनिधानमवश्यं भवेत्, यदा त्वयमेवास्य स्वभावो यथा यदा कदाऽपि स्वहेतुबलात्ते संनिधानस्यन्ते तदा तत्कार्यमुत्पादनीयमिति तदा तत्संनिधानस्यापि कथमवश्यंभावनियमः?, प्रमाणाधीना हि प्रमेयव्यवस्था, प्रमाणं च जनकाजनकत्वमेकस्वभाव एव भावे व्यव-

स्थापयति, सहकारिसन्निधानं च नैकदैव प्रतिपद्यते, न च दृष्टेऽनुपपन्नं नाम, अन्यथा वह्निर्येन स्वभावेन दहति यन्न दहति तदात्वेऽपि यदि स एव स्वभावस्तर्हि दहनस्वभावमात्रमेवावशिष्यत इति यन्न दहते तदपि यद्दहति तद्वदेव दहेत्, न चैवमुपलभ्यते, न च नानास्वभावता, ततो यथा वह्निरेकस्वभावोऽपि किञ्चिद्दहति किञ्चिन्न दहति तद्वदेकस्वभाव एव भावस्तदा तदा तत्र तत्र तत्तत्सहकारिकारणमासाद्य तत्तत्कार्यमुत्पादयति, एतच्च वस्तुनोऽचिन्त्यशक्तित्वादेवमिति यदि परैरिष्यते तदा द्रव्यरूपस्य भेदसञ्ज्ञितस्य पर्यायैः—उत्पादविनाशस्वभावैः कथञ्चिदेकस्वभावत्वं दृष्टं किं नाभिमतं ?, प्रमाणोपलब्धत्वादेव सुतरामभ्युपगन्तव्यं, यो हि हि दृष्टेऽनुपपन्नं नामेति मन्यमान एकस्वभावं भावं प्रतिपद्यते स तत्तत्सहकारिसंनिधौ तत्तत्कार्यजनकाजनकत्वे समुपलभमानस्तत्पर्यायरूपतया तन्नानातामपि कथञ्चित्किं नाभ्युपैति ?, एको ह्यात्मातिशयः स तादृशस्तदैवोपपद्यते यदैवमिष्यते, अन्यथा तत्संनिधानेऽपि तदैकस्वभावतायां प्रागिव न ततस्तत्कार्योदयः, तत एकार्थक्रियालक्षणमपि तेषां तं प्रति कथं सहकारित्वं ?, यदि परं त एव तदा तत्कार्यकारिणः स्युः तद्भावाभावानुविधानात् तत्कार्यस्य, अथ तेऽपि तदसंनिधानेन तन्न जनयन्तीति तस्यापि तज्जनकत्वं, तत्कदोपलब्धं ?, किं तत्संनिदानात्प्रागपि ? किं वा तत्संनिधाने च ?, न तावत्पूर्वमनभ्युपगमात्, तत्संनिधौ तु तदुपलभ्यमानं प्रागस्याजनकत्वमेवावगमयतीति सिद्धः पर्यायभेदः। सर्वथैकस्वभावत्वे तु यदेव जनकत्वं तदेवाजनकत्वमिति केवलं तज्जनकत्वमेवास्य स्यात्, यद्यतोऽव्यतिरिक्तं तत् तदेव यथा तज्जनकत्वादव्यतिरिक्तमस्यैव स्वरूपं, अव्यतिरिक्तं चाजनकत्वं ततः, तथा च तदसंनिधावपि तत्संनिधाविवास्मात्तत्कार्यमुपजायेत, यतो यद्यज्जननस्वभावं तत्तज्जनयत्येव यथा तत्सहकारिसंनिधौ स एव भावः, तज्ज(३०००)ननस्वभावश्च तदसंनिधानेऽप्येषः, तत्स्वाभाव्येऽपि चेदयं न जनयेत् कदाचनापि न जनयेत् विशेषाभावात्, अथवा तज्ज-

नकत्वादव्यतिरिच्यमानं जनकत्वमेव स्यात्, ततस्तदसंनिधाविव तन्न जनयेत्, यद्यजननस्वभावं न भवति तन्न जनयति यथा तदसंनिधौ स एव भावः, न भवति च तज्जननस्वभावः तत्संनिधानेऽप्येषः, ततस्तदाऽपि न तज्जनयेत्, तस्मात्तत्संनिधौ जनयतः पूर्वं चाजनयतः स्यादस्य कथञ्चित्स्वभावभेदः, न हि पावकस्यैकं दहतस्तदपरं चादहतः सर्वथैकस्वभावमभिदधति विद्वांसः, स्वभावभेदोऽपि नात्रोपलभ्यत इति चेत् तत्किमयं दहत्येव ? किं वा न दहत्येव ?, किञ्चिद्दहति किञ्चिन्न दहतीति चेत् ननु एतद्दहनादहनलक्षणं स्वभावद्वयमुपलभमानः कथमैक्यं प्रतिपत्स्यते ?, तदेकदहनमेव तदन्यादहनमिति चेत्, सत्यमेतत्, नापरं तददहनं, एवमेतत्, कः सन्देहः ? हन्तैवमन्यादहनं भवद्भिः सर्वथैव प्रतिषिद्धमस्य ततस्तदपि दहेत्, यो यत्र प्रतिषिद्धादहनस्वभावः स तद्दहत्येव यथा स एव विवक्षितं दाह्यं, प्रतिषिद्धादहनस्वभावश्च भावान्तरं प्रत्यपि विवक्षितो भाव इति, तदपि दहतस्तदेकदहनस्वभाव एवास्य नोपपद्यत इति चेत् तर्हि तदन्यस्यापि तदेकरूपतैव भवतु येनायमुपपद्यते स्वभावः, अथ तदन्यस्य न तद्रूपता तर्हि तदेकदहनमेव तदन्यादहनमपि न भवेत्, विषयभेदात्, अथ दहनमदहनं च यद्येतत्स्वभावद्वयमत्र भिद्यते तर्हि स येन तदपि न दहेत्, नन्वेतद्दूषणभीरूणां भवतां सर्वथा स्वभावभेदो नाभ्युपगन्तुं युज्यते, न पुनः कथञ्चिद्भेदोऽपि, यथैव हि सर्वथा तद्भेदे दोषस्तथा तदभेदेऽपि, तस्मात्पावकोऽपि नैकस्वभाव एव किञ्चिद्दहति किञ्चिन्न दहतीति कथं दृष्टान्तावष्टम्भेनाभीष्टं शिष्टैः साधयितुं शक्यते ?, वस्तूनामचिन्त्यशक्तित्वात्, किं नैकस्वभावस्यैव तज्जनकत्वादिव्यवस्था ? इति चेत् प्रमाणाभावात्, यो हि स्वभावः प्रमाणेन यथोपलब्धो भवति स दृष्टोऽभिधीयते, ततस्तस्य तथाभावव्यवस्थायां न किञ्चिदनुपपन्नं, तत्त्वं दृष्ट्वैव प्रमाणेन तथाभावस्वभावं तदचिन्त्यशक्तित्वमात्रं स्वाभिमतसाधनायोपन्यस्यते तन्न सुधियः साधु शंसन्ते, केवलं पादप्रसारणमेव तत्, न च दृष्टमेकान्तेनैक-

स्वभावत्वं जनकाजनकाद्यवस्थासु भावानां, दृष्टं च द्रव्यात्मनः पर्यायात्मना सह कथञ्चिदैक्यमतस्तदेव न्याय्यम्, उष्णाद्रर्भगृहादिप्रवेशेऽपि यावन्न ज्ञायते तावदद्यापि न तत्पर्यायतया स परिणमति, यदा तु तत्पर्यायतया परिणतस्तदा ज्ञायत एवेति न क्वचिद्व्यभिचारः॥ स्यादेतद्–युज्यत एवेदं यदि द्रव्यव्यतिरेकिणः केऽपि पर्याया भवन्ति, न चैवं, नहि मृद्द्रव्यातिरेकेणामी केचित् केनचित् कदाचनाप्युपलब्धाः, तदाह—

**न हि द्रव्यातिरेकेण, पर्यायाः सन्ति केचन। द्रव्यमेव ततः सत्यं, भ्रान्तिरन्या तु चित्रवत्॥२१॥**

न हि कटककुण्डलादयः केचित्सुवर्णस्वभावमतिक्रम्य वर्त्तन्ते तस्माद् द्रव्यमेव सत्यं, अन्या तु भेदबुद्धिर्भ्रान्तिः, यथा चित्रे निम्नोन्नतबुद्धिरिति, तथाहि–यद्द्रव्यादव्यतिरिक्तं तद्द्रव्यमेव, तद्यथा द्रव्यस्यैव स्वरूपं, अव्यतिरिक्ताश्च ततः पर्याया इति, न तावदयमसिद्धो हेतुः, सपक्षे भावात्, न विरुद्धः, तदव्यतिरेकेऽपि तन्नानात्वे भावानां प्रतिनियतमात्मस्वरूपमेव क्वचिन्न सिद्ध्येत्, तन्न केचित्पर्यायास्तात्त्विकाः सन्ति, किन्तु तस्मिन्नेव द्रव्ये कुतोऽप्यनाद्यविद्यावासनादेर्निमित्ताद्भेदावभासा बुद्धिः प्रवर्त्तते, दृश्यते हि चित्रादौ निम्नोन्नतादिविरहेऽपि तदवभासा बुद्धिः, न च दृष्टेऽनुपपन्नं नाम, चित्रादौ निम्नोन्नताद्यवभासा बुद्धिः भ्रान्तिरिति चेत् पर्यायबुद्धिरप्येवंविधैव, नातस्तत्त्वव्यवस्थेति, तदेतत्पर्यायपक्षेऽपि समानं, तथा हि तद्वादिनाऽप्येवं वक्तुं शक्यत एव, यथा–

**पर्यायव्यतिरेकेण, द्रव्यं नास्तीह किञ्चन। भेद एव ततः सत्यो, भ्रान्तिस्तद्ध्रौव्यकल्पना॥ २२॥**

न खलु कटककुण्डलाद्याकारातिरिक्तं च द्रव्यं पर्यायेभ्यः, हेतुसिद्धिः पूर्ववत्, नन्वेतत् पर्यायवादिना द्रव्यवादिनं प्रति प्रतिपाद्यमानं क्वोपयुज्यते ?, स हि पर्यायान्नेच्छत्येव, ततस्तं प्रति यत्पर्याया एवेत्याद्यभिधीयमानमसम्बद्धमेव, तर्हि द्रव्यवादिना पर्याय-

वादिनं प्रति यद्द्रव्यादव्यतिरिक्तं तद्द्रव्यमेवेत्यादि कथमभिधीयते?, तत्राप्यस्य न्यायस्य तुल्यत्वात्, द्रव्यपर्यायोभयवादिनं प्रत्येवमभिधीयत इति चेत् तर्हि केवलपर्यायवादिनमबाधमानस्य किं समीहितं संपत्स्यते केवलद्रव्यवादिनः, केवलद्रव्यवादमबाधमानस्य पर्यायवादिनोऽपि न स्वमतसिद्धिरिति चेत्, तर्ह्युभावपि भवन्तावसम्पन्नसमीहितसिद्धी आसातां, सुवर्णादिद्रव्यमुपलभ्यत इति चेत्, कुण्डलादिपर्यायोऽप्युपलभ्यत एव, कः सुवर्णातिरेकणेति चेत्, सुवर्णमपि किं कुण्डलाद्यतिरेकेण?, यत्र सुवर्णबुद्धिः प्रवर्त्तते तत्सुवर्णमिति चेत्, यत्र कुण्डलबुद्धिः प्रवर्त्तते तत्कुण्डलं, न तत्सुवर्णादन्यदुपलभ्यत इति चेत् सुवर्णमपि न तदाकारादन्यत्, तर्हि सुवर्णबुद्धिः कथमनुभवसिद्धेयं, बहिर्मुखावभासेति चेत् कुण्डलादिबुद्धिरप्येवंविधैव, तस्मादुभयरूपस्योपलम्भात् स्याद्वादनीत्या च तत्र लेशेनापि विरोधाभावादन्योऽन्यसंवलितद्रव्यपर्यायोभयमस्तु ते ॥ तदा—

**नाभेदमेव पश्यामो, भेदं नापि च केवलम् । जात्यन्तरं तु पश्यामस्तेनानेकान्तसाधनम् ॥२३॥**

नाभेदमेव—केवलैकस्वभावतालक्षणं पश्यामः, नापि च भेदमेव—सर्वथा नानास्वभावलक्षणं, किन्त्वन्योऽन्यसंवलितभेदाभेदरूपं जात्यन्तरमेव पश्यामः द्रव्यपर्याययोः, तेनानेकान्तसाधनं—न ध्रौव्यं ध्रौव्यमेव, किन्तूत्पादव्ययावपि तत्, तथोत्पादव्ययावपि नोत्पादव्ययावेव, किन्तु ध्रौव्यमपि तावित्येवं व्याकुर्वते जैनाः, ननु भेदे प्रमाणाभावात्तथा प्रतिभासो भ्रान्तः, तथाहि—भेदो वस्तुनो भिन्नः स्यादभिन्नो वा?, यद्यभिन्नो न भेदः, अथ भिन्नः स किं प्रत्यक्षेण प्रतीयते? किं वाऽनुमानेन?, प्रत्यक्षेणापि तद्वस्तुग्राहिणा उतान्येन?, यदि तद्वस्तुग्राहिणा तदा किं तस्मिन्नेव काले कालान्तरे वा?, न तावत्तस्मिन्नेव काले, द्वयोः प्रतिभा-(सयोरेव एककालेनाभावात्, कालान्तरे तद्वस्तुग्रहा)भावात्, प्रत्यक्षप्रतिषेधेऽनुमानमपि तत्र प्रतिषिद्धमवगन्तव्यं, किञ्च—भेदोऽपि

वस्तुनो भिन्नो भेदान्तरमाश्रित्य स्यात्, सोऽपि तदन्तरभेदावभासः स्यात्, न चैतदस्ति, तन्न क्वचिद्भेदः सत्यः इत्यद्वयमात्रमेव तत्त्वमस्त्विति सङ्ग्रहनयावलम्बिनोऽद्वयवादिनः प्रत्यवतिष्ठन्ते तत्र प्रतिविधीयते, तत्र यदुक्तं 'भेदे प्रमाणाभावात्तथा प्रतिभासो भ्रान्त'इत्यादि, तदसत्, यतो ग्राहकाकारमहङ्कारास्पदभूतं नीलादिकं च ग्राह्याकारं मुक्त्वा न किञ्चिदपरमेकान्तेनाभिन्नं कस्यचित्कदाचिच्चकास्ति, केवलमद्वयवादिनस्तदाशयोत्सवप्रायितमात्रमेवेदं, किञ्च-एवं भेदं प्रतिक्षिप्याभेदसिद्धावद्वयतत्त्ववादी संपन्नकामः स्यात् तदत्रापि वक्तव्यं-अयमभेदो वस्तुनो भिन्नः? किं वाऽभिन्नः?, यद्यभिन्नस्तदा नाभेदः, अथ भिन्नः स किं प्रत्यक्षेण प्रतीयते किं वाऽनुमानेन?, प्रत्यक्षेणापि किं वस्तुग्राहिणा उतान्येन?, वस्तुग्राहिणाऽपि किं युगपत् क्रमेण वा?, न तावद्युगपत् द्वयप्रतीतेरभावात्, प्रतीतौ वा कथमभेदः?, द्वयप्रतीतेरेव भेदरूपत्वात्, नापि क्रमेण, क्षणिकत्वात्, न चान्यत्प्रतिभाति, प्रत्यक्षाभावादनुमानमपि नास्ति, अथ वस्तुनो ग्रहणे तदभिन्नस्याभेदस्यापि ग्रहणं, भेदस्यापि तथा ग्रहणं किं न भवति?, किञ्च-अयं भेदो नाम द्वितीयापेक्षः, तदग्रहे कथं ग्रहणमस्य?, नहि यथा नीलग्राहि संवेदनं यदेवं न भवति तदतोऽन्यदिति व्यवस्थापयति, तथा पीताद्यप्रतिभासने पीतादिना सह नीलादेरेकत्वमित्यपि प्रतिभासो न युक्तः, भेदोऽपि कथं?, भिद्यमानप्रतिभासन इति चेत् किं नीलस्यापि नास्ति प्रतिभासः, अस्तीति चेत् तत्किं पीतादि तत्र भासते?, नेति चेत् कथं न भेदप्रतिभासः, न चैवं द्वितीयाप्रतिभासने तेन सहैक्यप्रतिभासो युक्तिमानिति, सूपपादं वाऽध्य(अध्यक्षा)ग्राह्यत्वं भेदस्य, यतो न भावैकस्वभावा एव भावाः, किन्तु स्वरूपेण सन्तः पररूपेण चासन्तः, यच्चामीषां पररूपेणासत्त्वं स एव भेदः, स च भावस्वरूपग्राहिणा प्रत्यक्षेण यदि न प्रतीयेत तर्हि तावत्स्वरूपमेव न प्रतिपन्नं स्यात्, यतः-"अयमेवेति यो ह्येष, भावे भवति निश्चयः। नैष वस्त्वन्तराभावसंवित्त्यनु-

गमाद्दते ॥१॥" 'तेन प्रत्यक्षं भावसम्पादितजन्मकं तन्मात्रमेवावगाहते नाभावमिति कथं भेदः प्रत्यक्षादिगम्यः स्यादि'त्याद्यपि पराकृतं सर्वं प्रतिक्षिप्तमवगन्तव्यमिति। ननु यदि सर्वे भावाः स्वरूपेण सन्तः पररूपेण चासन्तस्तर्हि द्रव्यमपि द्रव्यात्मना सत् पर्यायात्मना चासत्, पर्यायात्मनाऽपि तत्सत्त्वे द्रव्यात्मसत्त्वमेव तन्न सिध्येत्, एवं पर्याया अपि पर्यायात्मना सन्तो द्रव्यात्मना चासन्तः, तदात्मनाऽपि तत्सत्त्वे प्रतिनियतं पर्यायात्मसत्त्वमेव तन्न स्यात्, तथा च नीलपीतादीनामिव द्रव्यपर्याययोरप्यात्यन्तिको भेद एव स्यादिति, नैतच्चारु, यतो यथा नीलं पीतरूपासंस्पृष्टमनुभूयते पीतं च नीलरूपासंस्पृष्टं न तथा द्रव्यरूपं पर्यायरूपासंस्पृष्टं कदाचिदनुभूयते, कुण्डलाद्याकारासंस्पृष्टस्य सुवर्णाद्यात्मनः सुवर्णाद्यसंस्पृष्टस्य वा कुण्डलादेः क्वचिदप्यनुपलक्षणात्,तन्नात्र द्रव्यपर्यायात्मसत्त्वयोरात्यन्तिको भेदः, यत्पुनरुक्तं 'पर्यायात्मनाऽपि तत्सत्त्वे द्रव्यात्मसत्त्वमेव तन्न सिध्येत्, तत्र नः सिद्धसाध्यता, केवलस्य द्रव्यात्मनः क्वचिदप्यनभ्युपगमात्, एवं पर्यायात्मनाऽपि न केवलः कदाचिदभ्युपगम इति तत्सत्त्वमपि यदि प्रतिनियतं न भवेत्तथाऽपि न नः कदाचित्क्षतिः, केवलमिष्टसिद्धिरेव, द्रव्यानुविद्धस्यैव तत्स्वरूपस्यापि भावात्, उक्तश्च—"द्रव्यं पर्यायवियुतं, पर्याया द्रव्यवर्जिताः। क्व कदा केन किंरूपा, दृष्टा मानेन केन वा ? ॥१॥" ततः कथं नीलपीतादीनामिव द्रव्यपर्याययोरप्यात्यन्तिको भेदः स्यात् ?। नन्वभेद एव केवलः किं न स्यादिति चेत् अन्योऽन्यव्याप्तेरेवोपलक्षणात्, तस्याश्चैकान्तभेद इवैकान्ताभेदेऽप्यसम्भवात्, उक्तश्च—"नान्योऽन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते । अतिप्रसङ्गादैक्याच्च, शब्दार्थानुपपत्तितः ॥१॥ अन्योऽन्यमिति यद्भेदं,व्याप्तिश्चाह विपर्ययम्। भेदाभेदद्वये तस्मादन्योऽन्यव्याप्तिसम्भवः ॥२॥" तस्माद् द्रव्यपर्याययोः सङ्ख्यासञ्ज्ञालक्षणकार्यभेदाद्भेदो देशकालस्वभावाभेदाच्चाभेद इति, तथाहि—एको घटो रूपादयो बहव इति सङ्ख्याभेदः, घटो रूपादय इति सञ्ज्ञाभेदः,

अनुवृत्तिलक्षणं द्रव्यं नित्यं च, व्यावृत्तिलक्षणाः पर्यायाः क्षणिकाश्चेति लक्षणभेदः, घटेनोदकाहरणं क्रियते, रूपादिभिस्तु वस्तुराग इति कार्यभेदः, एवं सर्वत्र द्रव्यपर्याययोः सङ्ख्यादिभिर्भेदो देशादिभिस्त्वभेद इति, आह—नन्वसदेतत्, यदि हि न स्वभावतो भेदो धर्मधर्मिणोः सङ्ख्यादिभेदादपि नैव भेदः, नहि पररूपाभिद्यमाना अपि सङ्ख्यादय आत्मभूतमभेदं बाधितुं समर्थाः, तदसत्, यतो द्रव्यपर्याययोः स्वभावभेदे प्रतिषिद्धे सत्यभेदः साध्यः, स च सम्बन्धः, सम्बन्धश्चैकस्यैवात्मनो न संभवति, द्वयनिष्ठत्वादस्य, न हि घटो घटादभिन्न इति कदाचिदपि व्यवहारः प्रवर्त्तमानः समुपलभ्यते, नन्वेकत्रापि दृष्ट एव व्यवहारो यथा घटस्य तत्स्वरूपस्य चाभेद इति, न, तत्रापि कथञ्चिद्भेदाश्रयणात्, तथाहि—घट इति धर्मिवचनः शब्दः, स्वरूपं तु स्वं रूपं स्वरूपमिति तस्यैव भावस्यानित्यत्वादिरूपं धर्ममाह, न कश्चिदनित्यत्वादिरूपस्तात्त्विको धर्मः समस्ति, केवलमतद्रूपव्यावृत्तिमात्रेणानित्यो भाव आख्यायत इति चेत्, उक्तमत्र—तदसत्स्वभावत्वे विपर्ययव्यावृत्तिकल्पनायामिव स्वव्यावृत्तिकल्पनायामपि न राजाज्ञा प्रभवति, तत्तत्स्वभावत्वे तु स एव कथञ्चिद्धर्मभेद इति, तस्माद् द्रव्यपर्याययोरयमेव स्वभावभेदो यन्नेतरेतराननुविद्धमेकस्यापि किञ्चिदात्मीयं रूपं, अत एव न तद्द्रव्यमित्येव व्यपदिश्यते, नापि पर्याया इत्येव, किन्तु सप्तभङ्ग्या प्राग्निरूपितया, इत्थमेव वस्तुरूपतोपपत्तिरिति, ननु तथाऽपि 'सङ्ख्यादयः पररूपा भिद्यमाना अपि कथमात्मभूतमभेदं न बाधितुं' इत्युक्तम्, उक्तमेतद् अयुक्तं तूक्तं, यतो नास्माकं नैयायिकादीनामिवैकान्तेन भावव्यतिरेकिणः केचित्सङ्ख्यादयोऽपि, किन्तु स एव भावो भेदाभेदतया व्यवस्थितः कदाचिदनेकत्वप्राधान्येन विवक्ष्यते कदाचिदेकत्वप्राधान्येन, ततो यदाऽनेकत्वप्राधान्येन विवक्षितस्तदा स एव रूपादयः पर्याया भवंति, एकत्वप्राधान्येन विवक्षितस्तु स एव द्रव्यमिति, भेदाभेदात्मके वस्तुतत्त्वे एकत्ववदनेकत्वमपि तावत्स्वभावमेवेति कथं न सङ्ख्याभेदात्त-

द्भेदः ?, अयं चाभेदं बाधितुं नोत्सहेत यद्येकमेव रूपमभेदव्यपदेशभाक् स्यात्, वस्तुस्वरूपादत्यन्तदूरवर्त्ती चैष भवेत्, न चैवमुभयमप्यत्रेति, ननु तथाऽपि सङ्ख्याया व्यवहारनयवस्त्वनुरोधेन प्रवृत्तिः, एकस्मिन्नपि द्रव्ये बहुत्वेन व्यवहारोपलम्भात्, यथा गुरव इति, नैतच्चारु, यत एकानेकतया व्यवस्थिते वस्तुतत्त्वे कदाचिद्रूपादिभेदप्राधान्यादभेदस्य तदन्तर्गतस्य गुणीभावविधानात् कस्याश्चिदाकाङ्क्षायां गुरव इति प्रयुङ्क्ते, कदाचिच्चाभेदप्राधान्याद्भेदस्य च तदन्तर्गतस्याप्राधान्यविधानाद्गुरुरिति, तदत्रैकाकारपरिग्रहकाले न कदाचिदितरः सर्वथा न भवति, किन्तु तदन्तर्गतोऽसौ प्राधान्येनैव न विवक्षित इति, दृष्टश्चोभयरूपे वस्तुनि स्वविवक्षया शाब्दो व्यवहारो यथा देवदत्तायाः पुत्रो देवदत्तस्य च पुत्र इति, अनुभवसिद्धं चैतत्, तथाहि–न कदाचिद्रूपाद्यतिरेकिणमर्थमवलम्ब्य गुरुप्रतीतिरुल्लसति, नाप्यत्यन्तभेदिनः प्रतिनियतानेव रूपादीननुसरंतीयमनुभूयते, किन्तु कथञ्चिदनेकाकारव्यतिरेकिण इयमवलम्बते, एतच्चावश्यमभ्युपगन्तव्यं, अन्यथा भवन्मते विशकलितपरमाणुमात्रस्यैव वस्तुरूपत्वाद्गुरुः सुगतादिर्वा कः स्यात् ?, न तावत्प्रतिनियतः कश्चित् परमाणुः गुर्वादिप्रतीतिविषयः, तत्समुदाये तत्प्रतीतिरिति चेत् ननु किमेकं ज्ञानमनेकपरमाण्वाकारं तत्समुदायव्यवहारं रचयति ?, किं वा यावन्तस्ते परमाणवस्तावन्ति तदाकाराणि तानि तद्व्यवहारं रचयेयुः ?, यदि प्रथमः पक्षः कक्षीक्रियते तर्हि यथा तदेकमेव विज्ञानमनेकपरमाण्वाकारमिष्यते तथा बहिर्वस्तुस्वरूपमेवैकमनेकात्मकमिष्यतां किमनेन परिव्राड्मोदकभक्षणन्यायेन ?। अथ द्वितीयस्तदा सर्वाण्यपि प्रतिपरमाणु नियतानि तानि न तदपरं परमाण्वन्तरमधिगन्तुमर्हन्ति, ततः कथं समुदायव्यवहारः ?, तदपरमेव प्रतिसन्धानविज्ञानं तद्व्यवहारं रचयतीति चेत् तदप्येकमनेकं वा ?, यद्येकं कथं तन्नानावभासम्, अनेकत्वे पुनः स एव प्रतिसन्धानप्रत्ययाभावः, तस्माद्यदैकमेव संवेदनमनेकावभासतादात्म्येन प्रथते समुदायादिव्यवहारोऽपि तदैव

सुस्थितो भवतीति क्वचिदेकानेकयोरन्योऽन्यानुगमोऽवश्यमभ्युपगन्तव्यः, तथा च द्रव्यपर्याययोरपि स स्यादित्येकानेकतया यथोदितव्यवहारसिद्धिस्तद्विधवस्तुप्रभवैवेति तया तत्तथा निश्चीयते इति, न चैवं कात्स्न्र्यगौरवयोरप्रतीतिप्रसङ्गः, शब्दस्यानन्तशक्तिसहितत्वेन तथासङ्केतसहायस्य तथा तथा प्रतीतिहेतुत्वाविरोधात्, विचित्राश्च भावा इत्येकस्मिन्नपि द्रव्ये वर्त्तमानः कश्चिच्छब्दस्तद्भेदप्राधान्यनिष्ठो बहुवचनान्त एव यथा दारादिशब्दः, कश्चिद्भेदेऽपि समुदायादि तदेकपरिणामनिष्ठो यथा पञ्चपूल्यादिः, कश्चिज्जातिव्यक्तिनिष्ठः, ततस्तत्र कदाचिज्जातिप्राधान्यादेकवचनं यथा यवो जात इति, कदाचित्तु व्यक्तिप्राधान्याद्बहुवचनं यथा यवा जाता इति, एवं विचित्रशब्दाश्रयो व्यवहारस्तथा तथा स्याद्वादरीत्या सर्वः सनिबन्धनः स्वयमभ्यूह्यः, ततश्च व्रीहय इति च जातिवचने धर्मिणो(ऽभिधानात्)रूपादीनां चानभिधानाच्च न किञ्चिदुत्तरमिति प्रलापमात्रमेव परस्य, उभयरूपस्य वस्तुनो गुरुशब्दवाच्यत्वात्, कथं ?, संभविनो धर्मिरूपस्यैकत्वविवक्षा ततश्चैको गुरुरिति, सामानाधिकरण्यदर्शनात्, पर्याया अप्येकसङ्ख्याविषयाः, ते च पर्यायरूपेण भिद्यन्ते, तत्कथं सङ्ख्याभेदाद्भेदसिद्धिरिति चेत्, नन्वेवमात्यन्तिकस्तद्भेदो न सिध्येद्, अभेदानुविद्धस्त्वसावत एव सिद्धः, यतस्त एव भेदप्राधान्येन विवक्षिता द्रव्यमित्युच्यते, नतु तदतिरिक्तमपरं किञ्चिद्द्रव्यं विधीयते, भेदप्राधान्येन च तदेव द्रव्यं पर्याया भवंति, न पुनस्तेऽपि केचिदन्ये विधीयन्त इति, उक्तश्च-"अपर्ययं वस्तु समस्यमानमद्रव्यमेतच्च विविच्यमानम्। आदेशभेदोदितसप्तभङ्गमदीदृशस्त्वं बुधरूपवेद्यम् ॥१॥" इति, ननु तथाऽपि सञ्ज्ञा सङ्केतनिबन्धना, स चेच्छावृत्तिरिति कुतः सञ्ज्ञाभेदादर्थभेदः ?, ननु सङ्केतनिबन्धनत्वेऽपि कथमस्या न वस्तुविषयत्वं ?, इच्छावृत्तिरियं, न वस्तुतत्त्वानुरोधिनीति चेत् किमनाप्तप्रभवेषु वचनेष्वेव न्यायः ? किं वाऽऽप्तप्रभवेष्वपि ?, यदि प्रथमः पक्षस्तदा युक्तमुक्तमास्ते, अस्माकम(प्यनाप्तवचनेषु तथात्वाभ्युप-

गमात्, द्वितीये न) कथञ्चिदेव, पुरुषेच्छामीमत(नुगत)सङ्केतमात्रमाश्रित्य प्रवर्त्तन्ते, न पुनर्वस्तुतत्त्वानुरोधेन, तर्हि डिण्डिकपुराणात् सुगतागमस्य न स्वल्पमप्यन्तरं, तथा च प्रेक्षापूर्वकारिणः सुगतागमान्न कदाचनापि प्रवर्त्तेरन्, यथाकथञ्चित्प्रवर्त्तमानानां प्रेक्षापूर्वकारितैव न स्यात्, अथ ते ततः कृषीबलादय इवार्थसंशयात्प्रवर्त्तन्ते, युक्ता कृषीबलादीनामधिगतबीजाबीजस्वभावानामुपायनिश्चये सत्युपेयसन्देहेऽपि प्रवृत्तिः, अत्र त्वर्थाननुरोधेन प्रवृत्तं वचनं स्वर्गापवर्गाद्युपेयसाधके उपायेऽपि न निश्चयमुत्पादयतीति कथं ते ततः प्रवर्त्तेरन्?, अथ परीक्षापुरस्सरमेव ततस्तेषां प्रवृत्तिः, यत उक्तं–"तापाच्छेदान्निकषात्, सुवर्णमिव पण्डितैः। परीक्ष्य भिक्षवो! ग्राह्यं, मद्वचो नतु गौरवात् ॥१॥" तर्हि तद्वचनं कदाचिदर्थानुरोधेन सङ्केततोऽपि प्रवृत्तं अन्यथा कथमेतत्सत्यं स्यादिति मुच्यतामेकान्तेनैवास्यावस्तुविषयत्वप्रतिज्ञानं, यश्च वस्त्वनुरोधेन प्रवृत्तः शब्दः स तदात्मभूततथाऽभिधेयपरिणामाश्रयीति कथमतो नार्थभेदः?, तथाहि घट इत्युक्ते एकघनाकारं वस्त्वभेदरूपमधिगम्यते, रूपादिशब्दैस्तु तदेव भेदाकारतयेति एकत्रापि सञ्ज्ञाभेदो दृश्यते, यथेन्द्रः शक्रः पुरन्दर इति चेत्, अत्रापीन्दनाच्छकनाद्दारणाच्च कथञ्चिच्छक्तिभेदो गम्यत एव, अथ न शक्तिरेवेन्दति शक्नोति दारयति च, किं तर्हि?, धर्मिरूपमपि, तयोरेकस्वभावतोपगमात्, शक्नोतीत्यादिपदैस्तद्वाचिना सामानाधिकरण्यदर्शनाच्चेत्याचक्षीथाः, एवमपि नैकस्यैव कस्यचिद्रूपस्य तस्य तथा तत्कार्यकर्तृत्वं, अपि त्वनेकानुगतस्यैकस्य, न हि सर्वथैकस्वभावत्वे प्रकृत्यर्थनानात्वं प्रत्ययार्थाभेद इतीदमुपपत्तिमत्, तस्मादेकानेकनिमित्तकमेवेदं तद्वाचिना सामानाधिकरण्यं, सर्वथैक्ये ह्येकमेव रूपमिति कस्य केन सामानाधिकरण्यं?, अत्यन्तनानात्वेऽपि नैतदिति प्रकृत्यर्थभेदेन प्रत्ययार्थाभेदेन च प्रवृत्ताः शब्दास्तादृशमेव वस्तु गोचरयन्ति, ये तूभयभेदविवक्षया प्रयुक्तास्ते उभयमिति, तन्न पर्यायशब्दाः सर्वथा भावैकस्वभावनियता येषां न काचिदर्थानुगममात्रा, तत्र किं

वक्तव्यमिति चेत् न, तथाविधशब्दस्यैवाभावात् तन्निरुक्तविधिना सर्वत्र व्युत्पत्तिनिमित्तसम्भवात्, तथा चाहुर्वैयाकरणाः–"नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम्। यन्न पदार्थविशेषसमुत्थं, प्रत्ययतः प्रकृतेश्च तदूह्य"॥१॥मिति। ननु तथाऽपि लक्षणभेदोऽसिद्ध एव, न ह्येको भावः क्वचिदन्वयी सिद्धः, तथाहि–न कूटस्थनित्यतया नित्यं द्रव्यमिष्यते भवद्भिः, परिणामनित्यतोपगमात्, सा च पूर्वोत्तरक्षणप्रबन्धवृत्त्या, न ह्यस्य पर्यायाणामिवोच्छेदः, तद्रूपेण पर्याया एव हि पर्यायरूपेण निरुध्यन्ते, नतु द्रव्यमिति नित्यमभ्युपगम्यते, न चेयं कूटस्थनित्यता वा द्रव्ये संभवति, पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः, तस्योपलब्धिलक्षणप्राप्तस्य तद्विवेकेनानुपलक्षणात्, पर्यायेष्वेव तुल्यरूपकार्यकर्तृषु द्रव्याभिमानो मन्दमतीनां, न पुनस्तत्ततो विलक्षणमुपलभ्यत इति, तदप्यसत्, यतः पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धिः किं पर्यायमात्रोपलक्षणात्? किं वा तद्विवेकेन तदनुपलक्षणात्?, न तावत्प्रथमः पक्षः, सुवर्णादिद्रव्यस्वभावविरहिणः कुण्डलादिपर्यायस्य केवलस्यैव कदाचिदनुपलक्षणात्, तद्विवेकानुपलक्षणं तु तद्भेदमस्य बाधते, नतु तत्स्वरूपमेव, तद्विवेकेनानुपलक्षणे तदभेद एव, तथा चैकमेव किञ्चिद्रूपं स्यादिति चेत्, न, तत्राप्यभेदासिद्धेः, प्रतिपादितमेतत्, अतः पर्याया एव हि पर्यायरूपेण निरुध्यन्ते, न तु द्रव्यमिति नित्यमभ्युपगम्यत इति स्वाभिप्रायेणैवोच्यते परैः, यतः पर्यायाः केचिन्न द्रव्यभिन्नतनवः सन्ति, येन त एव पर्यायरूपेण निरुध्येरन्, न तु द्रव्यमिति, किन्तु तदेव द्रव्यव्यपदेश्यमेकान्तकूटस्थनित्यतामादधानं नास्ते, किन्तु व्यावर्त्तत इति पर्यायात्मना निरुध्यत इत्युच्यते, तस्यैव पर्यायव्यपदेशाद्, अत एव परिणामनित्यतेयं, द्रवति–गच्छति तांस्तान् पर्यायानिति द्रव्यमिति व्युत्पत्तेः, यदि द्रव्यमेव व्यावर्त्तते तदेव च पर्यायव्यपदेशमेवमासादयति तर्हीदमन्वयि कथं स्यात्?, द्रव्यव्यपदेशं वा कथमासादयेत्?, सर्वथा तन्न व्यावर्त्तत इति हेतोः, यदि च सुवर्णादिरूपमुपलम्भमानो-

ऽप्येष पर्यायेष्वेकतुल्यरूपकार्यकर्तृषु द्रव्याभिमानो मन्दमतीनां न पुनस्तत्ततो विलक्षणमुपलक्ष्यत इति वचनमात्रेण तत्सत्तां निषेधयेत् तर्हि तदन्यः कुण्डलादिरूपं पर्यायमपि निषेद्धुकामः एकस्मिन्नेव द्रव्येऽनेकक्रियाभेदाद्भेदाभिमानो मन्दमतीनां, न पुनस्ते सुवर्णादिद्रव्यविलक्षणाः केचित्समुपलभ्यन्त इत्यपि प्रतिपादयन् न निवार्यः स्यात्, एकस्य कथमनेकक्रियेति चेत् को विरोधः ?, यथैवातुल्यानां तुल्यकार्यकर्तृत्वमिति, दृष्टे नानुपपन्नमिति चेत् तस्याप्येतदेवोत्तरमिति, कार्यभेदादपि भेदः प्रागुपपादित एव, ननु तथाऽपि देशकालयोरभेदेऽपि रूपरसगन्धस्पर्शाः पर्यायरूपेण भिद्यन्ते ततः कथं तदभेदादभेदसिद्धिः ?, नन्वत एव नैकान्तेनैकरूपलक्षणो नायमभेदः, किन्तु कथंचित्ताग(द्ग)र्भः?, यः पुनरभेदो वस्तुन एकमेव रूपमित्येवंलक्षणः स नेष्यत एवेति तदसिद्धावपि न नः क्षतिः, तर्हि वातातपादीनामपि तदभेदादभेदः स्यादिति चेत् नैतदस्ति, यतः क्वचिद्भिन्नानामपि कथंचित् तादृशः परिणामो भवति येन तदेकक्षेत्राधेयास्तदेकका भवन्ति, (भिन्ना य) तश्च ते भवन्ति तादृशोऽत्र नाङ्गीकृतः, किन्तु शबलरूपस्यैव वस्तुनः कश्चित्स्वभावातिशयः येनास्य देशकालनियम उपपद्यते, ननु देशकालाभेदे तदभेदस्य किं मानं येन तदभेदे तदभेदः स्यात् इति चेत्, कथञ्चिच्चित्ररूपस्य वस्तुनस्तत्स्वभावतया तदाधेयादिभावात् स एवायमत्र देशकालाभेदो यो वस्तुनस्तथाऽऽधेयादिपरिणामः, तस्माद्वस्तुस्वभावातिशय एवायमिति न कश्चिद्दोषः, ननु स्वभावोऽपि यदि द्रव्यपर्याययोः प्रत्येकमनुवृत्तिव्यावृत्तिरूपता तदा पदार्थद्वयं स्यात् घटपटवत्, न त्वेकं द्विरूपमिति, कथं तस्मादभेदसिद्धिः ?, न चानुवृत्तिव्यावृत्तिस्वभावो युक्तः, तयोरनुवर्त्तमानव्यावर्त्तमानाधीनत्वात्, ततश्चानुवर्त्तमानव्यावर्त्तमानयोः स्वभावोऽन्यो वक्तव्यः, ननु अनुवृत्तिव्यावृत्तिव्यावर्त्ता एव स्वभावो, भावत्वेन भवित्रधीनत्वात्, नहि स्मृतिः स्मर्तुः स्वभावो भवति, अनुवृत्तिव्यावृत्त्योश्च स्वभावत्वे लक्षणात्स्वभावस्य भेदो वक्तव्यः, मृदादि-

रूपता स्वभाव इति चेत्, अत्राप्यभेद इति यदि सादृश्यमुच्यते तद्भेद एव संभवति, सादृश्यस्य सदृशाधिकरणत्वात्, ततश्च पदार्थद्वयमेव स्यात्, न त्वेकं द्विरूपमिति, अथैक्यं द्वितीयरूपरहितताऽभेदोऽङ्गीक्रियते कथं तर्हि द्विरूपता ?, रूपशब्देन ह्यत्र स्वभावोऽभिधीयते, तस्य चैक्ये कथं द्विरूपता ?, विप्रतिषिद्धं ह्येतद् एकस्वभावता द्विरूपता चेति, तदेतत्सर्वमयुक्तं, यतो न द्रव्यपर्याययोः प्रत्येकमनुवृत्तिव्यावृत्तिरूपतां प्रतिपद्यामहे, प्रतिनियतस्य द्रव्यपर्यायलक्षणस्य पदार्थद्वयस्य स्वतन्त्रस्य कदाचिदनभ्युपगमात्, एकमेव हि तद्वस्तु अनुवृत्तिप्राधान्येन विवक्षितं तदेव पर्यायव्यपदेशमासादयति, ततः कथं पदार्थद्वयं स्यात्, नहि घटपटत्ववद्द्रव्यपर्यायौ कौचित् स्वतन्त्रौ स्तः, अनुवृत्तिव्यावृत्ती च वस्तुस्वभाव एव युक्तः, तयोरनुवर्त्तमानव्यावर्त्तमानाधीनत्वात्, तदेव वस्त्वनुवर्त्तत इत्यनुवर्त्तमानाकारप्राधान्येन विवक्षितमनुवृत्तिरित्युच्यते, न चानुवर्त्तत एव तद्, अपि तु कथञ्चिद्व्यावर्त्ततेऽपीति, व्यावर्त्तमानाकारप्राधान्येन विवक्षितं तदेव व्यावृत्तिरित्युच्यते इति कथं नानयोर्वस्तुस्वभावता ?, भावो हि भवित्रधीनस्तदैव भवति यदा तद्वस्तुस्वभाव एवायं स्यात्, अन्यथा यद्यनुवृत्तिव्यावृत्ती भिन्ने एव तदा न भावोऽनुवर्त्तते व्यावर्तत्ते वा तदा, तदपरवस्त्वन्तरवत्, समवायादिस्तु सम्बन्धो निराकरिष्यते, न चैवमनुवृत्तिव्यावृत्ती, न ते हि केवले एवास्तां भावत्वेन, भवित्रधीनत्वादेव, न ह्येकमेव रूपं सर्वथा परनिरपेक्षं कस्यचिदधीनं नाम, तस्माद्भावधर्मत्वात्कथञ्चिदेतयोस्तत्स्वभावत्वं, अतत्स्वभावत्वे उत्तरत्र धर्मधर्मिभावस्य निषेत्स्यमानत्वादिति, न हि स्मृतिरपि स्मर्त्तुः स्वभावो न भवतीत्यस्ति, कर्त्तुरेव तद्रूपतया परिणामात्, तद्भेदे तत्स्मर्तृरूपताऽनुपपत्तेः, नापि स्मृतिमात्रमेव स्मर्त्ता, यतो न स्मृतिरेव स्मरति, क्रियारूपत्वादस्याः, आत्मा तु तद्रूपतया परिणमन्नेकानेकस्वभावतयोभयव्यवहारमप्यसंशयं प्रवर्त्तयतीति, अनुवृत्तिव्यावृत्त्योश्च स्वभावत्वेन लक्षणात्, स्वभावस्य भेदस्तदोच्यते यदा वस्तुनो

लक्षणमस्वभावभूतमभ्युपगम्यते, तदतत्स्वभावं तत्तस्य लक्षणमेव न भवति, तर्हि पूर्वं लक्षणभेदाद्भेदोऽभिहितो द्रव्यपर्याययोः इह तु स्वभावाभेदादभेद इति वक्तुं न युज्यत इति चेत्, न, अभिप्रायापरिज्ञानात्, यतः स एव वस्तुस्वभावः शबलैकरूपः धर्मः प्राधान्येन विवक्षितो लक्षणव्यपदेशमासादयति, धर्मिरूपताप्राधान्येन च विवक्षितः स्वभावव्यपदेशं, ततो यदेतत्सुवर्णकुण्डलादि वस्तुरूपमुपलभ्यते तत्स्वभावोऽत्राख्यायते, तस्य चेयमेवाभेदरूपता यन्न कुण्डलाद्याकारानुविद्धा काचित्सुवर्णात्मता, नापि सुवर्णाननुविद्धा काचित्कुण्डलादिरूपतेति तन्नैकान्तेनेदमभेदरूपं भेदरूपं वा कदाचिदिष्यते, किन्तु प्रतिपाद्यानुरोधेन कदाचित्कस्यचिद्रूपस्य गुणीभावः कस्यचित्प्राधान्यभाव इति कर्मवैचित्र्यं, तन्नेच्छा वैचित्र्यनिबन्धनमिति न किञ्चिदनुपपन्नं,तत एकत्वानेकत्वयोर्ययोर्विप्रतिषेधस्तयोर्यत्रैकत्वं तत्र न नानात्वं, यत्र च नानात्वं न तत्रैकत्वमिति युक्तमेव, यत्पुनरेवं शबलरूपमपि प्रतिषिध्यते तन्न साधु, एकानेकात्मनश्चित्रविज्ञानवत्तस्य निषेद्धुमशक्यत्वात्॥

**विज्ञाने स्याद्वादः**–अथ विज्ञानं नीलप्रतिच्छायतयोत्पद्यमानं पीतादिप्रतिभासव्यवच्छेदेन प्रतिविशिष्टं ख्याप्यते, न पुनरस्य स्वभावतो द्वे रूपे स्त इत्युच्यते, तदपि न समीचीनं, यतः केयं नीलप्रतिच्छायता (यया पीतादिप्रतिभासव्यवच्छेदः ?, तस्या विधिरूपत्वात्, किंच–नीलाद्यनेकाकारचित्रे वस्तुनि परस्परप्रतिभासनिवार)णादप्यस्य निराकारताऽनुषज्यते, (द्विरूपताभावे) तु पक्षे चित्रपटपतङ्गादिविषयं विज्ञानं यदि नीलाकारतयोत्पन्नं तर्हि कथं चित्रं वस्तु तेन व्यवस्थाप्येत ?, अथ चित्राकारतयोत्पन्नं तर्हि पीतादिप्रतिभासव्यवच्छेदेन प्रतिविशिष्टं कथं ख्यापयितुं शक्येत ?, केवलं चित्राकाराणामेकस्माद्विज्ञानादव्यतिरेकादेकत्वं, नानात्वे वा तेषां ज्ञाननानात्वप्रसङ्गः, तत्रैकत्वे सति तेषां परस्परपरिहारेण ग्रहणं न स्यात्, भिन्नदेशाः परस्परपरिहारवन्तश्च ते आकाराः संवे-

द्यन्ते तत्कथमेकस्य ते भवेयुः ?,आत्मभूताकाराभेदात्प्रत्ययनानात्वमप्ययुक्तं, एकप्रत्ययानुभवे प्रत्ययनानात्वाभ्युपगमस्यानुभवविरुद्धत्वात् ,यदि च प्रत्याकारं विज्ञानं भिद्येत तत एकसन्ताने प्रतीयमानप्रतिपत्तृभेदप्रसङ्गः, एवं च सति यथा युगपद्बहुभिः प्रतिपत्तृभिः प्रत्येकमनुभूताः संकलय्य चित्राकारा न प्रतिसन्धीयन्ते स्मर्यन्ते वा तद्वदेकसन्तानेऽपि यावन्त आकारास्तावद्भिः प्रत्याकारनियतत्वाद्विज्ञानैर्न सन्धीयेरन्, तस्मात्तच्चित्रस्वभावमेवोपपद्यते, ततो यथा तदेकमनेकाकारं न विरुद्धं तथा किञ्चिद्बाह्यमपीति। अथेत्थमात्थ, यथा बाह्यं वस्तु चित्रमेकं च विरुद्धं, तत्र ह्येको नीलभागः स्थगिते पीतभागे पीतभागाधिके न केवलः शक्यते द्रष्टुं, ततो नीलांशे केवले गृह्यमाणे पीतांशस्त्वगृह्यमाणो व्यतिरिच्यते, न ह्येकस्य ग्रहणमग्रहणं चेति युगपदुपपादयितुं शक्यं, तस्माद्ग्रहणाग्रहणलक्षणविरुद्धधर्मसंसर्गान्न बाह्यात्मकं चित्रमुपपद्यते, अत एवाह—एकं च चित्रं चेत्येतच्चित्रतरं ततः, विज्ञानं चाचित्रमेव स्यात्, तथाहि—नीलादयः सर्वे विज्ञानात्मतया विज्ञानेऽनुभूयमानेऽनुभूयन्ते, न पुनर्नीलभागे गृह्यमाणेऽनीलभागः शक्यते परित्यक्तुं, एकस्मिन् प्रतिभासमाने सर्वेषामात्मतया प्रतिभासनात् ,तस्मात्स्वसंवेदनप्रत्यक्षं न भागविषयं, अपि तु कृत्स्नविपर्य(ष)यमिति न ग्रहणाग्रहणनिमित्तो विरोधः, तथा चोक्तम्—"नीलादिश्चित्रविज्ञाने, ज्ञानोपाधिरनन्यभाक्। अशक्यदर्शनस्तं हि, पतत्यर्थे विवेचयन् ॥१॥" अयं वार्त्तिकार्थः—यो नीलादिश्चित्रज्ञाने प्रतिभासते, कीदृशः ?—ज्ञानोपाधिः—ज्ञानविशेषणो ज्ञानात्मक इतियावत् , स एकैकः,'अनन्यभाक्' विज्ञानादन्यमर्थं न भजते, बाह्यवस्तुसमवेतो न भवति, ज्ञानात्मभूतत्वात् , अत एव पीताकारविवेकेन केवलो नीलभागो न शक्यते द्रष्टुमित्यशक्यदर्शन उक्तः, यदि च नीलभागं पीतभागविवेकेन पश्येत् पश्यन्नपि च विवेचयेत् प्रतिपत्ता पतत्यर्थे, ज्ञानात्मकः प्रतिपत्ता वस्तुन्येव प्रवृत्तो भवति, न त्वात्मभूते, आत्मभूते वा कृष्णनीलादौ प्रवर्त्तेत, न वा क्वचिदपीति,

तदपि न सुन्दरं, स्वसिद्धान्तव्याकोपात्, यथैव हि ग्रहणाग्रहणनिमित्तं विरोधमभ्युपगच्छन्ति भवन्तस्तथा तद्देशत्वातद्देशत्वं तदतत्स्वभावत्वलक्षणमपि प्रसङ्गसाधनादौ विरोधमभ्युपयन्ति, न ह्यन्यथा नानादेशात्रस्थितानेकपिण्डसम्बन्धित्वमेकस्य सामान्यादेः शक्यते निराकर्तुं, अथ यद् यत्र दृष्टं तत्त्रैव समवेतमिति नैकमनेकवृत्ति संभवति, पिण्डानां परिहृतापरापरस्वभावत्वात्, एवं तर्हि परस्परपरिहारेणावस्थानात् नीलादीनामपि नैकत्वं शक्यते वक्तुं, एतेनैतदपि निरस्तं यदुक्तं प्रमाणवार्त्तिकालङ्कारे–'ग्राह्यग्राहकनीलाद्याकारा बुद्धिरेकैव चित्राद्वैतमेवे'ति, यस्मान्नीलमवस्थापयत् प्रमाणं नीलस्य प्रच्युतिं व्यवच्छिनत्ति, नीलप्रच्युतिमत्तया च नीलपरिहारेणावस्थानात् पीतमपि व्यवच्छिनत्ति, यदि हि पीतमपि नीलमेष(मिव) प्रभवेत्तदा स्यादेव ताद्रूप्यनियोगतः पीतमपि नीलमेव सत् प्रत्यक्षसिद्धं, न च नीलात्मना पीतस्य प्रत्यक्षसिद्धता, तत्परिच्छेदे इतराव्यवच्छेदात्, न च परस्परपरिहारवतोरेकत्वमुपपद्यते, विश्वस्यैकत्वप्रसङ्गात्, तत्कुतो नीलं पीतं भवितुमर्हति ?, बुद्धिर्वा चित्रा चित्राभासा,एकबुद्धिनिवेशिनां च परस्परपरिहारवतां चित्राकाराणामचित्राद्भेदो नानुभवे व्यवस्थापयितरि, प्रथमस्थान एव मतिविभ्रमश्चित्राद्वैतवादिनः प्रज्ञाकरगुप्तस्य येनैवमपि वक्तुमध्यवसितं, न च तच्चित्रम्,अचित्राद्भेदेन व्यवस्थापनासम्भवात्, तदेवं विज्ञानमपि चित्रमेकं न संभवति,अथैकानेकरूपव्यवच्छेदेन जात्यन्तरात्मकत्वात् चित्रं, अन्यत्रापि समः समाधिः, अथ शुक्तिकारजतप्रतिभासवद्भ्रान्तोऽयमाकारः, नन्वाकारमन्तरेण प्रतिकर्म व्यवस्था न स्यादित्यभ्युपगमतः सौत्रान्तिकस्यैतद्वक्तुमसाम्प्रतं, तस्य हि शुक्तिकारजतादिप्रतिभासोऽपि ज्ञानाकारनिबन्धनः, योगाचारोऽपि साकारबुद्धिपक्षं कक्षीकुर्वन् कथं भ्रान्तत्वमाकाराणामभिदध्यात् ?, निराकारज्ञानवादिनस्तु युक्तमेतत्, केवलं तत्रानुभवविरोधः, तथाहि–यद्ययमाकारो नान्तर्न बहिस्तर्हि कथमनुभूयते ?, अथेदमेव भेदसंवेदनमभेदे सत्यं भेदे तु भ्रान्तमित्यभिधीयते,

तर्हि तदेव भ्रान्तमभ्रान्तं चेति तत्रापि कथं विरोधः परिहर्त्तुं शक्येत?, तदलमनेनापि प्रपञ्चेनेति, एवं द्रव्यपर्याययोः संमूर्छित-त्वान्नरसिंहवच्छबलरूपवस्तुसिद्धिः,उक्तश्च—"न नरः सिंहरूपत्वान्न सिंहो नररूपतः। प्रज्ञावज्ञातकार्याणां, द्रव्यपर्यायमिश्रता॥१॥" अथोच्येत—नरसिंहस्यापि शबलत्वासिद्धिः, स ह्यनेकपरमाणुसङ्घातरूपः, ते च परमाणवः प्रत्येकं नरसिंहरूपा न भवन्ति, ऊर्ध्वभाग-स्तस्य सिंहरूपोऽधोभागस्तु नररूपः, जात्यन्तरं स एव ततः नरसिंहाभ्यां स्यात्, न शबलरूपः, विचित्रं हि रूपं शबलमुच्यते, विचित्रता च नानास्वभावता, अनानास्वभावत्वे च एकत्वं कुतः? इति, केवलमनेकत्वे बहुष्वेककार्यं दर्पात्सेनादिवदेकव्यवहारदर्शन-कृतोऽयं विपर्यासो जडमतीनामिति, तदेतदप्यविचारितरमणीयं, यतः परमाणूनामतीन्द्रियत्वाद्दर्शनविषयता नोपपद्यते, न चा-गृह्यमाणे दर्शनविषये इमे नीलादयो गुणा ग्रहीतुं शक्यन्ते, तेषां तदायत्तोपलब्धिकत्वात्, न च नीलादयो न गृह्यन्ते, नीलः परिस्पन्दते घट इत्यादिप्रत्ययस्याबाधितस्योत्पत्तेः, परमाणुमात्रे च जगति दर्शनव्यापिनो व्यवहारा विलुप्येरन्, स्यादेतत्—न वयं परमाणुमात्रमनुभवविषयं प्रतिजानीमहे, किन्तु सञ्चितानेव परमाणून्, सञ्चिता अपि त एवोक्ता ये मनस्कारेन्द्रियसम्बद्धा अणवः समर्था जायन्ते, न ह्यप्रत्यासीदन्तः सहकारिप्रत्ययाभावा न कारणानतिशायन्ति, मा भूवन् सर्वथैव विषयोपपत्तेरारभ्य विषयोपकरणे समर्था इति, सर्वदा सामर्थ्ये यत्र तत्र स्थिता एव हेतवः कार्यमुत्पादयेयुः, तस्मादनियतकालं विज्ञानं मा भूत्सर्वदेत्य-र्थान्तराभिसम्बन्धात्समर्था जायन्ते इत्यभिसन्धाय न्यायवादिनाऽभिहितम्-"अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे। उक्तास्ते सञ्चितास्ते हि, निमित्तं ज्ञानजन्मनः॥१॥" तदत्र निरूप्यते—किं परमाणूनां दर्शनविषयमनेन प्रतिपादयितुमभिप्रेतं? किं वा दर्शन-हेतुत्वं?, तत्र यद्यर्थान्तराभिसम्बन्धात्समर्था जायन्ते तदा चक्षुरादय इव ज्ञानमुपजनयेयुः, न पुनरमी दर्शनविषयभावमापद्येरन्

चक्षुरादिवत्, दर्शनविषया वा भवन्तः सर्वे मध्यभागाः परभागाश्च भवेयुः, न ह्येकसामग्र्यधीनजन्मनाऽव्यभिचरितसहभावानां कतिचिदेव प्रत्यक्षा भवन्त्यर्वाचीना नेतर इति प्रमाणेन व्यवस्थापयितुं शक्यं, अथ दर्शनहेतुत्वं न पुनर्दर्शनविषयत्वं प्रतिपादयितुमिष्यते, तदयुक्तं, अनुभवविरोधात्, यतः स्थूल एकोऽनेकोऽवयवव्यापी प्रतीयते, अनेकपरमाणुस्थानसमुदायो वाऽनुभूयते, दर्शनहेतुत्वाभ्युपगमे नानुभवितव्यः कश्चिदस्ति, नापि बुद्धेरेवायमाकारस्तत्राप्याकारवादप्रतिषेधात्, तथा चात्मानं परं वा पश्यद्विज्ञानं विज्ञानमेव न भवतीत्यायातमान्ध्यमशेषस्य जगतः, सत्यपि च तथा बुद्धिसंवेदने वैभाषिकस्य बाह्यार्थानुभवविरोधः, एतेनैतदपि प्रत्युक्तं यदाह–को वा विरोधो बहवः सञ्जातिशयाः भवेयुः कारणं बुद्धेः?, यदि नामात्रापि बुद्धिहेतुतामात्राभ्युपगमः? परमाणूनामनुभवाभाव एव दोषः। काश्मीरवैभाषिकास्तु वर्णयन्ति–परमाणव एव समर्था उत्पन्ना निराकारविज्ञानप्रतिभासिनः, ते च यदि प्रत्येकं प्रतिभासेरन् न चैष स्थूलोऽर्थोऽनुभूतः स्यात्, सहितास्तु प्रतिभासन्ते, तत्र यद्यपि परमाणूनां न स्थौल्यमस्ति तथाऽप्येकस्मिन् गृह्यमाणे निराकरेण विज्ञानेन इतरेऽप्यपरिमिता गृह्यन्ते, तेषु बहुषु सूक्ष्मेषु गृह्यमाणेष्वनेकपरमाण्वात्मकः स्थूल आकारो दृष्टो भवति, न चासौ दृश्यमानानेकपरमाणुरूपः स्थूलस्वभावः परमाणूनां प्रत्येकमस्ति, ततो न वस्तुधर्मः नीलत्वं तत्, दृश्यमानेषु च बहुषु प्रतिभासते ततः प्रतिभासधर्म इत्याख्यायते, तदेवंरूपपरमाणव एव बहवः स्थूलाकारभाज इति नास्ति वैभाषिकाणां स्थूलानुभवविरोध इति, तदपि न चतुरस्रं, विकल्पानुपपत्तेः, अयं खलु प्रतिभासधर्मो बौद्धोऽभ्युपगन्तव्यो वास्तवो वा?, न बौद्धः स्थूलाकारो निराकारत्वाद्बुद्धेः, न परमाणोः प्रत्येकमभावात्, समुदायस्य भविष्यतीति चेत् नैतदस्ति, समुदायिभ्योऽन्यः समुदाय एकघनरूपो ह्यर्थः स्थूलः शक्यते व्यपदेष्टुं, न च परस्परविविक्तानेकपरमाणुप्रतिभासने एकघनताऽस्ति, अन्तरालस्यापि प्रतिभा-

Vibhāṣā?

सनात्, अथान्तरालं न प्रतिभासते तर्हि न विविक्ताः परमाणवः प्रतिभासिताः स्युः, विविक्तानवभासनेन च विविक्तदेशा गृहीताः स्युः, नाप्येकविज्ञानग्राह्या बहवः परमाणवः स्थूलाकारभाजः प्राग्विज्ञानोत्पत्तेः, स्थूलाकाराभावप्रसङ्गात्, उत्पत्तेः प्रभृति खल्वयमणुसंयोगादामः कुम्भः अग्निसंयोगाच्च पक्वः स्थूलात्मक एक एवावतिष्ठते, न चैतत्प्रतिभासधर्मत्वे संगच्छेत, तस्माद् यथाप्रतिभासं स्वहेतुभ्यः स्थूलोऽक्षणस्थायी एकदर्शनविषयः सर्वदृष्टिसाधारणः परमाणुभ्योऽवयवी जायत इति वैभाषिकैस्तावदवश्यमभ्युपगन्तव्यं, न पुनरयमिन्द्रिजालप्रकारः प्रकाशधर्म एव, स्यादेतत्, प्रतिभासधर्मानभ्युपगमे भवद्भिरपि रथ्यासु प्रकीर्णकेशकलापः पललपिण्डो वा कश्चित्स्थूलः कथं शक्येत व्यवस्थापयितुं ?, नहीमेऽवयविनो भवद्भिरभ्यनु(ज्ञाता एव स्थूला भवन्ति), द्रव्यान्तरानारम्भात्, नैष दोषः गृह्यमाणपृथक्त्वपरिणामानां, अगृह्यमाणे पृथक्त्वपरिणामे च न प्रत्ययवदस्यापि संयोगेन (एकरूपता व्यवस्थापयितुं शक्यते, न चागृह्यमाणेऽपि पृथक्त्वपरिणामे सादृश्येन स्थूलद्रव्यप्रतीतिः) यतो नहि सजातीयैरेवारब्धद्रव्यमित्यस्ति नियमः, कथञ्चिद्विजातीयानामपि सादिपरिणामिकसामर्थ्येन कदाचित्तद्भावसिद्धेः, न च शक्यमेतद्वक्तुं यथाऽस्माकमप्ययं स्थूलोऽनुभवो भ्रान्त इति, तस्य हि भ्रान्तत्वे तथाऽध्यक्षानुभवनिबन्धनोऽन्योऽर्थः कश्चिदभ्रान्तोऽङ्गीकर्त्तव्यो, न ह्यसति जले मरीचिकादौ जलोल्लेखितया भ्रान्त्याऽपि प्रत्यक्षप्रवृत्तिः, न च स्थूलानुभवं भ्रान्तं कल्पयद्भिरन्यदभ्रान्तमिन्द्रियविज्ञानं वैभाषिकैः सौत्रान्तिकैर्वा कल्पयितुं शक्यं, अननुभवात्, न हि शपथशतैरपि विशकलिताः परमाणवः प्रत्यक्षे प्रतिभान्तीति कश्चित्प्रत्येतुं शक्तः, तदभावादनुमानमपि यत्स्थूलं तत्सूक्ष्मपूर्वकमिति तत्सत्तां(न)साधयति, तस्माद्यत्संनिवेशी स्थूलाकारोऽयं तदस्ति किञ्चिदवयवि द्रव्यं, तच्च यथाऽस्ति तथोपपादितं प्राक्, तस्माद्भागविषयं प्रत्यक्षं न भवति, अपि तु स्थूलाकारविषयमेव, अत्र प्रयोगः—यद् यत्र न प्रति-

भाति न तत्तद्विषय, यथा चक्षुर्विज्ञानं न गन्धादिविषयं, न प्रतिभाति चेन्द्रियविज्ञाने परमाणवः, नायमसिद्धो हेतुः, दृश्यमानस्य स्थूलाकारस्य परमाणुस्वभावात्, सपक्षे भावान्न विरुद्धः, नाप्यनैकान्तिकः, स्थौल्यस्य प्रतिभासधर्मप्रतिषेधात्, इह तद्विषयत्वव्यवहारस्तत्प्रतिभासमात्रनिबन्धनः, तेन व्याप्तेः, व्यापकस्य विरुद्धमप्रतिभासनमस्ति परमाणूनां, अतो व्यापकविरुद्धोपलब्धिः, ततो यद्यथा प्रतिभासते तत्तथैवाभ्युपगन्तव्यं, यथा कुवलयं नीलरूपतया विराजत्तेनैव रूपेण, अवभासते चैकघनाकारतया कथञ्चिन्नरसिंहादीति, ततो यद्यप्यूर्ध्वभागः सिंहरूपोऽधोभागश्च नररूपस्तथाऽपि जलानिलादिवत्तावैकान्तिकं भेदं न प्रतिपद्येते, किन्तु कथञ्चिदेकाकारतामादधानाववभासेते, तथाऽनुभवसिद्धत्वाद्, अप्रतिक्षेप्यमिदं जात्यन्तरमत एवैतच्चित्रं,चित्रताव्यवहारो ह्येकत्वानुविद्धे नानात्वेऽत्र प्रसिद्धः, नहि सर्वथा नानाभूतान्येव वस्तून्युपलभ्य चित्रमेतदिति व्यवहारं कदाचनापि व्यवहारिणः प्रवर्त्तयन्ति, तस्माद् विचित्रं हि रूपं शबलमुच्यते, विचित्रता च नानास्वभावता, नानास्वाभाव्ये चैकत्वं कुतः ? इति प्रलापमात्रमेव परस्य, यतः कथञ्चिन्नानास्वाभाव्ये यदि सर्वथैकत्वं प्रतिषिध्यते तदा सिद्धसाध्यता, कथञ्चिदेकत्वं चानेन प्रतिषेद्धुमशक्यं, विरोधाभावात्, इति अन्यथा शबलरूपवस्तुव्यवस्था अन्यथा च दूषणमार्गः, तथा केवलमनेकत्वे बहुष्वेककार्यदर्शनात्सेनादिवदेकव्यवहारदर्शनकृतोऽयं विपर्यासो जडमतीनामित्यपि परस्यैव जडमतित्वं ख्यापयति, यतः शक्तिर्यस्य भावलक्षणा तस्य बहुष्वेककार्यदर्शनमतीव दुर्घटं,भिन्नशक्तित्वेन कार्यनानात्वानुषङ्गात्, न हि सर्वथा निरंशैकभावस्य कार्यस्य सर्वथा विभिन्नस्वभावेभ्यः कारणेभ्यः कथञ्चिदप्युत्पत्तिः साधीयसीति साधितं, तस्माद् यद्यथा प्रतीयन्ते तथैवाभ्युपगन्तव्याः, सेनादयोऽपि तर्हि कथं नैवमभ्युपगम्यन्ते ? इति चेत् एकशब्देनाभिधीयमानानामेकाभिधानाभिधेयतयैकपरिणामात्, ये ह्येकघनाकारतापरिणताः प्रतिभासन्ते ते तथाऽभ्युपगन्तव्याः, ये

त्वेकाभिधानपरिणतास्ते तथेति सर्वं साधु, एवं शबलरूपे वस्तुनि व्यवस्थापिते एतदपि सर्वं प्रतिक्षिप्तप्रायमवगन्तव्यं, यदुक्तं परैर्यथा–"द्रव्यपर्यायरूपत्वात्, द्वैरूप्यं वस्तुनः किल। तयोरेकात्मकत्वेऽपि, भेदः सञ्ज्ञादिभेदतः ॥१॥ इन्द्रियज्ञाननिर्भासि, वस्तुरूपं हि गोचरः। शब्दानां नैव तत्केन, सञ्ज्ञाभेदाद्विभिन्नता ? ॥२॥ परमार्थैकतानत्वे, इत्यादिवचनात्तथा। शब्देनाप्रत्यक्षस्य, बुद्धावप्रतिभासनात् ॥३॥ अर्थस्य दृष्टाविव तच्छब्दाः कल्पितगोचराः। कल्पितस्यैव तद्भेदाः, सञ्ज्ञाभेदाद्भवेद्यदि ॥४॥ व्यावृत्तिभेदः कश्चित्स्याद्वस्तुनो न कथञ्चन। सङ्ख्याभेदोऽपि नैवान्यो, मतो वचनभेदतः ॥५॥ ततोऽपि कल्पितस्यैव, कथञ्चित्स्याद्विभिन्नता। येषां वस्तुवशा वाचोऽनुमितत्वात्प(देष्वपि) ॥६॥ षण्णां वचनभेदादि, चोद्यं तान् प्रति युक्तिमत्। (विवक्षातो भेद ए)व,द्रव्यादेर्नतु वस्तुनः ॥७॥ अविनाशोऽनुवृत्तिश्च, व्यावृत्तिर्नाश उच्यते। द्रव्याविनाशे पर्याया, नाशिनः किं तदात्मकाः ? ॥८॥ नष्टाः पर्याया रूपेण, ते च द्रव्यस्वभावतः। किमन्यरूपता तेषां ?,न चेन्नाशस्तथा कथम् ? ॥९॥ द्रव्यात्मनि स्थिते पश्चाद्भवन्तश्च तदात्मकाः। विरुद्धधर्माध्यासेऽपि, केन भूतं च किञ्चन ?॥ १० ॥ पर्यायास्तत्र कल्प्यन्ते, भेदरूपं यदीष्यते। भिन्नं पर्यायरूपं हि, द्रव्यरूपाद्भवेद्यदि ॥११॥ तदैतत्स्यादभेदे तु, नैतत्संगच्छते वचः। एकजातमजातं च, नष्टानष्टं प्रसज्यते ॥११॥ द्रव्यपर्याययोरेकस्वभावोपगमे सति। ततो लक्षणभेदेन, तयोर्नैव विभिन्नता ॥१२॥ कार्यभेदात्स्वभावस्य, तयोर्भेदो भवेद्यदि। स्वभावाभेदतो न स्यादभेदस्तु तथा सति ॥१३॥ स्वभावस्यैव भेदेन, किं भेदश्च कीर्त्तितः ?। नहि पश्चाद्भवन् भेदः, कार्याणां तस्य भेदकः ॥१४॥ स्वभावस्याविकार्यत्वान्नाशहेतोरयोगतः। एकान्तेन विभिन्ने च, ते स्यातां वस्तुनी न च ॥१५॥ तयोः केन विभिन्नाभ्यामभिन्नस्य विभेदतः। तेषामभेदसिद्ध्यर्थमभिन्नो यदि कल्प्यते ॥१६॥ अन्यस्वभावस्यापि तदभेदपरिसिद्धये। कल्पनीयः स्वभावोऽन्यस्तथा

स्यादनवस्थितिः ॥१७॥ न चानन्तस्वभावत्वमर्थसामर्थ्यभाविनि। ज्ञानेऽवभासते येनास्य तथोपगमो भवेत् ॥१८॥ ऐकान्तिकश्च भेदः स्यादभिन्नाद्भिन्नयोर्यदि। भेद एव विशीर्येत, तदेकाव्यतिरेकतः॥१९॥ अभेदस्यापरित्यागे, भेदः स्यात् कल्पनाकृतः। तस्यावितथभावे वा, स्यादभेदे मृषाऽर्थता ॥२०॥ अन्योऽन्याभावरूपाणामपराभावहेतुकः। एकभावो यतस्तस्मान्नैकस्य स्याद्विरूपता ॥२१॥ अन्योऽन्याभावरूपाश्च, पर्यायाः स्युर्न भेदिनः। तद्विनाशेऽविनाशि स्यात्, द्रव्यं वा कथमन्यथा ? ॥ २२ ॥ कूटस्थनित्यता द्रव्ये, भेदेषु क्षणनाशिता। कस्मान्नेष्टा ? विरोधाच्चेन्नेष्यते भेदलक्षणम् ॥ २३ ॥ तदिष्टौ किं न सामान्यं, सर्वव्यक्त्यनुयायि च। एकमिष्टं जनन्या च, जायायाः किं न चैकता ? ॥२४॥" तदेद्यथोदितन्यायाद्भेदाभेदाभ्युपगमे क्वोपयोगि ?, शब्दाश्च केचिद्वस्तुनस्तथाऽभिधेयपरिणामाधीनवृत्तय इत्युक्तं, ततः कथं सञ्ज्ञादिभेदात्कल्पितस्येव भेदः स्यादिति ?, यद्यप्यविनाशोऽनुवृत्तिर्व्यावृत्तिश्च नाश उच्यते तथाऽपि नानुवृत्तिरेकान्तेनानुवृत्तिरेव, अपि तु व्यावृत्तिरपि, व्यावृत्तिरपि नैकान्तेन व्यावृत्तिरेव, अपि त्वनुवृत्तिरपि, परस्परपरिहारवतोरेतयो रूपयोः कदाचिदभावात्, संमूर्छितं हि रूपमनुवृत्तिप्राधान्येन विवक्षितं द्रव्यमित्यभिधीयते, व्यावृत्तिप्राधान्येन विवक्षितं तदेव पर्यायव्यपदेशमासादयतीति तन्न किञ्चित्प्रतिनियतं द्रव्यमस्ति यदविनाशि, नापि प्रतिनियताः केऽपि पर्याया विनाशिनः, ततो 'द्रव्याविनाशे पर्याया, नाशिनः किं तदात्मका' इत्याद्यसम्बद्धमेव, केन चेदमत्यन्तसुहृदा भवतो निवेदितं यथा द्रव्यात्मनि स्थिते केऽपि पर्यायाः स्वतन्त्राः पश्चाद्भवन्तस्तदात्मानो भवन्ति ?, न खल्वेवमस्ति, अपि तु तदेव द्रव्यं तथा भवति परिणामिस्वभावत्वात्, ततः को नामात्र विरुद्धधर्माध्यासः ?, एकान्तेनैकरूपं च तत्सर्वदा नोपलभ्यत इति पर्यायास्तत्र कल्प्यन्ते, ऐकान्तिकतन्नानात्वानुपलक्षणाच्च तद्द्रव्यात्मकास्त इत्युच्यते "एकं जातमजातं च, नष्टानष्टं प्रसज्यते।" इति स्याद्वादनीत्या द्रव्यपर्या-

यथोक्तन्यायेनैकस्वभावतानुपगमे सत्यदूषणमेव, ततो लक्षणभेदेन तयोः कथं न भिन्नता?, कार्यभेदात्स्वभावस्य भेदे तयोस्तदभेदो न स्याद् यदि यथोक्तन्यायेनायं न व्यवस्थाप्येत, अत एव स्वभावस्यैवाभेदेनेत्याद्यनिरूपिताभिधानं, न च स्वभावस्यादिकार्यत्वं प्रमाणोपपन्नमिति निर्णीतं, अतः कथमेकान्तेन विभिन्ने ते वस्तुनी स्यातां?, स च–'तयोः केन विभिन्नाभ्यामभिन्नस्याविभेदतः।' इति हि तदा दूषणं यदा पृथग्वस्तुरूपौ कौचिद्द्रव्यपर्यायावभ्युपगतौ स्यातां,शबलरूपस्य तु तथाभावव्यवस्थायामनवसरमेतत्,अन्योऽन्यावस्थाप्यत(नुन)ये चानवकाशाः, यद्यपि यथा दोषाभिसन्धिर्भवेत्तथा नानन्तस्वभावत्वमर्थसामर्थ्यभाविनि विज्ञानेऽवभासते तथाऽपि यथाऽस्माकमभ्युपगमस्तथा तत्त्रावभासत एव, यद्यवभासमपि प्रमाणयति भवांस्तदा कोऽयमपरः शुष्कतार्किकप्रयासः? 'ऐकान्तिकस्त्वभेदः स्यादि'त्यादि, अत एवानवकाशं, न चैवं शबलरूपे वस्तुनि अभेदस्यापरित्यागेऽपि भेदः कल्पनाकृतो भवितुमर्हति, तस्यैकान्तिकस्याभावात् , अत एव तादृशस्य तस्य भावेऽपि नाभेदे मृषार्थता,अभेदस्याप्येकान्तेनाभावात् , न चात्यन्तमन्योऽन्याभावरूपा एव पर्यायाः, तद्द्रव्यात्मकत्वेन तेषामन्योऽन्याभावरूपतायाः कथञ्चिदभावात्, अत एव तेऽपि नात्यन्तभेदिनः, न च तद्विनाशे विनाशि द्रव्यं, विनाशिरूपानुवेधेनैव वस्तुनः परिणामित्वोपपत्तेः, यत एव विरोधो भेदलक्षणं अत एव कूटस्थनित्यता द्रव्ये भेदेषु च क्षणनाशिता च नेष्टा, तथाहि–यदि वस्तु व्यावर्त्तमानमुपलभ्यते तदन्वयेनैकान्तिकेन विरुद्धमिति न कूटस्थनित्यता, तथा तदेव सर्वथा व्यावर्त्तमानमपि नोपलभ्यते, किन्त्वभूतपर्यायतया परिणमदेवेति भेदेषु क्षणनाशितैव नात्यन्तं, सर्वथा तदव्यावृत्त्योपलभ्यमानया सहास्याः सर्वथा क्षणनाशितया विरोधात् , शबलरूपे तु जात्यन्तरात्मके न कश्चिद्विरोधः, यथा चैकं सामान्यं सर्वव्यक्त्यनुयायिनैयायिकादिभिरिष्यते तथा तत्र विरोधः परिहर्तुमशक्य इति कथं तदेष्टव्यं?, यश्चात्यन्तविरोधभीरुतया 'भीतो भयानि

पश्यती'ति न्यायमवलम्बानः सन् यथोक्तन्यायाच्छबलरूपं वस्तुतत्त्वं न प्रतिपद्यते तस्य जनन्या जायायाश्चैकता, न ह्यसौ जननी जायाऽभावात्मिकां जायां वा जनन्यभावात्मिकां प्रतिपत्तुमर्हति, सदसद्रूपयोः परस्परपरिहारवतोरेकत्राभावात्, भावमात्रमभावमात्रं वा तत्त्वं स्यात्, अथ सर्वे भावाः स्वस्वभावव्यवस्थितयो नात्मानं परेण मिश्रन्तीत्यङ्गीक्रियते तदेतत् सदसद्रूपवस्तुव्यतिरेकेण दुरुपपादमित्युपपादितं, उक्तश्च–"अयमेवेति यो ह्येष, भावे भवति निश्चयः। नैष वस्त्वन्तराभावसंवृत्त्यनुगमादृते ॥१॥ नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमं विना। ज्ञानं न जायते किञ्चिदुपष्टम्भविवर्जितम् ॥२॥" एतच्च विरोधभयात् परैरशक्यमभ्युपगन्तुमिति जनन्या जायायाश्च किं नैकताऽस्य ?, अथोपाधिभेदेऽपि वस्त्वन्तराभावात् न विरोधोऽत्र, तदेतत् समानमन्यत्रापि, यत्पुनः "भेदाभेदोक्तदोषाश्च, तयोरिष्टौ कथं न वा ?। प्रत्येकं ये प्रसज्यन्ते, द्वयोर्भावे कथं न ते ? ॥१॥" इत्याशङ्क्यं तत्समाहितं "गुडश्चेत् कफहेतुः स्यान्नागरं पित्तकारणम्। प्रत्येकमनयोर्दोषा, नौषधे ते द्वयात्मके ॥१॥" इत्यनेन। यत्पुनरत्रापि प्रतिविहितं–"प्रत्येकं यन्निदानं यत्स्वतो भिन्नं तदात्मकम्। किं न दृष्टं ?, यथा माषः, स्निग्धोष्णः कफपित्तकृत् ॥१॥ शक्त्यपेक्षं च यत्कार्यं, गुणमात्रानिबन्धनम्। सर्वत्राभावतस्तासां, कस्यचित्किञ्चिदेव हि ॥ २ ॥" इति, तदसाधीयः, यतो गुडनागरे गुडमाधुर्यशक्तिर्नागरतीव्रताशक्त्या प्रतिहन्यते, नागरतीव्रताशक्तिश्चेतरया, ततः प्रत्येकपरिणतद्रव्यद्वयापेक्षया तदन्योऽन्यानुबन्धे गुडनागरसञ्ज्ञितं जात्यन्तरं तदुपतिष्ठते, जात्यन्तरात्मकत्वे च तस्य तज्जन्मा दोषो न भवति, माषे तु स्निग्धशक्तिर्नोष्णशक्त्या प्रतिहन्यते, शीतशक्त्यैव विरोधोपलम्भादुष्णशक्तेः, एवं स्निग्धशक्त्याऽपि नोष्णशक्तिः प्रतिहन्तुं शक्या, ततो यदि माषः स्निग्धोष्णः कफपित्तकृत् स्यात् तदा किमनिष्टमापादितमस्माकं ?, यतः स्वभावभेदनिबन्धनमेतज्जात्यन्तरत्वं, न चात्र स्वभावभेद इति, 'शक्त्यपेक्षं च तत्कार्य'मितीच्छता माषस्य

कफपित्तकृत्त्वमुपलभ्य चित्रयोगिशक्तियोगित्व स्वयमेव देवानांप्रियेणाभ्युपगतं भवतीति किमस्माकमेवमप्यनिष्टमजनि?, किञ्च–“कटुकाकटुकः पाके, वीर्योष्णश्चित्रको मतः। तद्वद्दन्तीप्रभावात्तु, विरेचयति सा नरम् ॥१॥” तथा–“कषायमधुरं ग्राहि, वातघ्नं लघुदीपनम्। स्निग्धोष्णं दाडिमं हृद्यं, श्लेष्मपित्ताविरोधि च ॥१॥ किञ्चिदम्लं तु सङ्ग्राहि, किञ्चिदम्लं भिनत्ति च। यथा कपित्थं सङ्ग्राहि, भेदि चामलकं तथा ॥२॥ मूत्रोन्मिश्रा यन्त्रितात्मा हरिद्रा, सात्मीकुर्वन् हन्ति मासेन कुष्ठम्। तद्वत्पेयश्चित्रकः श्लक्ष्णपिष्टः, पिप्पल्येव पूर्ववन्मूत्रयुक्ता ॥३॥” इत्याद्यभिधीयते विद्वद्भिः, तथा च द्रव्यशक्तिवैचित्र्यं दृष्टमपलपितुमशक्यमेव, अथ–“विरोधसंनिधेर्दोषस्तज्जन्मा न भवेदपि। सति तस्मिंस्तदात्मा तु, नानिष्टोऽपि निवर्त्तते ॥१॥” तदपि न साधु, यतः–यद्यैकान्तिकः कश्चिदभेदो भेदो वा स्यात्तदा तयोरेकवस्तुताऽऽपादाने तदात्मनो दोषस्य संभवः, यदा त्वेतदीदृशमेव जात्यन्तरं तदैवमसमीक्षितमभिधानं कथं न स्यात्परस्येति, “भागा एव हि भासन्ते, संनिविष्टास्तथा तथा। तद्वान् कश्चित्पुनर्नैव, निर्भागः प्रतिभासते ॥१॥” इति तु प्रतीतिविरुद्धं, केवलभागानां कदाचिदनुपलब्धेः, “अन्योऽन्यप्रत्ययापेक्षास्ते तथास्थितमूर्त्तयः। कर्मणां चापि सामर्थ्यादपि निर्भागवर्त्तिनः ॥१॥ यन्निवेशेन ये भावाः, प्राणिनां सुखदुःखदाः। कर्मभिर्जनितास्ते हि, तेभ्य एवाविभागिनः ॥१॥”इति प्रत्यक्षप्रतीयमानार्थप्रतिपादनपरं वचः, भागभागिनोरन्यानन्यत्वमेव प्रकाशयदस्मत्पक्षमेव पुरस्करोति, अत एव–“ते चैकशब्दवाच्याः स्युः, कथञ्चित्तत्त्वभेदिनः।” इत्यपि नो नो बाधायै, न च स्वलक्षणज्ञाने शब्दार्थः प्रतिभासते ‘अस्पष्टरूपा गम्यंते, शब्देभ्योऽपि त एव हि। ततः केन सहैषां स्याद्, भिन्नाभिन्नत्वकल्पना? ॥१॥” इति तु न युक्तं, कथञ्चिच्छब्दस्यैकवस्तुविषयत्वोपपादनात्, न चैकान्तनिर्विभागस्य कस्यचिदेकान्तिकानेकभिन्नदेशांशयोगिता, ततः–निर्विभागस्य चानेकभिन्नदेशांशयोगिता। कथमिष्टा?, प्रतीते-

श्चेत् क्षणध्वंसानुभाविनः पर्याया: स्थेमानं दधतां अतः येनैवमुच्यते इति तज्ज्ञाः–एकान्तिकावनन्यत्वाद्भेदाभेदौ तयोर्ध्रुवम्। अन्योऽन्यथा तयोर्भेदो, नियतो धर्मधर्मिणः ॥१॥ तयोरपि भवेद्भेदो, यदि येनात्मना तयोः। पर्याया द्रव्यमित्येतद्, यदि भेदस्तदात्मना ॥२॥ भेद एव तथा च स्यान्नैवैकस्य द्विरूपता। द्रव्यपर्यायरूपाभ्यां, न चान्योऽस्तीह कश्चन ॥ ३ ॥ स्वभावो यन्निमित्तः स्यात्तयोरेकत्वकल्पना (भिन्नत्वे तस्य न स्यात्तुतयोरेकत्वकल्पना) ॥४॥ ततस्तयोरभेदे हि, स्वात्महानिः प्रसज्यते। तस्य भेदोऽपि ताभ्यां चेद्यदि येनात्मना च ते ॥५॥ भेद एवाथ तत्रापि, तेभ्योऽन्यः परिकल्प्यते। तेषामभेदसिद्ध्यर्थं, प्रसङ्गः पूर्ववद्भवेत् ॥६॥ धर्मित्वं त्वंत(तस्य नैव)स्यात्, तत्तत्रत्वात्तदन्यया। न चैवं गम्यते तेन, वादोऽयं जाल्मकल्पित ॥७॥" इति यदुक्तं तदपि सर्वमनवसरमेव, जात्यन्तरात्मकभेदाभेदाभ्युपगमात्, अत एवोक्तम्–"नाभेदो भेदरहितो, भेदो वाऽभेदवर्जितः। केवलोऽस्ति यतस्तेन, कुतस्तत्र विकल्पनम् ? ॥१॥ येनाकारेण भेदः किं, तेनासावेव किं द्वयम् ?। असत्त्वात्केवलस्येह, सतश्च कथितत्वतः ॥२॥ ततश्च तत्प्रमाणेन, गम्यते ह्युभयात्मकम्। अतोऽपि जातिमात्रं तदनवस्थादि दूषणम् ॥ ३ ॥ एवं ह्युभयदोषादिदोषा अपि न दूषणम्। सम्यग्जात्यन्तरत्वेन, भेदाभेदप्रसिद्धितः ॥४॥ एवं शबलरूपेऽस्मिन्, व्यावृत्त्यनुगमावपि। स्याद्वादनीतितः सिद्धौ, तथाऽनुभवसुस्थितौ ॥५॥ इत्थं प्रमाणसिद्धेऽस्मिन्, विरोधोद्भावनं नृणाम्। व्यसनं धीजडत्वं वा, प्रकाशयति केवलम् ॥६॥" तदेवमलं दुर्मतिस्पन्दितेष्वत्यादरेणेति। इहान्वयविचारादभेद एव यद्यपि प्रस्तुतः तथाऽपि जात्यन्तररूपं तं प्रकाशयितुं भेदोऽपि निरूपित इति तस्माच्छबलरूपभावादनेकान्तसिद्धिः, एवमनभ्युपगमे त्वनेकदोषोपनितपातसम्भवः, आह च—

सुखदुःखादिसम्बन्धो, युज्यते कथमन्यथा ?। व्यर्थः श्रमस्ततोऽन्येषां, दुस्तर्काकुलचेतसाम् ॥२४॥

यदि नानेकान्तस्तदा सुखदुःखादिसम्बन्धः कथं युज्यते ?, तस्य तद्रूपपरिणामव्यतिरेकेणान्यस्यासम्भाव्यमानत्वात्, तथाहि– यदाऽऽत्मा तत्पर्यायरूपतया परिणमति तदा ते तस्य युक्ताः, यदा त्वयं कूटस्थनियतामाबिभ्रदेवास्ते तदा तदन्यात्मन इव ते तस्य न स्युः, प्रयोगः–यः सुखादिरूपेण न परिणमति न तस्य सुखादयः, यथा विवक्षितादात्मनोऽन्यस्य, न परिणमति च तद्वत्तयाऽभिमत आत्मा सुखादिरूपेणेति व्यापकानुपलब्धिः, ननु यदि तद्रूपतापरिणामेन व्याप्तास्ते कदाचिदुपलभ्येरन् तदा तन्निवृत्तौ ते तस्य निवर्त्तेरन्, न चैतदस्ति, तत्कथमेतत्साधनं साधीयः ?, एतदसत्, यतः सुखदुःखादिकाले किञ्चिदनुग्रहोपघातायात्मनः कथञ्चिदात्मभूतमुपजायते न वा ?, यदि जायते सिद्धः परिणामः, न जायते चेन्नाकाशादेरात्मान्तराद्वा आत्मीयपूर्वावस्थातो वाऽस्य विशेष इति यथैव तदैकस्वभावनियतमाकालमपि तथैव स्यात्, तथाहि–सुखं दुःखं चेति विकाराविमौ नित्यस्यात्मनो न संभवतः, अथोच्येत–नित्यस्य हि स्वरूपविनाशः स्वरूपान्तरोत्पादश्च विकारो नेष्यते, गुणनिवृत्तिर्गुणान्तरोत्पादश्चाविरुद्ध एव, तदत्रापि वाच्यं, नित्यस्य सुखदुःखाभ्यां किं क्रियते ?, स्वविषयोऽनुभव इति चेत् नन्वेकान्तेनाविचलितैकस्वभावस्याकाशादेरिवानुभवोऽपि कथमिति चिन्त्यं, किञ्च–अनुभवे सत्यप्यस्यातिशयानतिशयरहितस्य क उपकारः ?, तथा च सति सत्यप्यस्मिन् सुखदुःखभोक्तृत्वमनुपपन्नमिति धर्मधर्मिणोः कथञ्चित्स्वरूपाभेद एवेति निर्णेष्यामः।

**समवायनिरासः**–समवायस्तत्सम्बन्ध इत्यपि वार्त्तं, समवायग्राहकप्रमाणाभावात्, प्रमाणमन्तरेण प्रमेयव्यवस्थानुपपत्तेः, यदि हि समवायग्राहकं किमपि प्रमाणं भवेत् तदैते सुखादयो गुणा भिन्ना अपि सन्तः कथञ्चित्तत्सम्बन्धित्वेन व्यवस्थापयितुं शक्येरन्नपि, न चैतदस्ति, तथाहि–तद्ग्राहकं प्रत्यक्षं वा भवेद् अनुमानं वा ?, न तावत्प्रत्यक्षं, यत 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान-

मव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्ष'मिति प्रत्यक्षलक्षणं भवद्भिर्व्यावर्ण्यते, तत्रापि संयोगाद्द्रव्यग्रहणं १ संयुक्तसमवाया-द्गुणग्रहणं २ संयुक्तसमवेतसमवायाद्गुणत्वग्रहणं ३ समवायाच्छब्दग्रहणं ४ समवेतसमवायाच्छब्दत्वग्रहणं ५ विशेषणविशेष्यभावाद-भावग्रहण५मिति षोढा सन्निकर्षः, ततः समवायग्रहणनिबन्धनमत्र नैकमपि प्रकारं पश्यामः, समवाये कस्यचित्संयोगाभावात्, द्रव्य-योरेव संयोग इत्यभ्युपगमात्, नापि समवाये समवायोऽपि कस्यचिदभ्युपगतः, विशेषणविशेष्यभावश्च संयोगसमवायादिनिमित्त एवोपलब्धः, तथाहि–दण्डी देवदत्त इति संयोगाद्विशेषणविशेष्यभावः प्रवर्त्तते, नीलमुत्पलमिति च समवायात्, अघटं भूतल-मित्यादौ संयोगादिनिरपेक्षोऽपि विशेषणविशेष्यभावो दृष्ट इति चेत् तर्हि द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणानां षण्णां पदा-र्थानां कतमोऽयं?, अथायमपर एव कश्चित् सप्तमः पदार्थस्तर्हि षट्पदार्थव्यवस्था विलुप्येत, अथ धर्मैर्विना धर्मिणामेष निर्देशः कृत इति वचनाद्धर्मिरूपा ये ते षडेव, धर्मरूपास्तु तदपरेऽपि सन्तीत्यभिधीयेत तर्हि स विशेषणविशेष्यभावोऽपि तयोः संबद्धः स्यादसम्बद्धो वा?, यद्यसंबद्धस्तदाऽसौ न तयोः, तदन्यपदार्थान्तरवत्, अथ सम्बद्धस्तर्हि तत्रापि सम्बन्धान्तरं कल्पनीयं, ततः सोऽपि तदपेक्षया धर्मी संवृत्त इति धर्मैर्विना धर्मिणामेष निर्देश इत्यपि प्लवते अनवस्था च गगनतलावलम्बिनी धूमलतिकेव प्रसरन्ती दुर्निवारा संप-द्यत इति तन्न विशेषणविशेष्यभावः कश्चित्स्वतन्त्रः सम्बन्धः, तदभावान्नायमध्यक्षगम्यः, न चायं धर्मी अयं धर्मः अयं चैतत्सम-वाय इति त्रितयमक्षप्रभवे विज्ञाने कदाचिच्चकास्ति, समवायसौक्ष्म्याद्विवेकानुपलक्षणमिति चेत्तर्हि विवेकः कथमवस्थापनीयः?, यथाप्रतिभासं वस्तुव्यवस्थायां परिणामनिबन्धन एवायमापनीपद्यते, विवेकानुपलक्षणं च भ्रान्तं तदोदीरितुं शक्यते यदा समवायः क्वचिदध्यक्षेण विवेकवोऽवगम्येत, अनुमानादयमवगम्यत इति चेत् तथाहि–इह तन्तुषु पट इति प्रत्ययः सम्बन्धनिबन्धनः, अबा-

धितेहप्रत्ययत्वात्, यो योऽबाधितेहप्रत्ययः स स सम्बन्धनिबन्धनः, यथेह कुण्डे दधीति प्रत्ययः, तथा चेह तन्तुषु पट इति प्रत्ययः, तस्मात्सम्बन्धनिबन्धनः, इह ग्रामे वृक्षा इति भ्रान्तप्रत्ययनिराकरणार्थमबाधितग्रहणं, तथा सामान्येन सम्बन्धनिबन्धनत्त्वे साध्ये नानन्वयदोषः, सामर्थ्याच्च विशेषसिद्धिरिति, एतदप्यसत्, एवंविधानां कल्पनाज्ञानानां वस्तुव्यवस्थापकत्वायोगात्, न ह्यसंबद्धलिङ्गादुदयतामनुमानानां प्रामाण्यमुपपत्तिमत्, अन्यथा स श्यामस्तत्पुत्रत्वात् प्रत्यक्षोपलक्ष्यमाण(तदन्य)पुत्रवदित्यादेरपि प्रामाण्यं स्यात्, बाधितत्वान्नेति चेत् अत्र किं न बाधा ?, काऽसौ ? इति चेत्, इयमेव यदनियमतो लिङ्गादुत्पत्तिरिति, तथाहि–समवायेऽपि इह समवायिषु समवाय इति प्रत्ययः प्रवर्त्तते, न चात्र (विशेषणविशेष्यभावः समवायनिबन्धनः, समवायिषु साद्) गुण्यतयाऽभिमताद्विशेषानुपलक्षणात्, किञ्च–वृक्षे शाखा पटे तन्तव इति लोके प्रत्ययः प्रवर्त्तमानः सः, न पुनर्यथा भवताऽभिधीयते तथेति लोकबाधोऽत्र, अत एवोक्तं–"न धर्मधर्मित्वमतीव भेदे, वृत्त्याऽस्ति चेन्न त्रितयं चकास्ति। इहेदमित्यस्ति मतिश्च वृत्तौ,न गौणभेदोऽपि च लोकबाधः ॥१॥" प्रत्यक्षानुमानातिरिक्तमपरमपि प्रमाणान्तरं यद्यप्यस्ति तथाऽपि तदपि समवायं साधयितुमसमर्थं, यतो विप्रतिपत्तौ सत्यामागमान्न तावत् परित्राणं, उपमानं तु सादृश्यमात्रनियतं, अर्थापत्त्यादि तु वैशेषिकैर्नैयायिकैर्वा नाभ्युपगतं, तन्न किञ्चित्समवायग्राहकं प्रमाणमिति,अपि च–अयुतसिद्धानामाधेयाधारभूतानामिहेति प्रत्ययहेतुर्यः सम्बन्धः स समवाय इति समवायस्वरूपमुपवर्णितं, अत्रायुतसिद्धिर्देशैकत्वेन कालैकत्वेन रूपैकत्वेन वा ?, न तावद्देशैकत्वेन, नहि य एव तन्तूनां देशः स एव पटस्यापि तथाऽस्ति, तन्तवः स्वारम्भकेष्वंशेषु व्यवस्थिताः पटस्तु तेष्विति कथं देशैकत्वम् ?, आकाशैकत्वे सर्वेषामेकदेशत्वं स्यात्, न च तदेकदेशत्वेनैकदेशत्वं, निर्देशत्वान्नभसः कल्पितास्तस्य त इति चेत् तत्किं कल्पनातो वस्तुव्यवस्था ?, नापि कालैकत्वेन, नहि

य एव तन्तूनां कालः स एव पटस्यापि, कार्यकारणभावाभावप्रसङ्गात्, कारणेन हि कार्यस्य समानकालत्वमन्यतः सिद्धस्य स्यात्, ततः किं सिद्धोपस्थायिना कारणेन ?, रूपैकत्वे तु किं कुत्र समवैतु ?, ननु युतसिद्धिर्नाम उभयोरपि सम्बन्धिनोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वं, सा ययोर्नास्ति तावयुतसिद्धौ, तयोः सम्बन्धः समवायः, यथा तन्तुपटयोः, यद्यपि तन्तवः पटव्यतिरिक्ताः पटे न समवयन्ति तथाऽप्युभयोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वं नास्ति, पटस्य तन्तुष्वेवाश्रयित्वात्, तथा च सति सम्बन्धो नानुपपन्नः, स्वरूपभेदस्य सम्भवात्, भिन्नयोश्च परस्परोपश्लेषस्य दहनायस्पिण्डयोरिव विना सम्बन्धेन सम्भवात्, इयांस्तु विशेषो-वह्निरुत्पद्य पश्चादयस्पिण्डेन सह संबध्यते, इह तु स्वकारणसामर्थ्यादुपजायमानमेव तत्र संबध्यते, यथा छिदिक्रिया छेद्येनेति, एतदपि सर्वमसारं, यतो न तन्त्वाद्याश्रयात्यन्तव्यतिरिक्तं पटादिरूपमनुभूयते, किन्तु तदेव कारणं तथा भूयत इति तथा परिणाम एवास्य समवायः समुपतिष्ठते, तथा आधाराधेयभावोऽपि नित्यैकान्ते न समस्ति, तथाहि–उपकार्योपकारकभावे सत्येवाधाराधेयभावः स्यात् यद्वा तदभावेऽपि ?, न तावत्पूर्वः पक्षः, न हि नित्यमप्रच्युतानुत्पन्नस्थिरैकरूपं कदाचिदुपकारकं युक्तं, तत्स्वभावताहानेः ।

**स्वर्वगतात्मवादनिरासः**–भवतु वा यथा कथञ्चिदिदं तथाऽपि यत्रैक आत्मा तत्रात्मान्तराणामपि विद्यमानत्वात् तेषामपि स कथं न स्यात् ?, यथा ह्येकेनात्मना सुखादीनामयुतसिद्धिस्तथा तद्देशवर्त्तिभिरात्मान्तरैरपि, आधाराधेयभावोऽपि यादृशो विवक्षितात्मापेक्षया तादृशस्तदात्मापेक्षयाऽपि विद्यत एव, अभिव्यापकाधारस्य तत्रापि निवर्त्तयितुमशक्यत्वात्, अथ ये येन संवेद्यन्ते ते तत्सम्बन्धिनो भवन्ति, तत्संवेदनं चैकार्थसमवायिविज्ञानवशात्, तथाहि–यस्मिन्नात्मनि सुखादयः समवेतास्तदात्मसमवेतमेवात्ममनःसंनिकर्षसमुत्थानं तद्विषयं संवेदनमुपजायते, तदप्यसत्, समवायस्यैव दुःस्थितत्वात्, किञ्च–कूटस्थनित्यस्य प्रागिवास्य मन-

साऽपि संयोगो न संभवति, तथाहि—यदसंयुक्तं रूपं तन्न मनसा संयुज्यते, यथा मुक्तात्मादि, असंयुक्तरूपश्चात्मा पूर्वावस्थायामिति स्वभावविरुद्धोपलब्धिः, संयुक्तासंयुक्तयो रूपयोः परस्परपरिहारेणावस्थानात्, अथैकरूपस्य न रूपद्वयमिति सर्वदैव संयुक्त एवायमिष्यते तर्हि संयोग एवायं न भवेत्, तस्याप्राप्तप्राप्तिरूपत्वात्, किञ्च—दिगादिभिरपि मनःसंयोगः किं न भवति ?, अनात्मरूपत्वादिति चेत्, ननु सर्वव्यापित्वे कूटस्थनित्यत्वे महत्त्वे च सति कथमयं विभागः—अयमात्माऽनात्मा चायमिति, यस्य मनःसम्बन्धः स आत्मा तदन्योऽनात्मेति चेत्, न, इतरेतराश्रयप्रसङ्गात्, सत्यात्मत्वे मनःसम्बन्धः, सति मनःसम्बन्धे चात्मेति, शरीरसम्बन्धेनात्मा तदन्योऽनात्मेति यद्यभिधीयते तदा शरीरसम्बन्धोऽप्याकाशादिभिः किं न भवति ?, अनात्मरूपत्वादित्युत्तरे तदेव दुरुत्तरमितरेतराश्रयदूषणमाढौकते, किञ्च—आत्मान्तराणामपि तत्र भावात्तत्सम्बन्ध्यपि तत्किं न भवेत्, अथ यस्यैवादृष्टेनोपभोगाय तदुत्पादितं तेनैव संबध्यते, ननु तददृष्टमपि सर्वसम्बन्धि किं न भवति ?, सर्वैरकरणादिति चेत् कथं न कुर्वन्ति ?, मनोऽभिसन्धेरभावात्, नन्वप्रच्युतानुत्पन्नस्थिरैकरूपत्वादात्मनामेकस्य मनोऽभिसन्धिर्नान्यस्येति न युज्यते, एतेन यत्केनचिदुक्तं—'सर्वेषामात्मनां सर्वगतत्वेन सर्वसम्बन्धेऽपि न साधारणो भोगः, यस्य कर्मणा यच्छरीरमारब्धं तस्यैव तद्भोगायतनं, न सर्वस्य, कर्मापि यस्य शरीरेण कृतं तस्यैव तद्भवति, न परस्य, एवं शरीरान्तरनियमः कर्मान्तरनियमादित्यनादि'रिति तत्प्रत्युक्तं, उक्तवद्विशेषासिद्धेः, अपि च—नवानामात्मविशेषगुणानामत्यन्तोच्छेदो मुक्तिरिति भवता व्यावर्ण्यते, ते च बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्मलक्षणा नात्मपरिणामरूपा इष्यंते, किन्त्वात्मव्यतिरिक्ताः, ततो यद्यपि केचित्ते विनष्टास्तदाऽपि तदात्मसम्बन्धित्वेनाभिमता न विनष्टाः, ततो यथाऽसौ नित्यव्यापिसमवायादितत्सम्बन्धवशात्संसारी एवं मुक्तत्वाभिमतोऽपि तथैव, तत्प्रदेशवर्त्तित्वादखण्डं तादृशं स्वरू-

पमाबिभ्राणः कथमिव न संसारी स्यादित्यलमतिजल्पितेन ।

**प्रकृतिवादनिरासः**–अपरस्त्वाह–केवलानन्दभोक्तृस्वरूपो हि पुरुषः, नापरमस्य कदाचिद्रूपं, केवलं संसार्यवस्थायामज्ञानतमश्छन्नः प्रकृतिसाध्यमात्मगतं मन्यमानस्तत्सुखं दुःखं चोपभुङ्क्ते इत्युच्यते, ततः प्रकृतिविकारदर्पणाकारबुद्धिसङ्क्रान्तः सुखाद्युपधानमात्रेणास्योपभोगायोपतिष्ठते, 'बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते' इति वचनात्, तदप्यसत्, यतस्तेनापि परिणामवाद एवमभ्युपगतः, तथाहि–स एवात्मा कदाचिदज्ञानतमश्छन्नः कदाचिन्नेति न वस्तुनः परिणाममतीत्य वर्त्तते, नापि बुद्धिसङ्क्रान्ता अपि सुखादयस्तेन वेद्यन्ते यावन्न स्वयं प्रीतिपरितापाद्यनुभवरूपतया परिणामः, किञ्च–अयमेकदैव सत्त्वरजस्तमसां परस्परविरुद्धात्मनां साम्यावस्थारूपामेकां प्रकृतिं प्रतिपाद्यमानः कथमुत्पादादीनामेकत्र सद्भावं नाङ्गीकुर्यात् ?, तस्मात्तथापरिणाम्येव सुखादिसम्बन्ध आत्मनो युक्त इति, ननु यद्यात्मपरिणतिरूपाः सुखादयस्तर्हि जलानलादिबाह्यार्थसंनिधानापेक्षाः किमित्यमी वेद्यन्ते ?, न, सहकारिकारणापेक्षस्यात्मनस्तथा परिणामात्, अनुभूयन्ते च कदाचिद्भावनाबलभाविनो बहिरर्थमन्तरेणापि सुखादयः, तथा चोक्तम्–"प्रज्ञादिरेव शिष्यन्ते, भावना बलभावतः । नार्थेन जनिताकारो, बुद्धौ भोगस्तदात्मनः ॥१॥" इति, तर्हि ज्ञानरूपा एवामी भवन्त्विति चेत्, न, ततो रूपान्तरेण वेद्यमानत्वात्, तथाहि–विज्ञानं चिद्रूपतामात्रनिष्ठं, सुखादयश्चाह्लादादिरूपाः संवेद्यन्ते, अथ चिद्रूपताविशेषोऽयमित्यभिधीयेत तर्हि यथा चिद्रूपतामात्रनिष्ठमपि संवेदनं विशिष्टतां प्रतिपद्यते तथा तदुपरञ्जकं किञ्चित्कथञ्चित्तदव्यतिरिक्तं विशेषणमुररीकर्त्तव्यं, तथाहि–चिद्रूपतामात्रनियतस्वरूपमपि संवेदनं नीलादिपदार्थसंनिधानमपेक्ष्य नीलाद्यवभासतया परिणमति, ततः स तादृशस्तस्य विशेषः ख्यापयितुं शक्यते, यदा तूपरञ्जकं विशेषणं नेष्यते तदा विशेषः किंकृतः ?, तस्मादात्मपरिणति-

रूपाः सन्तः संवेदनोपरञ्जका भवन्ति सुखादयः, न पुनः संवेदनमात्रशरीरा एवेति, न च तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः, तत् सुखादिकमज्ञानं विज्ञानाभिन्नहेतुजमित्यपि न न्याय्यं, ज्ञानस्य स्वावारकविगमादर्थादेरुत्पत्तेः, तस्माच्च वासनादिसहायाद्वेदनीयोदयात्सुखदुःखयोरुत्पादात्, एतच्चावश्यमभ्युपेयं, अन्यथाऽपेक्षाज्ञानाभावप्रसङ्गादिति, तस्माद् दुस्तर्काकुलचेतसां व्यर्थ एव क्वचित्प्रवृत्तिनिवृत्त्यादिरूपः श्रमः, स्वाभ्युपगमबाधित्वेनासमञ्जसत्वप्राप्तेः, तथाहि—नित्यैकान्ते यदि कर्तृस्वरूपस्तदा न भोक्तृस्वरूपस्तथा यदा च भोक्तृस्वरूपस्तदा न कर्तृस्वरूपः, तथा यदि बद्धस्वभावो न मुक्तस्वभावः अथ मुक्तस्वभावस्तदा न बद्धस्वभावः,रूपान्तरं तु यदि कर्तृभोक्तृबद्धाबद्धादिस्वभावं स्यात्तदात्मनः किं स्यात् ?,ततश्च परैः स्वयमेवैकान्तनित्यं प्रतिपादयद्भिः कथं क्वचित्प्रवर्त्तितव्यं निवर्त्तितव्यं वा ?,ततश्चामी धर्मार्थकामलक्षणपुरुषार्थत्रयाद्भ्रंशिताः कुतर्कप्रभवैर्ग(ः कु)विकल्पैराकुलीकृतचेतसः किमसमञ्जसं यन्नावाप्नुयुः?, तदलमेकान्तकुतर्कावलम्बनेन, प्रमाणोपपन्न एव यथोक्तोऽन्वयोऽभ्युपगन्तव्य इति ध्रौव्यविचारः ॥ कश्चिदाह—उत्पादादयो धर्मा धर्मिणो भिन्नाः अथाभिन्नाः ?, किंच—तत्रोभयथाऽपि दोषः, तदाह—

ननूत्पादादयो धर्मा, भिन्नाः स्युर्धर्मिणो यदा । नीरूपत्वं तदा तस्य, वाच्यं वा लक्षणान्तरम् ॥ २५ ॥
अभेदे युक्तता न स्यात्, अस्या भेदव्यपेक्षणात् । सम्बन्धशब्दो नायं यद्, न द्वयेन विना स तु ॥२६॥
किं चोत्पादादियोगित्वमुत्पादादेर्यदेष्यते । अनवस्था तदा मृग्यं, तेनान्यद्वस्तुलक्षणम् ॥२७॥
सत्त्वं हि वस्तुनो रूपं, सदिति प्रत्ययो यतः। सत्त्वरूपवियोगेन, नोत्पादादेरपि स्थितिः ॥२८॥
यदुत्पादव्ययध्रौव्ययुक्तं तेभ्यः परं न तत् । किन्त्वभेदांशमाश्रित्य, तेषामेव तथा स्थितिः ॥२९॥

यद्युत्पादादयो धर्मा धर्मिणो व्यतिरिक्तास्तदा तस्य नीरूपता, रूपं ह्यात्मस्वभावः उत्पादादयस्त्वर्थान्तरभूता इति कथं धर्मिणो न नीरूपता ?, प्रयोगः–यदुत्पादादिधर्मव्यतिरिक्तं तन्न सरूपं, यथाऽऽकाशकुशेशयं, उत्पादादिधर्मव्यतिरिक्तश्च विवक्षितो धर्मीति, ननु यद्युत्पादादिधर्मस्वरूपं वस्त्वभ्युपगतं स्यात् तदा तद्भेदे तन्नीरूपता युक्ता, यदा तूत्पादादियुक्तं वस्त्वित्युच्यते तदा तद्भेदे तन्नीरूपता (न) युक्ता, धर्मिरूपताया एव रूपत्वात्, नैतदस्ति, यतो धर्मभेदे धर्मी न स्वरूपेणोत्पद्येत विपद्येतान्वयं वा भजेत्, धर्मी धर्मिरूप एव न स्यात्, उत्पादव्ययध्रौव्यमेव हि सतो लक्षणं, नवरमवस्तुनो नोत्पादादियोगित्वं, तथाहि–यद्यत्स्वरूपं न भवति न तत्तस्य लक्षणं, यथा विसंवादित्वं प्रमाणस्य, न भवन्ति चोत्पादादयो लक्षणं धर्मिणः स्वरूपं, ततो न ते लक्षणं, एवं च पृथुबुध्नोदराद्यपि न घटस्य लक्षणं स्यात्, व्यतिरेके च धर्मधर्मिणोः सम्बन्धो न संभवति, संयोगादिसम्बन्धप्रतिषेधाद्, एवं तावद्भेदो न युक्तः। अभेदपक्षे दोषमाह–अभेदः–एकत्वं तत्र न युक्तता, यतो युक्तता नाम सम्बन्धशब्दः, सम्बन्धस्तु न द्वयेन विना क्वचिदनुपचरितः संभवति, उपचरितं तु रूपं वस्तुतत्त्वकल्पनायामनवसरमेव, नहि राहोः शिरः शिलापुत्रस्य शरीरमित्यादावुपचरितसम्बन्धं सद्भावसारं कदाचिद्वस्तुद्वयं पारमार्थिकीं भूतिमवलम्बते ॥ एवं पक्षद्वयेऽपि दूषणमभिधायाभ्युच्चयमाह–उत्पादादीनां वस्तुत्वसिद्ध्ये यद्युत्पादादयोऽपरे इष्यन्ते तदाऽनवस्था तद्वस्तुसिद्ध्येऽपि तदन्योत्पादादिपरिकल्पनया, तथाहि–वस्तुलक्षणभूता उत्पादादयः स्वयमवस्तुभूता वस्तुभूता वा भवेयुः ?, यद्यवस्तुभूताः कथं कस्यचिल्लक्षणं नाम ?, यदवस्तु तन्न कस्यचिल्लक्षणं, यथा नभःपुण्डरीकं, अवस्तुभूताश्चोत्पादादयः, अथ वस्तुभूता एते इष्यन्ते तर्हि प्रत्येकमेषां रूपत्रययोगित्वं स्यात्, उत्पादेऽप्युत्पादव्ययध्रौव्ययुक्तत्वं, व्ययेऽप्युत्पादव्ययध्रौव्ययोगित्वं, ध्रौव्येऽप्युत्पादव्ययध्रौव्ययोगित्वं, पुनस्तेऽप्युत्पादादयो नावस्तुभूताः कस-

चिल्लक्षणं, ततस्तद्वस्तुत्वसिद्धये तदपरे ते परिकल्पनीयाः, तत्रायमेव वृत्तान्त इत्यनवस्था स्फुटैव, अथानवस्थाभयादुत्पादादीनां प्रत्येकमुत्पादादियोगित्वं नेष्यते तर्हि वस्तुत्वं न स्यात्, ततो वस्तुलक्षणत्वमपि तेषां न स्यात्, न चैवमभ्युपगम्यते भवद्भिः, तस्मादुत्पादादीनामुक्तलक्षणवैकल्येऽपि वस्तुत्वसम्भवात् अन्यद्वस्तुलक्षणमन्वेष्टव्यं नोत्पादादियोगित्वमिति, नहि यदन्तरेणापि यद्भवति तत्तस्य लक्षणं युक्तमव्यापकत्वात्, लक्षणस्य हि त्रयो दोषा-अतिव्याप्तिरव्याप्तिरसम्भवश्चेति तदिदमव्याप्तिदोषदुष्टं सत्कथं लक्षणं स्यादिति ॥ अन्यच्च-नोत्पादादियोगित्वं वस्तुलक्षणं, किन्तु सत्त्वं, सत्त्वं च तदेव यतो वस्तुनि सदिति प्रत्ययो भवति, एतदेव सत्त्वमभ्युपेयं, यतः सत्त्वरूपवियोगेन उत्पादादेरपि न स्थितिः, तथाहि-यद्युत्पादादयः सन्ति तदा सिद्धः सत्त्वयोगः, अथ न सत्त्वयोगस्तदा न सन्त्येवेति खरविषाणकल्पा एवामी उत्पादादय इति, नैयायिकाभिमतसामान्यलक्षणं सत्त्वमाश्रित्य प्रागेव विचारितं, इहापरं स्वकीयसत्त्वलक्षणं धर्ममाश्रित्येदमभिहितमिति श्लोकचतुष्टयेन पूर्वपक्षः, अत्र परिहारः-न खलु केवलमभेदं भेदं वा समाश्रित्य धर्मधर्मिभावव्यवस्था, किन्तु भेदाभेदात्मकं चित्रज्ञानकल्पं जात्यन्तरं, तत्र च यद्वस्तूत्पादादियुक्तं तदुत्पादादिभ्यः किमपि न पृथक्, किन्तूत्पादादीनामेवाभेदांशमाश्रित्य वस्तुरूपता स्थिता, उत्पादादय एव धर्मिरूपतयैकतया स्थिता वस्त्विति-यावत् ततो नोक्त दोष इति, ननु धर्मा विद्यन्ते यस्य स धर्मीति व्युत्पत्तिरेव तयोर्भेदं प्रख्यापयन्ती प्रकारान्तरमपाकरोति, अनुमानमेव तद्भेदप्रसाधकमस्ति, तथाहि-भिन्नौ धर्मधर्मिणौ, भेदेन प्रतीयमानत्वात्, यौ भेदेन प्रतीयेते तौ भिन्नौ, यथा देवदत्तयज्ञदत्तौ, प्रतीयेते च भेदेन धर्मधर्मिणौ, तस्माद्भिन्नौ, नायमसिद्धो हेतुः, अयं धर्मी इमे धर्मा इति द्विरूपायाः प्रतीतेः संवेद्यमानत्वात्, सपक्षभावान्न विरुद्धः, प्रतिभासभेदेऽपि तयोर्यदि भेदो न व्यवस्थाप्येत तर्हि भेदाभेदव्यवस्थैव विशीर्यते, सर्वविश्वमेकरूपं

स्यादिति विपर्यये बाधकं प्रमाणं, तदेतदसत्, यत एव भेदवद्भिः सद्भिर्भवद्भिः किमेकान्तभेदो धर्मधर्मिणोः प्रतिपादयितुमिष्टः ? किं वा कथञ्चिद्भेदः ?, न तावत्प्रथमः पक्षः, एकान्तभेदे सम्बन्धानुपपत्तेः, यत एव हि धर्मधर्मिणोर्भेदाभेदस्तत एव धर्मा विद्यन्ते यस्यासौ धर्मीति व्युत्पत्तिः, नन्वेकान्तभेदेऽपि दण्डयुक्ते देवदत्ते दृष्टः संयोगवशाद्दण्डीति व्यवहार इति चेत्, न, तत्रापि देवदत्तस्य तद्रूपतया परिणामात्, न खलु तद्रूपपरिणामादपरस्तयोरपि कश्चित्संयोग इति प्रतिपादितं, न च धर्मधर्मिणोः संयोगलक्षणः सम्बन्धः परैरिष्यते, समवायस्तु प्रागपास्तः, किञ्च–समवायात् धर्मा धर्मिणि वर्त्तन्ते वा न वा ?, यदि न वर्त्तन्ते तदा कस्तयोर्धर्मधर्मिभावः ?, तेषां तत्र समवाय एव तद्वृत्तिरिति चेत्तर्हि यथैवानित्यत्वादयो धर्माः शब्दादिषु धर्मिषु वर्त्तन्ते तथैवात्मादिष्वपि वर्त्तेरन्, य एव ह्यनित्यत्वादिशब्दादिना समवायो यद्वशात्तत्रैव स वर्त्तते स एव नित्याभिमतेष्वपि, तस्यैकत्वेनोपगमात्, इत्यात्मादेरप्यनित्यत्वं केन निवार्यते ?, किञ्च–समवायोऽपि पदार्थान्तरभूतो यदि भूतस्तथाऽपि परस्परमसम्बद्धमिदं धर्मधर्मिसमवायलक्षणं पदार्थत्रितयमजनि घटपटशकटवत् इति तद्वशादपि न धर्मधर्मिभावव्यवस्था, प्रयोगः–यद्यदसंश्लिष्टं न तत्तयोर्द्धर्मधर्मिभावव्यवस्थानिबन्धनं यथा घटः कटपटयोः, असंश्लिष्टश्च समवायः समवायिभ्यामिति व्यापकानुपलब्धिः, ननु समवायो भवद्भिरभ्युपगम्यते वा न वा ?, यद्यभ्युपगम्यते तदा कथं स प्राक् प्रतिषिद्धः ?, अथ नाभ्युपगम्यते तर्ह्ययमाश्रयासिद्धो हेतुः, नैतदस्ति, यतः प्रसङ्गसाधनमेतत्, परप्रसिद्धव्याप्तिकेन साधनेन परस्यैवानिष्टापादनं च प्रसङ्गसाधनं, तथा ह्येवमुच्यते भवता–तावदसंश्लिष्टशरीराणां घटादीनां न धर्मिधर्मभावव्यवस्थानिबन्धनत्वमिष्यते, ततः समवायोऽपि यद्यसंश्लिष्ट इष्यते तदा तद्व्यवस्थानिबन्धनं नैष्टव्यः, ननु यदि सम्बन्धे सति धर्मधर्मिभावव्यवस्था कदाचिदुपलब्धा भवेत् तदैवं प्रसङ्गसाधनं साधीयः स्यात्, अनुपलब्धे तु सम्बन्धे

धर्मधर्मिभावव्यवस्थाव्यापकः कथं कल्पयितुं शक्येत ?, तदेतदसत्, यतो भेदाविशेषेऽपि किञ्चित्तद्व्यवस्थानिबन्धनमपरं नेति न तथाविधप्रत्यासत्तिमन्तरेण संभवति, प्रत्यासत्तिश्च यद्युपकार्योपकारादिरूपा काचिदिष्यते तदा तद्भावपरिणामव्यतिरेकेणास्या अन्यस्या असम्भवात् स एव पदार्थस्तेन तेन रूपेण परिणमन् स्वपर्यायात्मना धर्मः स्वद्रव्यात्मना च धर्मीति सिद्धः तादात्म्यलक्षणसम्बन्धे सति धर्मधर्मिभावः, यत्र तु तयोः स्वरूपं न संश्लिष्यते तदपरं तद्भावनिबन्धनं तत्र स न स्यादिति, अथ भेदाभेददोषभयात्स्वरूपसंलेषस्तयोर्नेष्यते, समवायस्तु तद्व्यवस्थानिबन्धनं तत्संश्लिष्ट इष्यते, तर्हि किमसौ स्वयमेव ताभ्यां संश्लिष्यते सम्बन्धान्तरवशाद्वा ?, न तावत् स्वयं, स्वात्मनि क्रियाविरोधाभ्युपगमाद्, अन्यथा ज्ञानस्यापि स्वपरप्रकाशकत्वप्रसङ्गात् धर्मधर्मिणोरपि स्वयं संश्लेषप्रसङ्गाच्च, तथाहि–असौ भिन्नोऽपि यदि ताभ्यां स्वयं संश्लिष्यते तदा तावेव स्वयं किं न संश्लिष्यतः ?, अथ विचित्राः पदार्थशक्तयस्तथाहि–शर्करा स्वयमेव मधुरा वस्त्वन्तरं तु तया मधुरं क्रियत इति, तद्वदत्रापि समवायः स्वयं संश्लिष्यति वस्त्वन्तरं तु तद्बलादिति, तदसत्, यतो माधुर्यं शर्करादेः स्वरूपं ततस्तद्वस्त्वन्तरनिरपेक्षं स्वयमेव तथा भवतु, वस्त्वन्तरस्य माधुर्यपरिणामस्तदपेक्ष इति तेन स क्रियतां, इह तु संश्लेषरूपरूपतैव न समवायस्य रूपं, तस्यातद्धर्मत्वात्, तथाहि–सिद्धः सन् केनापि रूपेण समवायः स्वसमवायिभ्यां संश्लिष्येत, ततः कथं संश्लेष एवास्य स्वरूपं भवितुमर्हति ?, स्वपरसंश्लेषजननस्वभावः समवाय इति चेत् तदसत्, यतो यदि न स्वसंश्लेषजननस्वभावस्तदा स्वयं संश्लिष्येत्, तद्वशान्न परे संश्लिष्येताम्, अथासौ स्वयं संश्लिष्यति परं च संश्लेषयति तर्हि तौ समवायिनौ स्वयं संश्लिष्यतो वा न वा ?, यदि न कथं समवायस्य प्रयोक्तृत्वं ?, अथ संश्लिष्यतः किमनेनान्तर्गडुना स्वयमेव संश्लिष्यतं, तदपेक्षस्तयोः संश्लेष इति चेत् अस्य समवायिभ्यां संश्लेषः किमपेक्षः ?, ननूक्तं स्वरूपा-

पेक्षः, ननु संश्लिष्यमाणं स्वरूपं समवायिनोरप्यस्ति ततस्तयोः स स्वरूपापेक्षः किमिति नेष्टः ?, अथ तादृशे स्वरूपे सत्यपि तौ प्रयोजकमन्तरेणापि संश्लिष्यति, समवायिनोरेव स तादृशोऽभ्युपगम्यते, किमनयाऽदृष्टवस्तुपरिकल्पनकष्टपिष्टिकया ?, एवमपि भवतु, तथाऽपि सिद्धो धर्मधर्मिणोः स्वभावभेद इति चेत् न सिद्धः, यतस्तयोस्तत्स्वभावत्वे कश्चिदुपश्लेषलक्षणो धर्मोऽस्ति न वा ?, यदि नास्ति तदा तदेवेदमाश्लिष्टं वस्तुद्वयमिति कथं धर्मधर्मिभावस्तत्स्वभावत्वं वा तयोः परिकल्प्यते ?, अथास्ति स तयोरभिन्नो भिन्नो वा ?, यद्यभिन्नस्तदा तदेवेदमश्लिष्टं वस्तुद्वयमिति तथैव धर्मधर्मिभावः, अथ भिन्नस्तदा सोऽपि तयोः सम्बद्धः किं वाऽसम्बद्धः ? इत्यादि तदेवावर्त्तते, प्रतिनियतधर्मिधर्मस्वभावस्तत्सम्बद्ध इति चेत् तथाहि—तस्यैव धर्मिणः स स्वभावो येन तद्धर्मापेक्षया त एव धर्मा भवन्ति, तदेतदप्यविचारितरमणीयं, यतोऽयमपि तद्धर्म्मस्तदात्मा वा ?, यदि धर्मस्तदा पूर्व एव प्रसङ्गः, अथ तदात्मा तदा घटपटवत् स्वतन्त्रं पदार्थद्वयमेव स्यात् कोऽपरस्तत्र धर्मधर्मिभावः ?, नहि स्वस्वभावमग्नयोरुपकार्योपकारकभावादिसम्बन्धव्यतिरेकेणैव पदार्थयोर्धर्मधर्मिभावोऽतिप्रसङ्गात्, अथैको धर्मी अनेकधर्मोपकारकशक्तिसम्पन्नस्ततस्तानसावुपकरोतीति सिध्यति धर्मधर्मिभावः, नैतदपि चारु, यतः शक्तयस्ततो भिन्नाः किं वाऽभिन्नाः ?, यद्यभिन्नास्तदुपकारिका अपरास्तत्र शक्तयः परिकल्पनीयाः, तथा चानवस्था तदवस्थैव, किञ्च—यद्यनित्यत्वादयो धर्माः शब्दादेर्धर्मिणो व्यतिरिक्तास्तदा शब्दादिवस्तुन एवात्मानमस्थायिनं न कश्चित्प्रतिपद्येत, प्रतिपत्ता च तदात्मानमेव तथा प्रतिपद्यते, तदनुरूपा(त्माऽभावे तत्स्थायिरूपाभावात् किं स्वरूपमभिसंधाय प्रवर्त्तेत ?) नित्यशब्दादिकमाशङ्कमानः किमनित्यताविचारं प्रत्याहिता (दरः ?) भिन्नायां चानित्यतायाम(सि)न् सानयोः तत्रैतत्प्रवर्त्ततां, किमनित्यशब्दात्मनि ?, तदंतरेण प्रवृत्तेरिति चेत् किमनेन व्यवधिना ?, वरमव्यवहितैव प्रतिपत्तिरस्तु, तेनैवार्थित्वात्, अतो

यद्यैकान्तिकं धर्मधर्मिणोर्भेदं साधयितुमनुमानं तदाऽसिद्धो हेतुः, शब्दादिधर्मिस्वरूपव्यतिरेकेण कृतकानित्यत्वादिधर्माणामप्रतिभासनाच्छब्दस्यैव कृतकानित्यादिरूपेण प्रतीतेः, कथञ्चिद्भेदप्रतिभासस्तु धर्मधर्मिणोरस्ति, स च कथञ्चिद्भेदमेव गमयतीति नैकान्तभेदे धर्मधर्मिभाव इति, एकान्ताभेदेऽपि धर्ममात्रं वा भवेत् धर्मिमात्रं वा भवेद्, इतरेतराव्यतिरेकादितरेतरस्वरूपवत्, ततस्तत्रापि कथं धर्मधर्मिभावः?, किञ्च—एकान्ताभेदे यदेव साध्यधर्मस्य स्वरूपं साधनधर्मस्यापि तदेव, ततः कृतकत्वादौ साध्ये हेतुत्वं न स्यात्, प्रतिज्ञार्थैकदेशासिद्धत्वेनासिद्धत्वात्, ननु व्यतिरेकपक्षेऽपि य एवाभूत्वा भवनधर्माऽस्थिररूपो भावस्तत्रैव कृतकत्वादयो धर्मा वर्त्तन्त इति व्यवस्थाप्यते, तथा च सैवाभूत्वा भवनस्वभावता भूतस्य चास्थिरस्वभावता तद्विपरीतरूपसमारोपव्यवच्छेदविषयायाः कल्पनाबुद्धेर्निबन्धनं किं नेष्यते?, तयैव परमार्थाभेदवतोर्धर्मयोर्द्धर्मिणि प्रवृत्तेः किमन्तर्गडुना कृतकत्वादिना व्यतिरेकवतोपगतेन?, तथाहि—न सत्तामात्रेण कृतकत्वादयो धर्माः साध्यधर्मप्रतिपत्तिनिबन्धनं, सदा संनिहितत्वेनानवरतप्रतीतिप्रसङ्गात्, किन्तु विकल्पप्रतिभासिन एव, स च विकल्पः स्वप्रतिभासिनमेवाकारं बहीरूपतयाऽध्यवसितमनुसरन् कृतकानित्यतादिरूपतां वस्तुनः प्रतिपद्यते, परमार्थतोऽसंस्पर्शेऽपि तद्रूपस्य परम्परया तदुपादानत्वाद्, व्यतिरिक्तास्तु धर्मास्तदुत्पत्तिनिमित्तमात्रतया परिकल्प्यन्ते, तद्वरं यदेव कल्पनानिबन्धनं तदेव तथाविधविकल्पप्रसवनिमित्तमस्तु, तस्यावश्यमभ्युपगमनीयत्वात्, तस्मात्परमार्थतो वस्त्वभेदेऽपि व्यावृत्तिभेदमाश्रित्य धर्मधर्मिभावादिव्यवस्थेति, तदेतदप्यसत्, यतो भावस्याभूत्वा भवनस्वभावता भूतस्य चास्थिरस्वभावता काचिद्विद्यते वा न वा?, यदि न विद्यते तदा तद्विपरीतरूपसमारोपव्यवच्छेदविषयायाः कल्पनाबुद्धेः कथं निबन्धनं?, न ह्यसच्छशविषाणं काञ्चनापि बुद्धिमुपकल्पयितुमलं, तस्यापि वस्तुप्रसङ्गात्, अथ विद्यते तर्हि येयमभूत्वा भवनस्वभावता भूतस्य चास्थिरस्वभावता सैव कृतका-

नित्यत्वादिधर्मरूपता, तथा च न भावस्यकान्तेनैकस्वभावता, तथाहि–यन्मात्रमेवाभूत्वा भवनस्वभावता तन्मात्रमेव भूतस्यास्थिरस्वभावताऽपि, तन्मात्रत्वे ह्यभूत्वा भवनस्वभावतैवावशिष्यते, ततो यद्ययमभूत्वा भूतस्तथाऽपि नास्थिरो भवति, भवनैकस्वभावत्वादेव, अथोच्येतेयमभूत्वा भवनस्वभावता येनायमस्थिर एव भवति तत्किमेषाऽप्यभूत्वा भवनमात्रं अथ विशिष्टमभूत्वा भवनं ?, यदि प्रथमः पक्षस्तदा तथैवास्थिरस्वभावताभावप्रसङ्गो भावस्य, अथ विशिष्टमभूत्वा भवनं तदत्रापि वक्तव्यं–काऽस्य विशिष्टता ?, स्थिररूपव्यावृत्तात्मता तर्हि स स्वयमस्थिरस्वभावः स्थिररूपाद्व्यावर्त्तते यथाकथञ्चिद्वा ?, यद्यस्थिररूपः सिद्धः स्वभावभेदः, यथाकथञ्चिद्व्यावृत्तावस्थिररूपादपि किं न व्यावर्त्तते ?, अथायं स्वसत्तानन्तरमभवन् कथमस्थिराद्व्यावर्त्तेत ?, तत्किमिदमभूतभवनमस्य स्वभावः किं वा न ?, यदि न तदा स्वसत्तानन्तरं स किं न भवति ?, अथ अस्यैवं स्वभावः कथं नानेकस्वभावता भावस्य ?, तथाहि–अभूत्वा भवनं नाम कस्यचिदवस्थितस्यैव विवक्षिताकारताऽवाप्तिः, भूतस्य चाभवनं तद्विरहः, एतौ चैकवस्त्वाधारौ स्यातां, न पुनरेकान्तेनैकस्वभावावेव, यथैव हि व्यतिरेकभाजः कृतकत्वादयो धर्मास्तद्विपरीतव्यवच्छेदविषयायाः कल्पनाबुद्धेर्निबन्धनमुपपद्यन्ते तथैवैकान्ताव्यतिरेकभाजोऽपि, यतो यद्ययमेकान्तेनैकस्वभाव एव भावस्तर्हि विकल्पोऽप्येकस्वभाव एवोत्पत्तुमर्हति, निरंशवस्तुविषयानुभवस्य तथैव प्रवृत्तेः, यथाऽनुभवं च विकल्पेनोत्पत्तव्यं, न त्वन्यथाः विकल्पः अन्यथा वस्तु, वस्त्वनुभवेऽप्यन्यथा विकल्पोत्पत्तौ–'यत्रैव जनयेदेनां, तत्रैवास्य प्रमाणता।' इत्यादि व्याहन्येत, प्रत्यक्षस्य निरंशैकवस्त्वनुभवरूपत्वे विकल्पस्य वा तदनुकारित्वे यत्रैव तत्रैवेत्यादेरसम्बद्धत्वात्, विकल्पप्रतिभासिनो हि धर्मा यदि बहिर्न सन्ति केवलं स एव विकल्पः स्वप्रतिभासिनमेवाकारं बहीरूपतया व्यवसितमनुसरन् कृतकानित्यादिरूपतां वस्तुनः प्रतिपद्यते तदा तद्विपर्ययकल्पनायामपि न किञ्चिन्नियामकमित्यक्-

तकनित्यादिरूपतामपि प्रतिपद्येत, तथा च तदकृतकनित्यादिरूपमपि स्यात्, न खलु विकल्पस्य परमार्थासंस्पर्शेऽपि कश्चिदपरो विशेषः हेतुरस्ति येन तत्कृतकमनित्यं च भवति, न पुनरकृतकं नित्यं चेति, अथ कृतकत्वादिविकल्पः परंपरया तदुपादान इति कृतकमनित्यं च तद्व्यवस्थाप्यते तत्किं तत्त्वतस्तन्न कृतकं नाप्यनित्यं ?, एवमिति चेत् सुव्यवस्थितं वस्तुनः क्षणिकत्वं, अथ वस्तु कृतकानित्यादिस्वभावमस्ति, ननु कृतकत्वमनित्यत्वं वा नाम गुणरूपं किमपि तत्र संबद्धमित्यभिदध्याः सिद्धा तर्हि कथञ्चिदनेकस्वभावता तस्य, कथमन्यथा विकल्पपरम्परयाऽपि तदुपादानस्तथा भवितुमुत्सहेत, तथाहि—यदा प्रत्यक्षमेव वस्तु कृतकानित्यनीलाद्यनेकस्वभावाध्यासितं प्रतिपद्यते तथाऽवभासेन ततस्तत्र चित्ररूपा विकल्पाः ततो व्यतिरिक्ताः कृतकत्वादयो धर्मास्तत्र मा भवन्तु, वस्तुस्वभावभूतास्तु ते तत्र कथं प्रतिषिध्येरन् ?, न ह्येकान्तेनैकस्वभावे वस्तुनि व्यावृत्तिभेदोऽप्युपपन्न इति भेदाभेदनिष्ठ एव धर्मधर्मिव्यवहार इति, नन्वेवमपि वस्तुनः साधनरूपतोपगमे साध्यधर्मस्य कथञ्चिद्भेदोपगमे न किञ्चित्फलमुत्पश्यामः, साध्यसाधनभावस्य कल्पितभेदद्वारेणाप्यापत्तेः, न चैकात्म्ये कथञ्चिदपि स्वभावभेदो युक्तः, एकस्मात्स्वभाववादभेदात्, ततोऽपि तयोः कथञ्चिद्भेदाभेदौ स्त एवेति चेत् न अनवस्थाप्रसङ्गात्, तथाहि—धर्मयोस्तदेकस्वभावादपि भेदवतोस्तेन स्वभावेन कथञ्चिदभेदनिमित्तभिन्नयोरपरः स्वभावोऽभ्युपगन्तव्यः, तथा तेनाप्यपर इत्यनन्तैव भिन्नाभिन्नस्वभावपरम्परा स्यात्, न च कल्पनाबुद्धावप्यनन्तोभयस्वभावा परम्परा प्रतिभासत इति किमपि तत्कल्पनयाऽऽत्मानं विप्रलभन्ते भवन्तः, कथञ्चिच्च भेदोपगमात्कथं भेदपक्षभाविनां दोषाणामनवसरः ?, यं चात्मानं पुरोधायेमौ धर्मावियं धर्मीति व्यवस्थाप्यते, यदि तेन भेदस्तदा भेद एव, कुतो नैकान्तवादः ?, अथाभेदस्तदाऽयं साधनधर्मोऽयं साध्यधर्मो धर्मी चायमिति कथं पारमार्थिकं त्रितयं सिध्येत् ?, तस्मात्तत्परररूपव्यावृत्तिसमाश्रययायां कल्प-

नाबुद्धौ भेदवतामिव धर्माणां प्रतिभासनात् साध्यधर्मसाधनभावादिव्यवस्थेत्येकस्वभाव एव भावे धर्मधर्मिभावव्यवहार इति, तदपि न शोभनं, निजमतापरिज्ञानात्, यतो यदि कश्चित् केवल एव साधनधर्मरूपः पदार्थः स्यात्तदा तद्रूपतोपगमे साध्यधर्मस्य कथञ्चिद्भेदेन किञ्चित्फलमुपलभ्येत, यदा त्वन्योऽन्यानुवेधात्मकमेतद्रूपं तथा कथं न फलोपलम्भः ?, यदि हि सर्वथा विकल्पकल्पित एव धर्मभेदस्तदा खरतुरगविषाणयोरपि गम्यगमकभावः स्यात्, कल्पिताच्च हेतोः कल्पितसाध्यसिद्धिप्रसक्तिः, न च साध्यसाधनभावस्य कल्पितधर्मद्वारेणापत्तिः, वस्तुस्वरूपं हि किञ्चिद् बुभुत्सुभिः प्रमाणवद्भिरनुमानं प्रमाणमिष्यते, नोन्मत्ततयेव, तच्च विकल्पितधर्मभेदे तदत्यन्तभेदे च न सिध्यतीति विहाय दुरभिनिवेशं सम्यग्विभाव्यतामेतत्, ऐकात्म्ये च कथञ्चिदपि स्वभावभेदो युक्तो न स्यात् यदि साधनधर्मादिरूपः कश्चिदेक एवात्मा केवलः संभवत् जात्यन्तरं जह्यात्, नैकान्तेनैकरूपं नापि सर्वथा नानारूपमेवेति, न ह्यत्र कुतश्चिदेकस्वभावात्किञ्चिद्भिन्नं रूपमभेदं प्रतिपद्यते येनैकस्मात् स्वभावादभेदे तयोः कथञ्चित्स्वभावभेदो न युज्येत, अपि त्वीदृश एवायं भेदो यः सर्वथा न भेद इति, अत एवैष कथञ्चिद्भेदः, ततोऽनवस्थादिदूषणमप्यनवकाशमेव, यथैव हि वस्तु प्रतिभासते तथैव वयं मन्यामहे, भवन्तस्तु विपरीतसंभावनयाऽऽत्मानं विप्रलम्भन्ते अन्यानपि च विप्रलम्भयन्ति, शबलरूपे हि वस्तुतत्त्वे तथा क्षयोपशमादिनिबन्धनादि तथा तथा विवक्षां धर्मधर्मिभावं च घटयति, तथाहि—तदेव वस्त्वभेदप्राधान्येन विवक्षितं धर्मीत्युच्यते, तच्च तदा नाभेदमात्रमेव भवति, वस्तुस्वरूपस्य तद्विवक्षयाऽन्यथा भावाभावात्, केवलमविवक्षिते भेदे तथाऽपि तदभिधीयमानमवाप्यत एव, भेदप्राधान्येन च विवक्षितं तदेव धर्मव्यपदेशमाविशति, तत्रापि न तस्य भेद एव संपद्यते, तत एव न्यायात्, ततस्तदप्यभेदाप्रतिक्षेपेण तथाऽभिधीयमानमेवाप्यते, तथाहि—कृतकोऽनित्यः शब्दः, अवाप्यते तु न किञ्चित्

यदि च शब्दमात्रं कृतकत्वादिमात्रं वेति, तथा स एव शब्दः कृतकात्मना विज्ञातो नानित्यात्मनाऽपि तथा क्षयोपशमाभावात्, ततो यदात्मना न ज्ञातस्तदा तस्य साध्यधर्मः, यदात्मा च ज्ञातस्तदात्मा साधनधर्मः, द्वयं चैतच्छब्दात्मतां नातिक्रामतीति स धर्मीति, ततो भेदाभेदपक्षेऽयं साधनधर्मोऽयं साध्यधर्मो धर्मी चायमिति त्रितयं सिध्यत्येव, अत्यन्तभेदवन्त्रितयासिद्धौ त्वस्माकमिष्टसिद्धिरेवेति, यदि च तत्तद्रूपसमाश्रयायां कल्पनाबुद्धौ भेदवतामिव धर्माणां प्रतिभासनात् साध्यसाधनभावादिव्यवस्था निर्निबन्धनैव तदेयं वराकी विपर्ययेऽपि न स्यात्, तन्नैकस्वभावेऽपि भावे धर्मधर्मिव्यवहार इति भेदाभेदपक्ष एव सकलाविकलप्रामाणिकविहितधर्मधर्मिभावादिव्यवस्थापटीयानिति, प्रसाधितं चाधश्चित्रज्ञानकल्पं भेदाभेदरूपं जात्यन्तरमिति, ततः प्रस्तुतेऽप्युत्पादादयो धर्मा अभेदप्राधान्येन विवक्षिता धर्मिरूपतामवलम्बंते, तथाहि–यदुत्पद्यते विपद्यतेऽवतिष्ठते च वस्तुरूपं तद्रूपा एवोत्पादादयः, अन्यथा तद्भेदे तन्नोत्पद्येत विपद्येतावतिष्ठेत वा, न चात्रान्यदु(त्पद्यते अवतिष्ठते वा) गगनादि न तद्विपद्यते, नभःकुशेशयादि च यन्नोत्पद्यते न विपद्यते, यच्च नोत्पद्यते तदवतिष्ठते वा भौ(वन्ध्यासुता)दि क्षणमपि, इति सकलप्रमाणप्रसिद्धव्यवहारविलोपप्रसङ्गः, तस्मादेकमेवेदं कुम्भाद्युत्पद्यमानं विपद्यमानमवतिष्ठमानं च, यद्यद् यदा वस्तुतां प्रतिपद्यते तदोत्पादादय एव तल्लक्षणं भवतीति स्थितं ॥ यद्युत्पादादयोऽभेदाश्रयणाद्वस्तुरूपतामवलम्बंते तर्हि उत्पादो व्ययो ध्रौव्यमिति परस्परभिन्नं शब्दत्रितयमत्र कथं प्रवर्त्तते? इत्याशङ्कापोहार्थमाह—

**भिन्नशब्दप्रवृत्तिश्च, भेदांशस्यापि संभवात्। निरपेक्षौ न चान्योऽन्यं, भेदाभेदाविमौ क्वचित् ॥ ३० ॥**

न खलु धर्मधर्मिणोरभेद एव, किन्तु भेदोऽपीति कथं न भिन्नशब्दप्रवृत्तिः?, एकान्तेनैको हि कुम्भ इत्येव स्यात्, न पुनरु-

त्पन्नो विपन्नोऽवस्थितो वाऽयं भवेत्, तस्मादनेकधा विशिष्यमाणोऽयमात्मा तमेव तथा कथञ्चिद्भिन्नं ख्यापयति, न च येनांशेन भेदस्तेन भेद एव येन चाभेदस्तेनाभेद एवेति वाच्यं, यतो नेमौ भेदाभेदौ क्वचिदन्योऽन्यनिरपेक्षौ, किन्त्वन्योऽन्यव्याप्तिभागित्वेन स्थिताविति, व्याप्तिश्च यथाऽमीषां तथा निर्णीतमनेकशः, अत आह—

**वस्तुनस्तन्न नैरूप्यं, न चान्यदपि दूषणम् । सदिति प्रत्ययोऽप्येष, तत एवोपजायते ॥३१॥**

एवं च वस्तुनो न नैरूप्यम्, उत्पादादीनामेव वस्तुरूपतया स्थितत्वात्, न चान्यदपि दूषणं यथाऽपरं वस्तुलक्षणं स्यात्, द्वयोर्भावात्सम्बन्धशब्दप्रवृत्तिः, 'उत्पादादीनामपि वस्तुत्वसिद्धयेऽपरे उत्पादादयः परिकल्पनीयाः, वस्तुनो वा लक्षणान्तरं मृगणीय'मिति प्रकारं दूषणं न दूषणं, एत एव ह्युत्पादादयोऽन्योऽन्यसंवलिता भेदप्राधान्येन स्थितास्तत एतदेव लक्षणमित्यभिधाने तदपरोत्पादादिकल्पनायाः को नामावसरः?, यदि हि भेदाभेदात्मके शबलरूपे जात्यन्तरेऽत्र केचिदुत्पादादयो वस्तुनोऽपरे परिकल्पनावसरमुपलभेरन् तदा तद्विरहेऽपि तस्मिन् सरूपतामाबिभ्राणे वस्तुनो लक्षणान्तरं स्यात्, तेषां चोत्पादादीनां वस्तुलक्षणभूतानां वस्तुत्वसिद्धये तदपरे ते परिकल्प्येरन्, अनवस्थाभयाद्वा वस्तुनो लक्षणान्तरं मृग्येत, न चैतदस्तीति को नाम सहृदयोऽन्यथा वस्तुतत्त्वमवस्थितमन्यथा संभाव्य तुंडकंडूतिविनोदमात्रमेव यत्किञ्चनवादितया विधातुमीहेत, एतेनैतदपि प्रतिक्षिप्तं, यदुच्यते केनचित्–'वस्तुनः प्रथमे क्षणे यद्रूपं तदेव यदि द्वितीयादिक्षणेष्वपि तदोत्पत्तिरूपत्वात् प्रथमक्षणस्येव सर्वेषामुत्पत्तिरूपता स्यादिति प्रतिक्षणमुत्पादे न कस्यचित् स्थितिः, अथ प्रथमे क्षणे उत्पत्तिर्द्वितीयादिषु स्थितिस्तदोत्पत्तिस्थित्योरुत्पत्तिस्थितिमद्भ्यां भेद इति तयोरपि भेद इति क्षणमात्रावस्थायिन एव वस्तुनः संसिद्धि'रिति, इदं हि शबलवस्तुनि कथङ्कारमवकाशमासादयतीति निवेदित-

मेव, तथा नात्र सर्वथैव द्वयाभाव एवेति, कथञ्चिद्भेदाश्रयणात्, सम्बन्धशब्दप्रवृत्तिरप्यविरुद्धैवेति, भेदांशपक्षे कथममीषां वस्तुत्वमिति चेत् नायमभेदाननुविद्धः क्वचिदिति कुतोऽयं प्रसङ्गः?, यदपि 'सत्त्वं हि वस्तुनो रूप'मित्याद्युक्तं तत्रापि यदि स्वतः सदिति प्रत्ययस्तत्सत्त्वं तर्हि सदित्येष प्रत्ययः उत्पादव्ययध्रौव्ययुक्तादेवोपजायते, तद्विकलाद्वियदब्जादेः क्वचिदेतदप्रसूतेः किं नैतल्लक्षणं?, ननूत्पादादय उत्पादादिप्रत्ययहेतवो भवन्तु, कथं तेभ्यः सदादिबुद्धिः?, नहि नीलादिभ्यः पीतादिबुद्धिरुपजायते, शुक्तिकादौ तु रजतादिबुद्धिर्भ्रान्तिः, न सा तत्त्वव्यवस्थायामुपन्यासमर्हति, तदेतन्न, कथञ्चिद्व्यवस्थितानां सदादिबुद्धिहेतुत्वमप्येषामविरुद्धं, यदि ह्येते केचिदत्यन्तव्यतिरेकभाजो भवेयुस्तदा उत्पादबुद्धिमेव जनयेत् न व्ययादिबुद्धिम्, एवमन्यत्रापि स्यात्, न चैतदस्ति, यत उत्पद्यमानमेवोत्पादो विपद्यमानमेव विनाशः अवतिष्ठमानमेव चावस्थितिः, न चात्यन्तमसदुत्पद्यते, नापि सदेकान्तेन विनश्यति, न चाप्रच्युतानुत्पन्नस्थिरैकस्वभावलक्षणामेकान्तावस्थितिं किञ्चित्तनोति, ततस्त एवोत्पादादयो धर्मिप्राधान्यपरिणामाश्रयणाद्वस्तुरूपतया स्थिताः, ततः कथं तेभ्यः सदादिबुद्धिर्न प्रवर्त्तते?, एतावन्मात्रमेव हि निमित्तमेतस्या बुद्धेरुत्पादे, अन्यथाऽम्बरारविन्दादिभ्य एतदनिवृत्तिप्रसङ्ग एवेति, ततो वस्तुनः स्वकीयसत्त्वं नाम यत्किञ्चिदुच्यते तदेतदेव यदुत्पादव्ययध्रौव्याणामेवमवस्थितिः, अन्यथाऽम्बरारविन्दादिभ्य एतदनिवृत्तिप्रसङ्ग एवेति। भेदप्राधान्येन विवक्षिताः कथमेते सन्तो भवन्तीति चेत् अभेदस्यैव यथोक्तस्य तथाऽप्यभिधानादिति भेदप्राधान्येनापि विवक्षिता उत्पादादयो न यथोक्तमभेदांशं सर्वथा विजहति, ततस्ते कथं न सद्रूपाः स्युः?, ततो यथा कायैकदेशोऽपि कायस्तदात्मकत्वादस्य तथा सदंशोऽपि सद्रूप इति न कश्चिद्दोषः॥ बोधरूपादयोऽनेके धर्माः सन्ति तेषां कथं वस्तुत्वमित्याशङ्क्याह—

बोधरूपादयोऽप्येतत्त्रैरूप्याभेदवर्त्तिनः। कथञ्चित्तेन जैनेन्द्रं, सुदृशं वस्तुलक्षणम् ॥३३॥

बोधादीनां
त्रैरूप्यं

न खलु बोधरूपादयो धर्माः केचिदुत्पादादित्रयाद्भेदवर्त्तिनः, किन्तु कथञ्चिदेतद्रूपा एव, ततस्तेषामपि वस्तुत्वमव्याहतमेव, तथाहि–बोधादयस्तावदात्मनो न भिद्यन्ते, यतो मतिश्रुतावधिमनःपर्यायकेवलात्मकं पञ्चविधं ज्ञानं, विपर्यासात्मकं चैतदाद्यभेदत्रयमज्ञानाभिधेयमित्यष्टविधः साकारोपयोगः, चक्षुरचक्षुरवधिकेवलदर्शनात्मकश्चतुर्विधोऽनाकारोपयोगः, सम्यग्दर्शनचारित्रादयश्चानेकपर्यायास्तावदात्मद्रव्याव्यतिरेकिणः, आत्मा च परिणामीति सिद्धं बोधादीनां त्रयात्मकत्वं, तथा रूपादयोऽपि त्रयात्मका एव, यतः–पुद्गला एव तथा तथा परिणमंतो रूपादिरूपतां प्रतिपद्यन्ते, न पुनः परनिरपेक्षा एव केचिद्रूपादयः प्रतीयन्ते, नीलमुत्पलमित्यादिप्रतीतेः, केवलरूपादिप्रतीतौ च नीलमित्याद्येव स्यात्, न चानुत्पलव्यावृत्तिमादाय नीलरूपे उत्पलशब्दप्रयोगः, नीलात्कथञ्चित्तदभेदापत्तेः, विशिष्टं नीलमेव रूपमनुत्पलव्यावृत्तिविषय इति चेत्, न, संस्थानादिव्यतिरेकेण केवलनीलतामात्रनियतस्यैव कस्यचिद्वैशिष्ट्यासिद्धेः, न चैवमुपलब्धं, तर्हि नीलादिरूपादत्यन्तव्यतिरेक्येवास्तु, सर्वथा तद्व्यतिरेकेणाप्रतीतेः, न च प्रतीतिमपहायाप्रतीयमानं वस्तु परिकल्पनयाऽऽत्मानं विप्रलभन्ते विपश्चितः, तस्मात्पुद्गलात्मकाः सिद्धा रूपादयोऽप्युत्पादव्ययध्रौव्यात्मका इति, ननु तथाऽपि यदि बोधस्वरूपादयः उत्पादाद्यव्यतिरेकिण एव तदोत्पादाद्यद्वैतमेव स्यात्, तथा च योऽयं प्रतिप्राणि प्रत्यक्षादिप्रमाणप्रसिद्धः स्तम्भकुम्भाम्भोजादिरूपो विचित्रो व्यवहारः स सर्वोऽपि प्रलीयेत, किञ्च–'धर्माधर्माकाशपुद्गलाः, द्रव्याणि जीवाश्च, नित्यावस्थितान्यरूपाणि, रूपिणः पुद्गला' इत्यादिर्भवद्राद्धान्तोऽपि वस्तुवैचित्र्यव्यवस्थापनपरः कथङ्कारमित्थमुपगमे सुव्यवस्थितः स्यात्?, तदेतदसत्, अभिप्रायापरिज्ञानात्, यतो न क्वचिदुत्पादादयः सर्वत्र सर्वथैकस्वभावा एव केचित्सन्ति

येनायं प्रसङ्गः संगच्छेत, किन्तु केषाञ्चिदेवामीषां क्वचिद्विशिष्टः कोऽपि स्वभावः, ततः केचिदेते बोधात्मानः केचिच्च रूपाद्यात्मानो भवन्तः परस्परं कथञ्चित्सामान्यविशेषरूपाः सन्तो यथोपलब्धाखिलव्यवहारहेतवो भवन्तीति न कश्चिद्दोषः, तत उत्पादव्ययध्रौव्ययुक्तं वस्त्विति येनोक्तं वस्तुलक्षणं प्रमाणोपपन्नत्वात्सुदृष्टं, तथाहि–अन्यत्राप्युक्तम्–'उत्पादव्ययध्रौव्ययुक्तं सदि'ति, वस्त्विति च न नानार्थमिति, एतावच्च तद्वस्तुलक्षणमङ्गीक्रियते तदा वैशेषिकाणां षट् पदार्थाः, नैयायिकानां षोडश, बौद्धानां द्वादशायतनानि, कापिलानां पञ्चविंशतिः तत्त्वानि, चार्वाकाणां च पृथिव्यादि चत्वारि भूतानि, यानि वस्तुत्वेनाभिमतानि तान्यपि वस्तुत्वं भजन्ते, नान्यथा, तत्र शिष्यावबोधाय किञ्चित्तावत्पराभ्युपगममुपदर्शयामः, न ह्यन्यथा यथाप्रतिपादितमर्थमकल्पमेधसः शिष्याः प्रतिपत्तुमुत्सहन्ति, ज्ञाते तु तदुपगमे सुलभस्तेषामवबोध इति।

**वैशेषिकोक्तपदार्थानां स्याद्वादमूलता**–तत्र वैशेषिकाभ्युपगमस्तावद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः, तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव, गुणाः रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्काराद्दृष्टशब्दाख्याश्चतुर्विंशतिः, अदृष्टस्य धर्माधर्मरूपतया द्विधाऽवस्थानात्, उत्क्षेपणावक्षेपणाऽऽकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि, गमनाद् भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पवननमनोन्नमनादयो गमनविशेषा न जात्यन्तराणि, सामान्यं द्विविधं–परमपरं च, अनुवृत्तिप्रत्ययकारणं तत्र परं सत्ता महाविषयत्वात्, सा चानुवृत्तेरेव हेतुत्वात्सामान्यमेव, द्रव्यत्वाद्यपरमल्पविषयत्वात्, तच्च व्यावृत्तेरपि हेतुत्वात्सामान्यं सद्विशेषाख्यामपि लभते, नित्यद्रव्यवृत्तयो विशेषास्ते खल्वत्यन्तव्यावृत्तिबुद्धिहेतुत्वाद्विशेषा एव, अयुतसिद्धानामाधार्या(धेया)धारभूतानां यः सम्बन्ध

इह प्रत्ययहेतुः समवाय इति, एवं धर्मैर्विना धर्मिणां समुद्देशः कृतः, धर्माः पुनः षण्णामपि पदार्थानां साधर्म्यमस्तित्वमभिधेयत्वं ज्ञेयत्वं चेत्यादि, इह च धर्माः षट्पदार्थेभ्यो न व्यतिरिच्यते, किन्तु त एवान्योऽन्यापेक्षया धर्मा धर्मिणश्च भवन्ति, तथाहि–अस्तित्वं तावत्स्वरूपवत्त्वमिष्टं, अभिधेयत्वमप्यभिधानप्रतिपादनयोग्यत्वं, तदपि वस्तुनः स्वरूपमेव, ज्ञेयत्वं–ज्ञानयोग्यत्वं, तदपि तस्य स्वरूपमेव, भावस्य हि स्वरूपमेवावस्थाभेदेन ज्ञेयत्वमभिधेयत्वं चोच्यत इत्यादि हि व्याख्यातृभिर्व्याविर्ण्यते, तत्र च यद्येते पदार्था नोत्पादव्ययध्रौव्यभाजो भवेयुस्तदा खरविषाणवत् किं बिभृयुः ?, अभिधेयत्वज्ञेयत्वाद्यवस्थाभेदोऽपि न त्रैरूप्येण विना संभवति, तथा हि–साऽवस्था यद्येकान्तेन भावादव्यतिरिक्ता तदा तत्स्वरूपवत्सर्वदा स्याद्, न चायमभ्युपगमः, तद्व्यतिरेकेऽपि का नामावस्था ?, न हि घटाद्यत्यन्तव्यतिरिक्तः पटः समुत्पद्यमानो घटादिरूपावस्थो भवति, तद्भेदे च भावस्वरूपं प्रागिव न ज्ञायेताभिधीयेत वा, तस्माद्यदि यथोक्तन्यायेन षट् पदार्था वैशेषिकैर्व्यवस्थापयितुमिष्यन्ते तदोत्पादादयस्तै(रवश्यमभ्युपगन्तव्याः), तेऽपि कथंचिद्भेदाभेदरूपा एव।

**नैयायिकोक्ताः पदार्थाः स्याद्वादमूलता च तेषाम्**–नैयायिकाः पुनर्वर्णयन्ति यथा प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादज(ल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निश्रेयसावाप्तिः, तच्च)प्रमाणात्, तच्चतुर्द्धा, तद्यथा–प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि, तत्र प्रत्यक्षम्–इन्द्रियसन्निकर्षोत्पन्नं ज्ञानमपव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षं, तत्पूर्वकं त्रिविधमनुमानं–पूर्ववत् शेषवत् सामान्यतो दृष्टं चेति, तत्र पूर्ववत्कारणात्कार्यानुमानं, यथा–मेघोन्नतेर्भविष्यति वृष्टिः, शेषवत् कार्यात्कारणानुमानं, यथा–विशिष्टान्नदीपूरदर्शनादुपरि वृष्टो देव इति, सामान्यतो दृष्टं नाम यथा देवदत्तादौ गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य दिनकरेऽपि सा गतिपूर्विका समधिगम्यते, प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं, यथा गौस्तथा गवय

इति, आप्तोपदेशः शब्दः, आगम इत्यर्थः, तदेवमिदं चतुर्विधं प्रमाणमभिहितं, तथा शरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं, किं स्यादित्यनवधारणात्मकः प्रत्ययः संशयः, किमयं स्थाणुः स्यादुत पुरुषः ? इति, येन प्रयुक्तः प्रवर्त्तते तत्प्रयोजनम्, अविप्रतिपत्तिविषयापन्नोऽर्थो दृष्टान्तः, सिद्धान्तश्चतुर्विधस्तद्यथा—सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अभ्युपगमसिद्धान्तः अधिकरणसिद्धान्तश्चेति, सर्वतन्त्राविरुद्धः सर्वतन्त्रसिद्धान्तो यथा प्रमाणं चाक्षुषमिति, समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तो यथा परमाणवो, यथा पदार्थाः, समानतन्त्रे काणादे सिद्धोऽयमर्थः, परतन्त्रे च साङ्ख्यादिशास्त्रे न सिद्धः, अपरीक्षितोऽपि कश्चिदर्थो बुद्ध्यतिशयचिख्यापयिषया प्रौढवादिभिस्तथेत्यभ्युपगम्यमानोऽभ्युपगमसिद्धान्तः, यथाऽस्तु द्रव्यं शब्दस्तथाऽप्यनित्य इति, यस्मिन्नर्थे सिद्ध्यति तदनुयायीन्यर्थान्तराणि सिद्ध्यन्ति सोऽधिकरणसिद्धान्तः, यथेन्द्रियव्यतिरिक्त आत्मा दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्युक्ते गुणव्यतिरिक्तो गुणी नियतविषयाणीन्द्रियाणीत्याद्यपि सिध्यतीति, तथा प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः, संशयादूर्ध्वं भवितव्यताप्रत्ययस्तु(त)र्कः, भवितव्यमत्र स्थाणुना पुरुषेण वेति, संशयतर्काभ्यामूर्ध्वं निश्चित प्रत्ययो निर्णयः, यथा पुरुष एवायं स्थाणुरेव वा, तिस्रः कथाः—वादो जल्पो वितण्डा चेति, तत्र पक्षप्रतिपक्षयोर्नियमेन स्वयं सम्यक्त्वेनासम्यक्त्वेनावधारितसाधनदूषणोपन्यासो वादः, पक्षप्रतिपक्षयोः स्वयं सम्यक्त्वेन असम्यक्त्वेन वाऽभिमते साधनदूषणोपन्यासो जल्पः, वादजल्पौ प्रतिपक्षस्थापनाहीनौ वितण्डा, तत्र वादवितण्डे शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोऽर्थिभिस्तत्त्वबुभुत्सुभिरमत्सरैः सहान्यतरपक्षनिर्णयावसाने क्रियेते, जल्पवितण्डे तु वादिप्रतिवादिसभापतिप्राश्निकाग्रे लाभपूजाख्यातिकामे समत्सरैर्दस्युभिः सह तत्त्वज्ञानसंरक्षणार्थं, प्रतिवादिस्खलितपर्यवसाने असिद्धविरुद्धानेकान्तिकादयो हेत्वाभासाः, वचनविघातोऽर्थान्तरपरिकल्पनया छलं, तत्त्रिविधं—वाक्छलं सा-

मान्यच्छलमुपचारच्छलं च, तत्र सामान्यशब्दाभिहितेऽर्थः वक्तुरभिप्रेतादर्थान्तरपरिकल्पनया प्रतिषेधो वाक्छलं, तस्योदाहरणम्–अहो नु खल्वयमाढ्यो वैधवेयो नवकम्बलत्वादित्युक्ते केनचित् छलवाद्याह–कुतोऽस्य नव कम्बलाः ? इति, इह हि प्रत्यग्रकम्बलसम्बन्धित्वं वक्तुर्विवक्षितं, छलवादी तु नवसङ्ख्याऽवच्छिन्नकम्बलसम्बन्धित्वं विवक्षितमित्यध्यारोप्यासंभवेन निराकरोति, श्रूयमाणे नैकान्तिक-सामान्यसद्भावे तस्य हेतुत्वेन कारणत्वेन वा परिकल्पनया प्रतिषेधः सामान्यच्छलम्, उदाहरणम्–अहो नु खल्वयं ब्राह्मणश्चतु-र्वेदाभिज्ञ इत्युक्ते केनचित् कोऽपि वाद्याह–किमत्राश्चर्यं ?, संभवति खलु ब्राह्मणे चतुर्वेदाभिज्ञत्वं, इत्युक्ते छलवादी ब्राह्मणत्वस्य चतुर्वेदाभिज्ञत्वे हेतुत्वमुक्तमित्यसद्रूपार्थकल्पनां कृत्वा प्रतिषेधमाह–नायं हेतुः, व्रात्येनानैकान्तिकत्वात्, नापि कारणं ब्राह्मणत्वं चतुर्वेदाभिज्ञत्वे, व्रात्येऽपि तत्सम्भवेन चतुर्वेदाभिज्ञत्वप्रसङ्गात्, तदेतत्सामान्यच्छलम्, असंभवति भूतार्थकल्पनया प्रतिषेध उप-चारच्छलं, मंचाः क्रोशन्तीत्युक्ते केनचित् छलवाद्याह–पुरुषाः क्रोशन्ति न मञ्चास्तेषामचेतनत्वात्, तदेतत्त्रिविधं छलं, प्रयुक्ते हेतौ प्रतिपक्षसमीकरणाभिप्रायेण प्रत्यवस्थानं जातिः, सा सङ्क्षेपतश्चतुर्विंशतिभेदा, तथा च–साधर्म्य १ वैधर्म्य २ उत्कर्षा ३ पकर्ष४वर्ण्य५-अवर्ण्य६ विकल्प७ साध्य ८ प्राप्ति ९ अप्राप्ति १० प्रसङ्ग ११ प्रतिदृष्टान्त १२ अनुपपत्ति १३ संशय १४ प्रकरण १५ हेतु १६ अर्था-पत्ति १७ अविशेष १८ उपपत्ति १९ उपलब्धि २० अनुपलब्धि २१ नित्य २२ अनित्य २३ कार्य २४ समा जातयः, समशब्दः प्रत्ये-कमभिसंबध्यते, साधर्म्यसमा उत्कर्षसमेत्येवं सर्वत्रापीति, तत्र साधर्म्योक्ते हेतौ वैधर्म्योक्ते वा साधर्म्येण प्रत्यवस्थानं साधर्म्य-समा जातिः, वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिरिति, तत्र साधर्म्योक्ते हेतौ साधर्म्यवैधर्म्यसमयोर्जात्योरुदाहरणं यथा अनित्यः शब्दः कृतकत्वात् पटवत्, न ह्यत्र विशेषोऽस्ति येनानित्यसाधर्म्यादनित्यो भवति, न तु नित्यसाधर्म्यान्नित्य इति सेयं साधर्म्य-

समा जातिः, यदि चानित्यपटसाधर्म्यादनित्य इष्यते तदैतद्वैधर्म्यान्नित्य किं नेष्यते ?, अस्ति च पटवैधर्म्यमपि शब्दे, पटो रूपादिमान् शब्दस्तु तद्रहित इति, न चात्र विशेषोऽस्ति, अनित्यसाधर्म्यादनित्येन भाव्यं, न पुनरनित्यवैधर्म्यान्नित्येनेति सेयं वैधर्म्यसमा जातिरिति, एवं वैधर्म्योक्ते हेतावपि उभयथा प्रत्यवस्थानं, उदाहरणं तु यन्नित्यं तदकृतकं दृष्टं यथाऽऽकाशं, कृतकश्च शब्दस्तस्मादनित्य इति वैधर्म्योक्ते हेतौ पर आह–यदि नित्यवैधर्म्यात् कृतकत्वादनित्य इष्यते तर्हि घटाद्यनित्यवैधर्म्यादमूर्त्तत्वादिलक्षणान्नित्यः किं नेष्यते ?, न चात्र विशेषोऽस्ति, नित्यवैधर्म्यादनित्येन भवितव्यं, न पुनरनित्यवैधर्म्यान्नित्येनेति, सेयं वैधर्म्योक्ते वैधर्म्यसमा जातिः, यदि च नित्याकाशवैधर्म्यादनित्यः शब्दस्तर्हि तत्साधर्म्यान्नित्यः किं नेष्यते ?, न तत्र विशेषोऽस्ति, येन नित्यवैधर्म्यादनित्येन भाव्यं, न पुनर्नित्यसाधर्म्यान्नित्येनेति सेयं वैधर्म्योक्ते साधर्म्यसमा जातिः, अनयोश्च जात्युत्तरत्वं सदोषत्वादविनाभावेन विना साधर्म्यस्य वैधर्म्यस्य च हेतुत्वानभ्युपगमात्, अतो येन विना हेतुर्न भवति तस्यैव गमको, न पुनः साधर्म्यवैधर्म्यमात्रेण यस्य कस्यचिदेव धर्मस्येति, इतश्चानयोर्जात्युत्तरत्वं, पूर्वस्य हेतोर्व्याप्तेरखण्डनादिति, साध्यदृष्टान्तयोर्धर्म(र्विशेषधर्म)विकल्पाद् दृष्टान्तधर्मस्य दार्ष्टान्तिके संयोजनमुत्कर्षसमा जातिः, यथा तस्मिन्नेव शब्दानित्यत्वानुमाने परः प्रत्यवतिष्ठते–यदि कृतकत्वाद् घटवदनित्यः शब्दस्तदा घटवदेव सावयवः प्राप्नोति, अथ कृतकत्वेऽपि सावयवः शब्दो नेष्यते अनित्योऽपि तर्हि न स्यात्, अत्राप्यविनाभावस्य विशेषस्य सद्भावादविशेषादित्यसिद्धं, कृतकस्य ह्यनित्यत्वसिद्धावविनाभावोऽपि, नतु सावयवत्वसिद्धौ, व्यभिचारात्, तथा च कर्मापि कृतकं न सावयवमिति व्यभिचारः, न चात्रापि प्राक्तनस्य हेतोः किञ्चिद् दूषणमस्ति, साध्यदृष्टान्तयोर्धर्मविकल्पनाद्दृष्टान्तधर्माभावस्य दार्ष्टान्तिके संयोजनमपकर्षसमा जातिः, उदाहरणं च–अश्रावणो घटो दृष्टः शब्दोऽपि कृतकत्वा-

दश्रावणः प्राप्नोति, अथ कृतकत्वेऽप्यश्रावणः शब्दो नेष्यते अनित्योऽपि तर्हि नष्टव्यो, विशेषाभावात्, अत्रापि पूर्वोक्तन्यायादेवा-
विशेषासिद्धिः, साध्यवद् दृष्टान्तस्यापि हेतुप्रतिपाद्यत्वेन प्रत्यवस्थानं वर्ण्यसमा जातिः, उदाहरणं यथा–शब्दो यदि कृतकानुमाने-
नानित्यो वर्ण्यते, तथा सति घटोऽपि कृतकानुमानेन वर्ण्यः स्यात्, अत्रापि विप्रतिपत्तिविषयस्यैव हेतुसाध्यत्वाददोषः, यथा
हि विप्रतिपत्तिविषयस्यैव पर्वतादेरेव धूमवत्त्वेन वह्निमत्ता साध्यते, न महानसादेरपि, तस्याः पूर्वमेव प्रत्यक्षसिद्धत्वेनाविप्रतिपत्ति-
विषयत्वात्, तद्वदेव प्रकृतेऽपीति, दृष्टान्तवत्साध्यस्यापि हेत्वप्रतिपाद्यत्वेन प्रत्यवस्थानमवर्ण्यसमा जातिः, उदाहरणं–यद्यनवस्था-
भयात् कृतकानुमानेनानित्यो घटो न व्यावर्ण्यते शब्दोऽपि तर्हि न तेन वर्ण्यः स्यात् अविशेषात्, इहापि सकलजनप्रसिद्धधूमा-
दिन्याय एवानुसरणीयः, एवं वर्ण्यावर्ण्यसमे जाती साध्यसमाया उक्तिमात्रेण भिद्येते। दृष्टान्ते धर्मविकल्पदर्शनाद्दार्ष्टान्तिकेऽपि
धर्मान्तरप्रसङ्गेन प्रत्यवस्थानं विकल्पसमा जातिः, उदाहरणं तु यथा कृतकत्वाविशेषेऽपि किञ्चित्मूर्त्तं दृष्टं घटादि, किञ्चिदमूर्त्ति
रूपादि, तथैव कृतकत्वाविशेषेऽपि किञ्चिन्नित्यं किञ्चिदनित्यमित्येष विकल्पोऽस्तु, विशेषाभावात्, तदेवमपि विकल्पने सकला-
नुमानोच्छेदप्रसङ्गः, तथा च सकललोकशास्त्रव्यवहारविप्लवप्रसक्तिरिति, साध्यवद् दृष्टान्तेऽपि साध्यत्वप्रसङ्गेन प्रत्यवस्थानं साध्य-
समा जातिः, निदर्शनं तु यदि कृतकत्वेन हेतुना नित्यविशेषणः शब्दः साध्यते तदा तेनैवान्येन वा हेतुना घटोऽप्यनित्यविशेषणः
शब्दवत् साध्यः, अथ घटो न साध्यते शब्दोऽपि तर्हि न साध्यो, अविशेषहेतुभावादिति, इयं तु साध्यसमा जातिर्वर्ण्यावर्ण्यसम-
जातिप्रतिषेधादेव प्रतिषिद्धेति, प्राप्त्या प्रत्यवस्थानं प्राप्तिसमा जातिः, अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमा जातिः, अनयोरुदाहरणं–
हेतुः साध्यं प्राप्य साधयत्याहोस्विदप्राप्येति?, यदि प्राप्य साधयति किं कस्य साध्यं साधनं वा?, अङ्गुल्योरिव प्राप्तेरुभयत्रा-

विशेषात्, प्राप्तिसमोदाहरणम्, अथाप्राप्य साधयति तदनुचितं, अप्रापकस्य साधकत्वानुपपत्तेः, न ह्यग्निः काष्ठमप्राप्तं दहति, प्रदीपो वा घटाद्यप्राप्य प्रकाशयति, इत्यप्राप्तिसमोदाहरणम्, अनयोर्यथाक्रमं प्रतिसाधनं प्राप्त्यविशेषेऽपि मृत्पिण्ड एव कुलालादिभिर्घटः क्रियमाणः प्रदीपेन वा प्रकाश्यमानो दृश्यते, न तद्विपर्ययः, तथा प्रकृतेऽपि, एवमप्राप्तिपक्षेऽपि न दोषः, तथा ह्यप्राप्य पात्रविशेषे व्यभिचारकर्म पीडनमुपलभ्यते, न विपर्ययेऽपि, तस्मादुभयथाऽप्यप्रतिषेधः, प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तय एवैते साध्यसाधनादयो धर्माः समुपलभ्यन्ते, ते च निराकर्तुं न शक्यन्ते, सर्वप्रमाणविरोधापत्तेः, किञ्च–प्रतिषेधोऽपि प्रतिषेध्यस्य प्राप्त्या प्रतिषेधयत्याहोस्विदप्राप्त्येत्यादि चोद्यमनिवार्यमेवेति, प्रमाणप्रश्नापरिनिष्ठया प्रत्यवस्थानं प्रसङ्गसमा जातिः, उदाहरणं– यदि कृतकत्वाद् घटवदनित्यः शब्दः साध्यते कृतकत्वस्य कुतः सिद्धिः?, प्रत्यक्षाच्चेत् प्रत्यक्षस्यापि कुतः प्रमाणात्प्रामाण्यसिद्धिरित्येवमुत्तरोत्तरत्रापीति, अत्र प्रतिसमाधानम्–एवमपरिनिष्ठया पर्यनुयोगं कुर्वाणः द्रष्टव्यो भवान्–किमात्मनः सर्वत्र संशय एव किं वा क्वचिन्निर्णयोऽप्यस्ति?, प्रथमपक्षे संशयानुपपत्तिः, उभयथा निर्णयपूर्वको हि सन्देहः, स कथं निर्णयाभावे भवितुमिष्टे?, द्वितीयपक्षे च तन्न्यायेनान्यत्र निर्णयलाभादपरिनिष्ठया प्रमाणपर्यनुयोगानुपपत्तिः, प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः, उदाहरणं तु यथा श्रोत्रग्राह्यं शब्दत्वं नित्यं दृष्टं तथा शब्दोऽपि नित्यः स्यात्, न चात्र विशेषो, घटादिदृष्टान्तादनित्येन भवितव्यं, न पुनः शब्दत्वदृष्टान्तान्नित्येनेति, तदेतदसत्, प्राक्तनदृष्टान्ताप्रतिषेधात्, दृष्टान्ते खल्वभिहिते दृष्टान्तदोष एवोद्भावनीयो, न पुनः प्रतिदृष्टान्तेन प्रत्यवस्थानं, तथा प्रत्यवस्थाने प्राक्तनस्य साधनाङ्गत्वसिद्धेः, साधर्म्यवैधर्म्यसमयोः साधर्म्यवैधर्म्यान्तरप्रत्यवस्थानं इह तु दृष्टान्तान्तरेणेति भेदः, प्रागुत्पत्तेः कारणभावानुपपत्त्या प्रत्यवस्थानं अनुत्पत्तिसमा जातिः, उदाहरणं

च अनित्यः शब्दः कार्यत्वादित्युक्ते परः प्रत्यवतिष्ठते—प्रागुत्पत्तेः शब्दस्यानित्यत्वकारणं कार्यत्वं नास्तीति शब्दो गगनादिवन्नित्यः प्राप्नोति, नित्यस्य चोत्पत्तिरनुपपन्नेति, अत्रोत्तरम्—उत्पन्नस्य कारणोपपत्तेरप्रतिषेधः, प्रागुत्पत्तेरनित्यत्वकारणं कार्यत्वं नास्तीति ब्रुवतोत्पन्नस्यानित्यत्वसाधकं कारणं कार्यत्वं च शब्दस्याभ्युपगतं भवतीति, वैधर्म्यात्साध्यसिद्धौ क्रियमाणायां साधर्म्यात्संशयेन प्रत्यवस्थानं संशयसमा जातिः, निदर्शनं तु—यदि नित्याकाशवैधर्म्याभूत(द् घटे)कृतकत्वादनित्यत्वनिर्णयः शब्दे तर्हि नित्यत्वानित्यत्वसाधर्म्यात्प्रमेयत्वादेः संशयोऽपि स्यात्, अथ संशयकारणे सत्यपि संशयो नेष्यते तर्हि निर्णयकारणे सत्यपि निर्णयो मा भूत्, विशेषाभावात्, अत्र प्रतिसमाधिः—दृष्टत्वाददोषः, तथाहि—ऊर्द्धत्वसाधर्म्यदर्शनात्संशयं विबाध्य निर्णयः समुपजायते इति दृष्टं, दृष्टं चापलपन्नयं न लौकिको नापि परीक्षक इत्युपेक्षामहीति, प्रत्यनुमानेन प्रत्यवस्थानं प्रकरणसमा जातिः, निदर्शनं—अनित्यः शब्दः कृतकत्वाद् घटवत् इत्युक्ते पर आह—नित्यः शब्दः श्रावणत्वात् शब्दत्ववत्, तदेतदसममुत्तरं, प्राक्तनहेतोर्व्याप्तेरनिर्मूलनात्, साधर्म्यवैधर्म्याभ्यां प्रकरणसमा जातिः कथं भिद्यते इति चेत्, उच्यते, तत्र हि प्रयोगमकृत्वैव साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं, इह तु प्रयोगं कृत्वेत्येवमुक्तिभेदोपपत्तिरिति, त्रैकाल्यासिद्धेर्हेतोरहेतुत्वेन प्रत्यवस्थानमहेतुसमा जातिः, उदाहरणं—साधनोपन्यासानन्तरं प्रतिवाद्याह—किमिदं साधनं साध्यात्पूर्वं पश्चाद्युगपद्वा?, तत्र यदि पूर्वं साधनमसति साध्ये कस्य तत्साधनं?, अथ पूर्वं साध्यं पश्चात्साधनं तदाऽसति साधने कस्य तत्साध्यं?, न ह्यनागतमतीतस्य वर्त्तमानस्य वा साधनमुपपद्यते, अथ युगपत्साध्यं साधनं च तथाऽपि युगपदुत्पन्नत्वादिदं साध्यमिदं साधनमिति साध्यसाधननियमानुपपत्तिः, अतस्त्रैकाल्यासिद्धेर्हेतोरहेतुत्वमिति, इहोत्तरं—साध्यसाधनयोर्यथासम्भवं पूर्वापरसहभावादप्रतिषेधः, क्वचित्पूर्वं साध्यं पश्चात्साधनं यदा कार्येण कारणमनुमीयते, क्वचिद्युगपत्सिद्धे

साध्यसाधने यदा रूपेण स्पर्शोऽनुमीयते, यत्र पुनर्नित्ये साध्यसाधने न तत्र पूर्वापरादिभावो यथाऽऽत्ममनसोरिति, तथा प्रतिषेधोऽपि प्रतिषेध्यात् पूर्वं पश्चाद्युगपद्वा ?, तत्र यदि पूर्वं तदाऽसति प्रतिषेध्ये (न प्रतिषेधः, पश्चाच्चेत् प्रतिषेध्यासिद्धौ व्यर्थः प्रतिषेधः, यदि युगपत् ) तदाऽपि सव्येतरगोशृङ्गयोरिव प्रतिषेधप्रतिषेध्यत्वानुपपत्तिः, अतस्त्रैकाल्यासिद्धेः प्रतिषेधो नोपपन्न इति (परमेष कारणादिप्रतिषेधेन कार्यादिप्रतिषेधे पूर्वादिभावात्) निरवद्यो हेतुः सिध्यति, अर्थापत्त्या प्रत्यवस्थानमर्थापत्तेः समा जातिः, उदाहरणं तु–यदि कृतकत्वाद्धेतोरनित्यः शब्दस्तर्ह्यर्थादापन्नमन्यस्माद्धेतोर्नित्य इति, तदेतदसारम्, अन्यस्मिन्नर्थे निरूपितेऽन्यस्यानुपपन्नस्यार्थस्यार्थादापत्तेरनुपपत्तेः, न हि घनस्याधः पतनमित्युक्तेऽर्थादापद्यते द्रवाणामपामपतनमिति, किञ्च–शब्दस्य कृतकत्वेनानित्यत्वे प्रतिपाद्यमाने तेनाप्रतिपादितत्वादितरस्य नित्यत्वस्यार्थादापत्तितः सिद्धिमभ्युपगच्छतो नित्यत्वाभावसिद्धिरपि स्यात्, कृतकत्वेन हेतुना नित्यत्वाभावस्यापि प्रतिपादितत्वादिति, एकधर्मोपपत्तेर्विशेषे सर्वाविशेषप्रसङ्गेन प्रत्यवस्थानमविशेषसमा जातिः, उदाहरणं तु यद्येकस्य कृतकत्वस्य धर्मस्योपपत्तेरनित्यत्वविशेषः साध्यते शब्दस्य तदा सत्त्वस्यैकस्य धर्मस्योपपत्त्या सर्वभावानामनित्यत्वमविशेषः प्रसज्यते, विशेषाभावादिति, तदेतदसत्, विशेषाभावस्यासिद्धत्वात्, तथाहि–शब्दानित्यत्वसिद्धौ कृतकस्येव सर्वभावानामनित्यत्वसिद्धौ सत्त्वहेतोर्व्याप्त्यसम्भवे विशेषसिद्धिरिति, व्याप्त्यसम्भवश्च सत्त्वहेतोरगम(कत्वा)विरोधात्, तथाहि–आगमेनात्मप्रभृतीनां नित्यत्वं प्रतीयते, न चागमस्याप्रामाण्यं, क्षणभङ्गनिराकरणाद्वास्तवसामान्यव्यवस्थापनात्संप्लवनिरूपणादात्त(रब्ध)समापनाच्चेति, उभयत्र हेतूपपत्त्या प्रत्यवस्थानमुपपत्तिसमा जातिः, उदाहरणं तु–यद्यनित्यत्वहेतूपपत्तेः शब्दस्यानित्यत्वमिष्यते नन्वेवं तर्ह्यस्पर्शवत्त्वादिनित्यहेतूपपत्तेर्नित्यत्वमपि किं नेष्यते ?, न ह्यत्र विशेषोऽस्तीति, अस्यास्तु साधर्म्यवैधर्म्याभ्यामुक्तिभेदेन भेदः,

प्रतिसाधनं–उभयत्र हेतूपपत्तेरिति वदताऽभ्यनुज्ञातं तावदनित्यत्वहेतूपपत्तेरनित्यत्वं, अभ्यनुज्ञातस्य च निषेधो न युक्तो, न चास्पर्शत्वादेर्नित्यसिद्धौ हेतुत्वमनैकान्तिकत्वादिदोषोपहतत्वादिति, साध्यप्रतिपत्तावुपन्यस्तहेत्वभावेऽपि ध्वन्यन्तरेषु साध्योपलब्ध्या प्रत्यवस्थानमुपलब्धिसमा जातिः, निदर्शनं तु–पृथिव्यादौ कार्यत्वसिद्धये निर्दिष्टस्य सावयवत्वाख्यहेतोरभावेऽपि बुद्ध्यादौ कार्यत्वमुपलभ्यत इत्यप्रयोजकोऽयं हेतुरिति तदेतदसदुत्तरं, सपक्षैकदेशवृत्तेरपि धूमादेर्गमकत्वस्यानुमानप्रामाण्यवादिभिरभ्युपगमादिति, अनुपलब्धेरभावसिद्धौ क्रियमाणायामनुपलब्धेरप्यनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः, निदर्शनं तु विवादाध्यासिते काले शब्दोऽसत्त्वान्नोपलभ्यते, अनुपलब्धिकारणेष्वसत्स्वनुपलभ्यमानत्वात् प्रध्वस्तानुत्पन्नघटवदित्युक्ते पर आह–यदैवासत्त्वं शब्दस्य तदा तदनुपलब्धेरप्यत एव हेतोरसत्त्वं, विशेषाभावाद्, असत्त्वे च शब्दानुपलब्धेस्तद्विशब्दो(षो)पलब्धिसिद्धिः, तत्सिद्धौ च सर्वदा सद्भावसिद्धिरिति, तदेतदसत्, शब्दस्यानुपलब्धेरनुपलम्भस्यासिद्धत्वात्, उपलभ्यते हि शब्दस्यानुपलम्भः, सकृदेव मयाऽसौ श्रुतः शब्दो, न पूर्वं, नाप्यूर्ध्वमिति प्रतीतिसिद्धेरिति, अनित्यस्य धर्मस्य धर्मिणि नित्यानित्यविकल्पेन प्रत्यवस्थानं नित्यसमा जातिः, निदर्शनं यदिदमनित्यत्वं कृतकत्वेन शब्दे साध्यते तद्यदि नित्यं तर्हि शब्दस्यापि नित्यत्वप्रसङ्गः, इतरथा कथमसति धर्मिणि धर्मः स्यात्?, नित्यत्वे च शब्दस्यानित्यत्वानुपपत्तिः, अथानित्यमनित्यत्वं तथाऽप्यनित्यत्वस्य सर्वदा शब्दधर्मिण्यभावात् तस्य नित्यत्वापत्तिरिति, अत्रोत्तरम्–अनित्यत्वस्य सर्वदा शब्दधर्मिण्यनित्यत्वे चोभयथाऽपि शब्दस्य नित्यत्वं, नित्यत्वे चानुपपन्नमनित्यत्वमिति ब्रुवताऽभ्यनुज्ञातमनित्यत्वं शब्दस्य, अन्यथा कथमेवमभिधानं?, अभ्यनुज्ञातस्य चानुपपन्नो निषेध इति, अथ मतं–नानित्यत्वं मया शब्दे निषिध्यते, किन्तु नित्यत्वमप्युपपाद्यते, तदप्यनुपपन्नं, नित्यत्वानित्यत्वयोर्विप्रतिषेधात्मकत्वेनैकत्वा-

सम्भवाद्, इतरथा सर्वस्य सर्वात्मकत्वेऽपि विरोधाभावादिष्टानिष्टफलप्राप्तिपरिहारार्थिनां साधनविशेषप्रवृत्तिनिवृत्त्योरभावः स्यात्, यत्पुनरेतन्नित्यत्वं नित्यमुतानित्यं?, तत्रानित्यत्वं प्रध्वंसरूपं प्रध्वंसश्च नित्यः, न च तन्नित्यत्वे शब्दादेरपि नित्यत्वं, तस्य तत्रानाश्रितत्वात्, एकाश्रयसमवेतो हि धर्म आश्रयनित्यत्वमन्तरेण न घटते, न चायं प्रध्वंसः क्वचिदपि समवेतः, तत्कथं तन्नित्यत्वेन तत्प्रतियोगिनां शब्दादीनामपि नित्यत्वमिति, साध्यदृष्टान्तयोः साधर्म्यात्तुल्यधर्मोपपत्तौ सर्वानित्यत्वप्रसङ्गेन प्रत्यवस्थानमनित्यसमा जातिः, उदाहरणम्—अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतः सर्वभावानामनित्यत्वं प्रसज्यते, अस्ति घटेन साधर्म्यं सर्वभावानामस्तित्वादि, न चात्र विशेषो विद्यते येन घटसाधर्म्याच्छब्दस्यैवानित्यत्वं, न सर्वभावानामिति, अस्यास्त्वविशेषसमायाः उक्तिभेदाद्भेदस्तेन तत्रोक्तमुत्तरमिहाप्यनुसरणीयं, किञ्चान्यत्—साधर्म्यस्याहेतुत्वे प्रतिषेधानुपपत्तिः, तस्यापि साधर्म्यरूपानपायादिति, कारणवत्त्वस्य हेतोः सन्दिग्धासिद्धत्वेन प्रत्यवस्थानं कार्यसमा जातिः, निदर्शनम्—अनित्यः शब्दः कारणवत्त्वात्, यत्कारणवत्तदनित्यं दृष्टं यथा घटः, तथा च कारणवान् शब्दः, संयोगविभागशब्देभ्यो निष्पद्यमानत्वात्, तस्मादनित्य इत्युक्ते कश्चिदाह—संयोगविभागौ शब्दस्याभिव्यक्तिकारणमाहोस्विदुत्पत्तिनिमित्तमिति सन्देहः, कारणानामुभयथा व्यापारदर्शनात्, यथा कारणानि कानिचिदभिव्यक्तौ व्याप्रियन्ते कानिचिदुत्पत्तौ, अतो न ज्ञायते किं संयोगादेः कारणत्वादभिव्यज्यते शब्दः किं वोत्पद्यत इति?, तदेतदसत्, उच्चारणात् प्रागूर्द्ध्वं च शब्दसत्त्वे प्रमाणाभावात्, असत्त्वे चास्ति प्रमाणं, तथा च विवादाध्यासिते काले शब्दोऽसत्त्वान्नोपलभ्यते, अनुपलब्धिकारणेष्वसत्स्वनुपलभ्यमानत्वात्, प्र(त्यवस्थानतो भेदः कारणादि)ति। एवं जातयो व्याख्याताः। वादिप्रतिवादिनोरन्यतरस्य (यत्) पराजय(स्थान)मिति तन्निग्रहस्थानं, यद्यपि छलजात्योरपि निग्रहस्थानत्वं प्रा(गुक्तं तत्तन्नामकतत्त्व)भेदे

तथाऽपि सामान्यन्यायतया तेषामपि तद्भेदानां परिज्ञानार्थं द्वाविंशतिभेदं प्रतिपाद्यते, तथा च (न्यायसूत्रं–प्रतिज्ञा)हानिः १ प्रतिज्ञान्तरं २ प्रतिज्ञाविरोधः ३ प्रतिज्ञासंन्यासः ४ हेत्वन्तरम् ५ अर्थान्तरं ६ निरर्थकम् ७ अविज्ञातार्थम् ८ अपार्थकम् ९ अप्राप्तकालं १० न्यून ११ मधिकं १२ पुनरुक्तम् १२ अननुभाषणम् १४ अज्ञानम् १५ अप्रतिभा १६ विक्षेपो १७ मतानुज्ञा १८ पर्यनुयोज्योपेक्षणं १९ निरनुयोज्यानुयोगो २० ऽप्रसिद्धान्तो २१ हेत्वाभासाश्च २२ निग्रहस्थानानि, तत्र पक्षे प्रतिपक्ष दृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः, तद्यथा–अनित्यः शब्दः कृतकत्वात् घटवत्, इति (प्रयोगे) जातिप्रयोगेण सम्यक् प्रकारेण वा पर्याकुलीकृतो वाद्याह–भवतु तर्हि व्योमवन्नित्यः शब्द इति, एवं वदतो नित्यत्वाभ्युपगमात् अनित्यत्वप्रतिज्ञा हीयत इति प्रतिज्ञाहानिः, येन परो निगृह्यते तदेव निग्रहस्थानं, न तु तस्य शिरसि विषाणे स्तः, हेतोरनैकान्तिकत्वोपन्यासेन प्रतिज्ञातार्थनिषेधे दृष्टान्तयोर्द्धर्मविकल्पेन धर्मिधर्मान्तरनिर्देशः प्रतिज्ञान्तरं, उदाहरणम्–अनित्यः शब्दः प्रमेयत्वाद् घटवदित्युक्ते वादिना प्रतिवाद्याह–गगनमपि प्रमेयं, न चानित्यम्, इत्यनैकान्तिको हेतुः, एवमनैकान्तिकत्वेन प्रतिज्ञातार्थनिषेधे कृते तत्परिहाराभिप्रायेण पुनर्वाद्याह–प्रमेयत्वेऽपि सर्वगतमाकाशं, शब्दस्तु पटादिवदसर्वगतः, इयमपि प्रतिज्ञैव, न च प्रतिज्ञा प्रतिज्ञान्तरनिर्दिष्टार्थप्रसाधिकेत्यसाधनोपन्यासादेतद्वादिनो निग्रहस्थानं, स्यान्मतं–इहासर्वगतत्वं हेतुविशेषणत्वेनोपात्तं, असर्वगतत्वे सति प्रमेयत्वात्, तस्मान्न प्रतिज्ञान्तरं,तन्न,इत्थं अनुपन्यस्तत्वात्,यदा पुनरेवमुपन्यस्यते तदा प्रतिज्ञान्तरं निग्रहस्थानं,यदा पूर्ववदुपन्यस्यते तदा प्रतिज्ञान्तरं निग्रहस्थानं,प्रतिज्ञाविरोधः–प्रतिज्ञापदयोर्विरोधः,उदाहरणं–सावयवाः परमाणव इति,तत्र यदि सावयवाः कथं परमाणवो यदि परमाणवस्तदा कथं सावयवाः?,तदवयवानामेव परमाणुत्वात्,अथ परमाणवः कथं सावयवाः तेभ्योऽणुतरावयवाभावात्?,तदेवं प्रतिज्ञापदयोर्विरोधो

निग्रहस्थानमिति, अन्ये तु प्रतिज्ञाहेत्वोर्विरोध इत्याहुः, इहोदाहरणं–गुणादिव्यतिरिक्तं द्रव्यं रूपादिभ्यो भेदेनानुपलभ्यमानत्वात्, यदि गुणव्यतिरिक्तं द्रव्यं तदा कथं रूपादिभ्यो भेदेनानुपलभ्यमानत्वं यदि च रूपादिभ्यो भेदेनानुपलभ्यमानत्वं तदा कथं रूपादिव्यतिरिक्तं द्रव्यमिति, यद्यपि विरुद्धार्थसाधनाद्विरुद्धहेत्वाभासत्वेनास्य निग्रहस्थानत्वं तथाऽपि प्रतिज्ञाहेत्वोः परस्परविरोधसम्भवात् तस्यापि निग्रहस्थानत्वं,एकस्मिन्नपि प्रयोगे निग्रहस्थानबहुत्वाभ्युपगमात् ,दूषणोपन्यासेन प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः,उदाहरणम्–अनित्यः शब्दः प्रमेयत्वादित्युक्ते वादिना प्रतिवाद्याह–व्योमादिभिरनैकान्तिको हेतुः, एवमुक्ते पुनर्वाद्याह–केनोक्तमत्रानित्यः शब्दः ?, नाहमेवं ब्रवीमि येनानैकान्तिकत्वं स्यादिति, सोऽयं प्रतिज्ञातार्थपह्नवः प्रतिज्ञासंन्यासो निग्रहस्थानं, प्रतिज्ञार्थापह्नवात्, अविशेषोक्ते हेतौ प्रतिषिद्धे पश्चाद्विशेषणोपादानं हेत्वन्तरं, उदाहरणं–नित्या वेदा अस्मर्यमाणकर्तृकत्वात्, आकाशादिवदित्यस्य जीर्णकूपारामादिभिरनैकान्तिकत्वेन प्रतिषेधे कृते पश्चात्सम्प्रदायाविच्छेदे सतीति विशेषणोपादाने हेत्वन्तरं नाम निग्रहस्थानं, प्रकृतेनार्थेनासङ्गतार्थवचनमर्थान्तरं, उदाहरणं–नित्यः शब्दोऽस्पर्शवत्त्वादिति हेतुः, हेतुश्च हिनोतेर्धातोरौणादिके तुन्प्रत्यये कृदन्तं पदं, पदं च नामाख्यातोपसर्गनिपातभेदाच्चतुर्विधं, तत्र हेतुरिति नाम पदं, तस्य कृत्तद्धितसमासाश्चेति प्रातिपादिकसञ्ज्ञायां तदनन्तरं स्याद्युत्पत्तिरित्यादि वृथा कथालापेन प्रवृत्तस्यार्थान्तरं नाम निग्रहस्थानं, अर्थशून्यवर्णमात्रोच्चारणमेव निरर्थकं, उदाहरणं त्वनित्यः शब्दः कचटतपानां गजडदबत्वात् झभघढधवदिति, एवमादि निरर्थकं निग्रहस्थानं, पर्षत्प्रतिवादिभ्यां त्रिभिरभिहितमविज्ञातमविज्ञातार्थं, स्वसङ्केतमात्रेणाज्ञानसंवरणाय यत्किञ्चिदुच्यते तदविज्ञातार्थं निग्रहस्थानं, असम्बद्धाभिधानमनर्थकं यथा दश दाडिमानि षडपूपाः कुंडमजाजिनं पललपिण्डः त्वर कीटिकेत्यादि,अवयवविपर्यासवचनमप्राप्तकालं, प्रतिज्ञादीनां निगमनान्तानाम-

वयवानां विपर्ययेणाभिधानमप्राप्तकालं नाम निग्रहस्थानम्, उदाहरणं—घटवत् कृतकत्वादनित्यः शब्दः, विपर्ययाभिधानेऽप्यर्थप्रतिपत्तिसम्भवान्नियमकथायामेवेदं निग्रहस्थानमित्येके, प्रतिज्ञानादीनामन्यतमेनाप्यवयवेन हीनं न्यूनं नाम निग्रहस्थानं, हेतूदाहरणाधिकमधिकं, यस्मिन् वाक्ये द्वौ हेतू द्वौ वा दृष्टान्तावभिधीयेते तद्वाक्यं हेतूदाहरणाभ्यामधिकत्वादधिकं नाम निग्रहस्थानं, शब्दार्थयोः पुनर्वचनं पुनरुक्तं, अन्यत्रानुवादात्, पर्षदाऽर्थस्य विज्ञातस्य वादिना त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणं, एतदननुभाषणं प्रतिवादिनो निग्रहस्थानमप्रत्युच्चारन् किमाश्रयं प्रतिषेधं ब्रूयात्?, अविज्ञातार्थमविज्ञानं, यद्वाक्यं वादिना त्रिरभिहितमपि पर्षदाऽवगतार्थं प्रतिवादी त्वनुवादं कुर्वन्नपि न तात्पर्येण सम्यग् विजानाति तदज्ञानं नाम निग्रहस्थानं भवति, एतद्विपर्ययेण वादिनोऽप्यज्ञानं निग्रहस्थानं वेदितव्यमिति, उत्तरस्याप्रतिपत्तिः अप्रतिभा, उत्तरस्योपलक्षणत्वात्साधनस्याप्यप्रतिपत्तिरप्रतिभेति द्रष्टव्यं, कथां प्रतिपाद्य तूष्णीमवस्थानं सम्यग्दूषणसद्भावेऽप्यन्यथा प्रतिपादनं वा वादिप्रतिवादिनोर्निग्रहस्थानं, कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः, अयं प्रस्तुतायां कथायामिदं मे प्रयोजनं परिहीयते, एतस्मिन् परिसमाप्ते पश्चादागत्य कथयिष्यामि, तस्यायं विक्षेपो नाम निग्रहस्थानं, स्वपक्षदोषाभ्युपगमेन परपक्षदोषप्रसङ्गो मतानुज्ञा, निदर्शनं—नित्यः शब्दोऽकारणत्वादाकाशवदित्युक्ते मीमांसकेन नैयायिकः प्राह—प्रागभावेनानैकान्तिको हेतुः, सोऽप्यकारणवान् न च नित्य इत्युक्ते नैयायिकेन पुनर्मीमांसकः आह—यद्येवमनैकान्तिकत्वमेवं तर्हि भवन्मतेऽपि दिगादिनित्यत्वसिद्धये प्रयुक्तस्य (अकारणहेतोः) प्रागभावेनानैकान्तिकत्वमिति, तदेवं स्वपक्षे दोषमभ्युपगम्य परपक्षे साम्यमापादयतो मतानुज्ञा नाम निग्रहस्थानं, यदा पुनः स्वपक्षे दोषं परिहृत्य परपक्षेऽपि साम्यमापादयति, 'यश्चोभयोः समो दोषः, परिहारोऽपि तत्समः,' तदा न कश्चिद्दोषः, निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं, एतत् कस्य पराजय इति पर्षत्पतिनोक्तया पर्षदा

वक्तव्यं, नहि निग्रहप्राप्तः स्वयमेव स्वकौपीनं वृणुयादिति वादिप्रतिवादिनोर्मध्ये न कस्यचिज्जयः पराजयो वा, द्वयोरप्यसिद्धादित्वात्, यदि पुनः कमपि दोषमुद्भावयति तदाऽपरदोषानुद्भावनेऽपि जेतैवासौ, न तु निग्रहार्हः, नहि सन्तीतिकृत्वा सर्वे दोषा वाच्याः, अवचने वा निग्रहः, एकेनापि दोषेण तत्साधनविधानात्, सकलसम्भविदोषोद्भावननियमपूर्वकवादे तु अन्यानुद्भावनेऽपि युक्तं पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानमिति, अनिग्रहस्थाने निग्रहस्थानाभियोगान्निरनुयोज्यानुयोगः अदोषे दोषोद्भावनमितियावत्, उदाहरणं—यथा सावयवत्वेन कार्यत्वे साध्ये पृथिव्यादेः परो ब्रूयाद्—अप्रयोजकोऽयं हेत्वाभासः, तस्येदं मिथ्याऽभियोगलक्षणं निग्रहस्थानं, नह्यप्रयोजको नाम हेत्वाभासोऽस्ति असिद्धादिव्यतिरिक्तः, सपक्षैकदेशवृत्तिश्च नाप्रयोजको, धूमादेरपि तथाभावप्रसङ्गात्, अथ निरनुयोज्यानुयोगाप्रतिभयोः को विशेषः?, उच्यते, अप्रतिभायां तूष्णीभावरूपत्वं सम्यक्साधनदूषणसद्भावेऽन्यथा प्रतिपादनरूपत्वं वा, निरनुयोज्यानुयोगः अविद्यमानदोषोद्भावनरूपः, सिद्धान्तमभ्युपेत्य तद्विरोधेनान्यथाऽभिधानमपसिद्धान्तः, यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह, स चैवं पर्यनुयोज्यते—कथं पुनरग्निहोत्रक्रिया नष्टा सती स्वर्गसाधकेति पर्यनुयुक्तोऽभ्युपगत्यात्मगुणं धर्मं गत्यन्तरमपश्यन्नाह—तया क्रिययाऽऽराधितः परमेश्वरः फलं ददाति राजदिवदमात्यादेरिति, तस्येश्वरानभ्युपगमादपसिद्धान्तो नाम निग्रहस्थानं, हेत्वाभासाश्च निग्रहस्थानानि, हेत्वाभासवद्दृष्टान्ताभासानामपि निग्रहस्थानत्वं, यथाऽपशब्दप्रयोगाणामपि निग्रहस्थानत्वं, नियमकथायामेवापशब्दादीनां निग्रहस्थानत्वमिति केचित्, एवमन्येषामपि साधनदूषणानुपयोगिनां प्रतिभाक्षयकारिणां कलहगालिप्रदानवृथाहसनसहभाषणकपोलवादशिरःकम्पतलप्रहारादीनां निग्रहस्थानत्वं, एवं द्वाविंशतिर्निग्रहस्थानानि, तदेवं नैयायिकस्य षोडश पदार्था नोत्पादव्ययध्रौव्यव्यतिरेकेणावस्थितिं बध्नन्ति, तदभ्युपगमे पुनः कथञ्चिदेतेऽपि

तत्त्वरूपतामवलम्बन्ते।



बौद्धादीनां पदार्थाः स्याद्वादमूलता चैतेषां—बौद्धाभिमतानि पुनर्द्वादशायतनान्येतानि, तद्यथा—पञ्चेन्द्रियाणि सविषयाणि मनो धर्मायतनं च, धर्मास्तु सुखादयो विज्ञेयाः, तदिमान्यपि कथञ्चित्त्रिरूपतातिक्रान्तानि न भवन्ति वस्तुरूपाणि।

तथा कापिलानां पुनः पञ्चविंशतिस्तत्त्वानीमानि, तद्यथा—प्रकृतिः, प्रकृतिर्नाम सत्त्वरजस्तमसां समावस्थात्मिका, तत्र सत्त्वं लघु प्रकाशकमिष्टं उपष्टम्भकं बलं च, रजः गुरु, चरणमेव च तमः १, प्रकृतेश्च महानाविर्भवति, बुद्धेराख्या २, महतोऽप्यहङ्कारः, अहङ्कारश्च अहं सुभगः अहं सुरूप इत्यादिरूपः ३, ततोऽप्यहङ्कारात् षोडशको गणः, तत्र पञ्च बुद्धीन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थलक्षणानि, एकादशं च मन इत्येकादशेन्द्रियाणि, पंचतन्मात्राणि तद्यथा—स्पर्शतन्मात्रं रसतन्मात्रं रूपतन्मात्रं गन्धतन्मात्रं शब्दतन्मात्रं च, तदयं षोडशको गणः १९, पञ्चभ्यश्च तन्मात्रेभ्यः पृथिव्यप्तेजोवाय्वाकाशलक्षणानि पञ्च भूतानि २४, (एवमे)तानि चतुर्विंशतिः, पुरुषश्चेति पञ्चविंशतितत्त्वानि, तान्यपि त्रैरूप्येण विना न वस्तुरूपतामात्मसात्कुर्वन्ति, तत्सद्भावे तु कथञ्चिदुपपद्यतेऽमीषामपि वस्तुरूपता, (तेजआदीनां रूपादिभ्य उत्पादोऽयुक्तः, गुणानां गुणिष्वेवोत्पत्तेर्न्याय्यत्वात् उप)भोगादि साधनानां पृथ्व्यादीनां चाभ्युपगमो यः मुद्गुणधादि (सोऽष्टस्पर्शवत्स्थूलौदारिक)रूपाऽजीवकायनामा पदार्थो योऽस्माभिरिष्यते स एव संपद्यते, तस्यैव परिणामान्तरणकथया तन्महदाद्याविर्भावहेतुत्वोपपत्तेरिति।

चार्वाकस्यापि च भूतचतुष्टयात्मकं तत्त्वं नोत्पादादिव्यतिरेकेणात्मस्थितिं तनुते।

मीमांसकस्तु नित्यानित्यं प्रत्यविप्रतिपद्यमानः कथमिवोत्पादव्ययध्रौव्याक्रान्तं वस्तुतत्त्वं नोपेयादिति नायं विशेषत

आक्षिप्तः ॥ तस्मात्सर्वाभिमतवस्तूनां वस्तुत्वमिदमेवेति विहाय दुरभिनिवेशमङ्गीकृत्य प्रमाणोदर्शिततत्त्वाभिमुखां शेमुषीमवश्यमभ्युपगतव्यं विद्वद्भिरिति स्थितम् ॥

**सर्वज्ञसिद्धिः**—ईदृशं च प्रमाणोपपन्नं वस्तुतत्त्वं येनोपदिष्टमसौ भगवानशेषस्यापि (जगतो) हितैकदक्षत्वादाप्तो भवति, स च विपक्षलेशेनापि विमुक्तो भगवान् सर्वज्ञ एव, यतो नासर्वज्ञः प्रमाणसंवादि प्रतिपादयति, (ननु सर्वज्ञो न संभवी स्वातंत्र्येणोक्तात्तदसिद्धेः) तथा हि न सन्तः समस्तवस्तुस्तोमविषयं प्रस्तुतोपदेशं प्रवर्त्तयन्ति, ततोऽन्यत्रापि नैषा व्यवस्थापयितुमुचिता, तदसत्, यतो न वयं स्वातन्त्र्येणोपदिशामः, किन्तु तदुपदेशमेव परम्पराधिगतमनुवादद्वारेण प्रकाशयामः, स तु स्वतन्त्रमुपदिशति, ततो यो यद्विषयानुपदेशालिङ्गाविसंवादिवचनरचनाऽनुक्रमकर्त्ता स तत्साक्षात्कारी, यथाऽस्मदादिवचनरचनानुक्रमकर्त्ता च स इति, ननु तत्रापि स्वातन्त्र्यमसिद्धमनादित्वात्संसारस्य, तथाहि—पाणिनेः पूर्वं केन व्याकरणानि प्रणीतानि ?, पिङ्गलकात्पूर्वं केन छन्दांसि निवेदितानि ?, अनादिः खल्वयं व्यवहारः, तत उत्पादव्ययध्रौव्ययुक्तवस्तुप्रतिपादकं किमपि शास्त्रं परम्परयाऽधिगम्य विवक्षितोऽपि पुरुषस्तदर्थमेव वचनान्तरैरनुदितवानिति कथं नाम सर्वज्ञः देशको भवेदिति परो यदि मन्येत तर्हि 'क्षणिकाः सर्वसंस्काराः, भूतपरिणतिमात्रं चैतन्य'मित्याद्युपदेशानामप्येवमनादित्वं स्याद्विबन्धकाभावात्, तथा चात्माद्दृष्टादिप्रतिक्षेपप्रधानानि सुगतचार्वाकादिशास्त्राणि, अन्यानि चैतद्व्यवस्थापकानि, ततस्तेषु किमेतत्सत्यमुतैतदिति सत्यासत्यत्वसन्देहे यावन्न प्रमाणान्तरेण तदभिधेयाधिगमो न तावदेतत्सत्यमेतदसत्यमिति निश्चयः संभवति,प्रमाणान्तरं चात्माद्दृष्टादिसमस्तवस्तुविषयमध्यक्षं यद्यभ्युपगम्यते तदा सिद्धं न समीहितं, तद्दृश(द्रष्ट) एव सर्वज्ञत्वाभ्युपगमात्,अथानुमानादात्माद्दृष्टादि सर्वं कस्यचित्प्रत्यक्षं, यथा धूमादनुमीयमानो

[illegible]
तदा सिद्धं न समीहितं, तद्दश(द्वत) एव सर्वज्ञत्वाभ्युपगमात् ,अथानुमानादात्माद्दष्टादि सर्वं कस्यचित्प्रत्यक्षं, यथा धूमादनुमीयमानो

श्रीउत्पादादिसिद्धिः ॥२०५॥

धूमध्वजः, अनुमेयं चेदं, तस्मात्कस्यचित्प्रत्यक्षं, पक्षधर्मत्वाभ्युपगमान्नायमसिद्धो हेतुः, सपक्षे भावान्न विरुद्धः, योग्यतामात्रं च साधयितुमभिप्रेतमिति क्वचित्तदप्रवृत्तावप्यदोषः, ननु धूमध्वजादाविन्द्रियप्रभवमध्यक्षमुपलब्धं ततः साध्येऽपि तथाभूतमेव तत्प्राप्नोतीति विरुद्धार्थसाधनाद्विरुद्धः, नन्वेवं विकल्पने न किञ्चिदनुमानं स्यात्, यतो यथाविधो धूमध्वजो दृष्टान्ते दृष्टस्तथाविध एव यदि साध्यधर्मिण्यपि स स्यात् तर्हि सर्वात्मना तादृशः स एव दृष्टान्तदृष्टः, स च प्रत्यक्षेणैव प्रतिपन्न इति किमनुमानेन?, अथ धूमसामान्यादग्निसामान्यसिद्धेर्नायं दोषः, यतो लिङ्गलिङ्गिनोः प्रतिबन्धः सामान्याश्रयी, तर्हि कथमत्रापि विरुद्धता?, प्रत्यक्षमात्रयोग्यताया एव साधयितुमभिप्रेतत्वात्, प्रत्यक्षत्वं च नेन्द्रियजत्वेन व्याप्तं, नन्वक्षम्–इन्द्रियं, ततश्च प्रति गतमक्षमिति चक्षुरादीन्द्रियप्रभवज्ञानस्यैव प्रत्यक्षत्वं युक्तं, नैतदस्ति, यतः प्रत्यक्षस्याक्षाश्रितत्वं व्युत्पत्तेरेव कारणं, प्रवृत्तिनिमित्तं तु वस्तुसाक्षात्क्रिया, तदुक्तम्–"अक्षाश्रितत्वमध्यक्षे,व्युत्पत्तेरेव कारणम्। निमित्तं तु पुनस्तस्य,वस्तुसाक्षात्क्रिया मता ॥१॥" तथा हि कामादिभावनाजातं संवेदनं यदा विशदस्वभावमनुभूयते घटादिज्ञानं वा स्वसंविद्रूपं चकास्ति तदेन्द्रियसमुत्थत्वं प्रत्यक्षे क्वोपयोगि?,ज्ञानस्वसंवेद्यता ननु न ज्ञानमात्मप्रकाशकं स्वात्मनि क्रियाविरोधात्, तथा चोक्तम्–"यदर्थवेदनं ज्ञानमात्मनोऽपि प्रकल्प्यते। सुशिक्षितो बटुः स्कन्धं, स्वमारोहेन्न दासवत् ॥१॥" तथा वेद्यते अनेनेति वेदनं वेद्यते तदिति वेद्यमिति विरुद्धयोः करणकर्मणोः कथमेकत्वं?, ननु कथमात्मानमात्मा आत्मनैव वेत्तीति व्यवहारः?, न च व्यवहार एवायं, तत्त्वतस्तु न केनापि प्रमाणेनात्मस्वरूपं न परिज्ञायते, केनापि प्रमाणेनात्मस्वरूपस्याप्यधिगमात् ,अन्यथा 'आत्मा वाऽरे अयं ज्ञातव्यो मन्तव्यो निदिध्यासितव्य' इत्यादेरनर्थकत्वं,न च परात्मपरिज्ञानेनैव चरितार्थं तद्वचः, यतो यदि नाम परात्मा ज्ञातस्ततः किं?, तथाऽऽत्मनः कल्याणावाप्तिरिति चेत् तथाऽपि कथञ्चिदा-

ज्ञानस्य स्वसंवेद्यता

त्माधिगमोऽभ्युपगन्तव्यः, ततो यथाऽऽत्माऽऽत्मानमधिगच्छन् कर्तृकर्मरूपतां प्रतिपद्यते, न स्वात्मनि क्रियाविरोधः, तथा स्वसंवेदनमपि भविष्यति, अथाऽऽत्माऽऽत्मानं यदाऽवगच्छति तदा प्रमाणरूपं करणं भिद्यते, ननु प्रमाणं ज्ञानं, ज्ञानं चात्मधर्मः, स चात्मरूप एवेति कथं करणभेदः ?, धर्मधर्मिणोः कथञ्चिद्भेदोऽप्यस्तीति चेत् तर्ह्यत्रापि येन स्वभावेन ज्ञानमात्मस्वरूपं प्रतिपद्यते स कथञ्चिद्भिन्नोऽप्यस्तीति न स्वात्मनि क्रियाविरोधः स्यात्, यदि त्वात्मा सहजज्ञानमयो न स्यात् तदा कारणत्वाविशेषादिन्द्रियादिष्वपि ज्ञानसमवायो भवेत्, न च तथा, तन्तूनामपटात्मकत्वेऽपि तन्तुत्वजातिनियमात्तेषु पटसमवायो भवति, न तूर्यादिषु, तद्वदचिदात्मकेऽप्यात्मन्यात्मत्वजातिनियमात् ज्ञानसमवायस्य नियमो भविष्यति स्वभावादेवेत्यपि न चतुरस्रं, तन्तूनामपटात्मकस्य सर्वथैवासिद्धेः, तेषामेव तथापरिणामात्, ततो द्रव्यरूपतया पटः प्रागपि कथञ्चिदस्ति, तदयमपि दृष्टान्तश्चिद्रूपमेवात्मानं गमयतीति न नः काचित्क्षतिः, किञ्च—अनात्मवेदने संवेदने जगदन्धमूकं भवेत्, तथाहि यत् सदुपलम्भकप्रमाणगोचरचारि न भवति तत्सकलमेव न सद्व्यवहृतिपथमवतरति, यथा खरविषाणं, नावतरति च सदुपलम्भकप्रमाणगोचरतामात्मव्यापारादिरूपं विज्ञानमिति, तथाहि—तद्ग्राहकं प्रत्यक्षं वा भवेत् प्रमाणान्तरं वा ?, यदि प्रत्यक्षं तत्किमिन्द्रियार्थसंयोगजं आहोश्विदात्ममनःसंनिकर्षसमुत्थं किं वा स्वसंवेदनमिति ?, तत्र ज्ञानेनेन्द्रियसंनिकर्षाभावादनभ्युपगमाच्च न प्रथमः पक्षः, नापि द्वितीयो, मनःसद्भावे प्रमाणाभावात्, न चाप्रमाणकं वस्तु विपश्चितः समाश्रयन्ते, न च युगपज्ज्ञानानुत्पत्तिस्तल्लिङ्गं, तस्यान्यथाऽप्युपपत्तेः, तथाहि—यस्मिन्नाभिमुख्यमात्मा प्रतिपद्यते तत्र ज्ञानमुदेति, नान्यत्रेति, अथेदमाभिमुख्यमात्मनो भिन्नमथाभिन्नं ?, यदि भिन्नं मन एव पर्यायान्तरेणाभ्युपगतं भवति, अथाभिन्नं तदा तदात्मस्वरूपवत्सर्वदाऽस्तीति ज्ञानोत्पत्तिरपि सर्वदा स्यात्, नन्वात्मनो मनसा संयोगकर्तृत्वं भिन्नमथा-

ज्ञानस्य स्वसंवेद्यता

भिन्नं ?, यदि भिन्नं नात्मनः कर्तृत्वं, अथाभिन्नं तर्हि तदात्मस्वरूपवत् सर्वदाऽस्तीति सर्वदा संयोगः स्यात्, ततो विज्ञानमपि सर्वदा भवेत्, अथ शक्तिः कर्तृत्वं, सा च सहकारिकारणवशात्कदाचिद्भवन्ती न दोषमावहति तर्हि कर्मणः सामर्थ्यादाभिमुख्यमात्मनः समुत्पद्यमानं क्रमवतीं ज्ञानोत्पत्तिं विधास्यतीति किं मनःपरिकल्पनया ?, तन्न युगपज्ज्ञानानुत्पत्तिस्तल्लिङ्गं, अस्तु वा मनस्तथाऽप्यात्मनो नित्यत्वाद्व्यापित्वाच्च न कदाचिन्नात्मनः संनिकर्ष इति नित्यं तज्ज्ञानप्रसङ्गः, तन्न द्वितीयोऽपि पक्षः, तृतीयपक्षकक्षीकारे त्वस्मदभ्युपगम एव, तन्न प्रत्यक्षं ज्ञानस्वरूपस्य परमते ग्राहकं, नापि प्रमाणान्तरं, यतस्तदर्थापत्तिर्यद्वाऽनुमानमभ्युपगन्तव्यं भवेत्, नापरं, न ह्यागममात्राद्विप्रतिपत्तौ सत्यामर्थसिद्धिः, उपमानं तु सादृश्यमात्रव्यवस्थापकं,अभावप्रमाणं त्वभावमात्रविषयमेव प्रतिपन्नमिति, तत्र न तावदर्थापत्तिः संवेदनसाधिका, यतोऽर्थप्राकट्यादसावुत्पद्यत इत्यभ्युपगमः, तच्च तत्र नियतमनियतं वा ?, यद्यनियतं कथमेकान्तेन गमयेत्?,अथ नियतं तदा नियमग्रहः किं तस्मिन्नेव ? यदि तस्मिन्नेव तर्हि येनैव प्रमाणेन तन्नियमग्रहस्तेनैव साध्यस्य साधितत्वात् किमर्थपत्त्या ?, अथ धर्म्यन्तरे तर्हि अन्यत्र गृहीतप्रतिबन्धमन्यद्गमयदनुमानतां नातिक्रामति इत्यनुमानमेवार्थापत्तिः संपन्नेति, तथा चानुमानपक्षभाविदूषणमुद्गरोपनिपातः, अनुमानपक्षे किं दूषणमिति चेत्, उच्यते, अनुमानं गृहीतप्रतिबन्धं प्रवर्त्तते, प्रतिबन्धग्रहश्च किमन्वयमुखेन किं वा व्यतिरेकमुखेन ? इति, न तावदन्वयमुखेन, यतस्तद्भाव एव भाव इति स प्रतीयते, तद्भावभावित्वं च किं प्रत्यक्षेण प्रतीयते किं वाऽनुमानेन ?, न तावदत्यन्तपरोक्षे विज्ञाने प्रत्यक्षेण, नाप्यनुमानेन, अनवस्थाप्रसङ्गात्, व्यतिरेकमुखेनापि नास्ति, यतो विपक्षे हेतोरभावः किमभावप्रमाणेन प्रतीयते किं वाऽनुपलम्भेन ?, तत्र भावादत्यन्तदूरयायी नाभावः कश्चित् येन भावग्राहिणि प्रमाणे नायमवभासेतेति न भावग्राहि प्रमाणातिरिक्तभावाख्यं प्रमाणमुपपद्यते, ततस्तेन कथं

विपक्षे हेतोरभावो गृह्येत ?, न हि स्वसत्तामनाबिभ्राणं शशविषाणं कस्यचिद्ग्राहकं नाम, अथानुपलम्भेन विपक्षे हेतोरभावः प्रतीयते तर्हि स किं दृश्यानुपलम्भः ? किं वाऽदृश्यानुपलम्भः ?, अनुपलम्भमात्रस्य सत्यपि वस्तुनि भावान्न व्यतिरेकसाधकत्वं, दृश्यानुपलम्भस्तु स्वभावकारणव्यापकाद्यनुपलम्भभेदेन व्यवस्थितः, तत्र दृश्यानुपलम्भो नादृश्ये ज्ञाने संभवति, नापि कार्यकारणभावः, स हि प्रत्यक्षानुपम्भसाधनः, कथमत्यन्तपरोक्षे विज्ञाने ( विजृंभते ? ) चति तमप्य(न च ज्ञानमनो)व्यापकभावोऽपि प्रत्यक्षानुमानाभ्यामत्र न प्रतीयत इत्युक्तं, ततो व्यतिरेकेणापि न सम्बन्धनिश्चयः, ततो न केनचित्किञ्चित् कदाचित् संवेदनस्वरूपमधि(गम्यते) स्वसंवेदनस्य यदपि पदार्थस्वरूपाधिगमनं न) तदुत्पादितदाकारादिना, किन्त्वर्थावभासित्वेन, तथाहि–चिद्रूपमात्मद्रव्यं, तथा क्षयोपशमादिवशादर्थावभासितया परिणतं, ततस्तदप्यस्य ग्राहकमिति व्यवस्थापितं, अर्थावभासित्वं च संवेदनस्यात्मभूतं, ततस्तदर्थग्रहणसमय एव नानुभूतं चेत् कथमर्थो गृहीतो नाम ?, तथाऽवभासानुभवस्यैवार्थग्रहणरूपत्वात्, अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति, ननु न ज्ञानस्य प्रत्यक्षताऽर्थस्य ग्रहणं, किन्तु ज्ञानस्योत्पत्तिः, तत्र संविदितेऽपि ज्ञाने तदुत्पत्तिमात्रेणार्थस्य संवेदनं सिध्यति, कथमन्यस्योत्पत्तिरन्यस्य संवेदनमित्यपि न वाच्यं, वस्तुस्वाभाव्यात्, न चैवं सर्वस्य सर्वसंवेदनं तस्य स्वकारणसामग्रीनियमात् प्रतिनियतार्थसंवित्तिस्वभावस्य प्रतिनियतप्रतिपत्तृवेद्यस्य चैवोत्पादात्, तदेतदप्यसत्, यतः प्रतिनियतार्थसंवित्तिस्वभावत्वं प्रतिनियतप्रतिपत्तृवेद्यत्वं च कथमिह व्यवस्थाप्यं ?, यदि ज्ञानान्तरेण तदा तद्यदि ज्ञानविषयं नार्थमवस्यति अथार्थविषयं तदा न ज्ञानं, तथा चेयमुभयावभासाधीनव्यवस्था दुर्घटा, ततः स्थितमेतत्–स्वसंवेदनमपि विज्ञानमिति। ततस्तत्स्वसंवेदनमन्तरेणापीन्द्रियव्यापारमध्यक्षमित्यक्षाश्रितत्वमप्रयोजकं तन्न विशेषविरुद्धताऽपि हेतोः, नापि सन्दिग्धानैकान्तिकता, अविनाभावनिश्चयात् तद्बाधकाशं-

सया सर्वानुमानोच्छेदप्रसङ्गात्, अथ 'आशङ्केत हि यो मोहादजातमपि बाधकम्। समर्थव्यवहारेषु, संशयात्मा क्षयं व्रजेत् ॥ १ ॥ इति न सर्वत्र बाधकमाशङ्कनीयं, तदेतत्प्रस्तुतानुमानेऽपि समानं, नन्वनुमानविधिनेयं प्रतिज्ञा, यतोऽनेनानुमानेनातीन्द्रियप्रत्यक्षं सर्वार्थविषयं प्रसाधयितुमभिमतं, तस्य च सर्वार्थविषयत्वमनुपपन्नं, तथाहि–देशान्तरे कालान्तरे च यद्रूपं तदिदानींतनचक्षुर्जनित-प्रत्यक्षसजातीयप्रत्यक्षग्राह्यं रूपत्वादिदानींतनरूपवत्, एवं रसादिष्वपि पञ्चानुमानानि भवन्ति, तदुक्तं–"यज्जातीयैः प्रमाणैस्तु, यज्जातीयार्थदर्शनम्। दृष्टं संप्रति लोकस्य, तथा कालान्तरेऽप्यभूत् ॥१॥" न च गृध्रादिभिर्व्यभिचारः प्रेरणीयः, यतस्तेऽपि न स्वार्थमुल्लङ्घ्य वर्त्तन्ते, तदुक्तम्–"यत्राप्यतिशयो दृष्टः, स स्वार्थानतिलङ्घनात्। दूरसूक्ष्मादिदृष्टौ स्यात्, न रूपे श्रोत्रवृत्तिता ॥१॥ येऽपि सातिशया दृष्टाः, प्रज्ञामेधाबलैर्नराः। स्तोकस्तोकान्तरत्वेन, न त्वतीन्द्रियदर्शनात् ॥ २ ॥ प्राज्ञोऽपि हि नरः सूक्ष्मानर्थान् द्रष्टुं क्षमोऽपि सन्। सजातीरनतिक्रामन्नतिशेते परान्नरान् ॥३॥ एकशास्त्रविचारेषु, दृश्यतेऽतिशयो महान्। नतु शास्त्रान्तरज्ञानं, तावन्मात्रेण लभ्यते ॥४॥ ज्ञात्वा व्याकरणं दूरं, बुद्धिः शब्दापशब्दयोः। प्रकृष्यते न नक्षत्रतिथिग्रहणनिर्णये ॥ ५ ॥ ज्योतिर्विच्च प्रतिष्ठोऽपि, चन्द्रार्कग्रहणादिषु। न भवत्यादिशब्दानां, साधुत्वं ज्ञातुमर्हति ॥६॥ तथा वेदेतिहासादिज्ञानातिशयवानपि। न स्वर्ग-देवतात्मादृष्टप्रत्यक्षीकरणक्षमः ॥७॥ दशहस्तान्तरं व्योम्नि, यो नामोत्पत्य गच्छति। न योजनमसौ गन्तुं, शक्तोऽभ्यासशतैरपि ॥८॥ तस्मादतिशयज्ञानैरतिदूरगतैरपि। किञ्चिदेवाधिकं ज्ञातुं, शक्यते न त्वतीन्द्रियम् ॥ ९ ॥" तत्स्थितमनुमानबाधितेयं प्रतिज्ञा, तथा अभावप्रमाणबाधिता, तथाहि–प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावेऽभावेऽभावप्रमाणमेव विजयते, तथा च तदभावमेव दर्शयितुं तद्ग्रन्थः–"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः। दृष्टो न चैकदेशोऽस्ति, लिङ्गं वा योऽनुमापयेत् ॥१॥" नचागमविधिः कश्चिन्नित्यः

सर्वज्ञबोधकः। "वेदाहमग्रे पुरुषं महान्तमादित्यवर्ण तमसः परस्तात्, तमेव विदित्वा मृत्युमन्वेति, नान्यः पन्था विद्यतेऽयनाय।" तथा–"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतःपात्। स बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एक आस्ते।" इत्यादिर्विद्यते इति चेत् न, स्तुतिमात्रत्वादेषां न प्रामाण्यं, तथा चाह–"न च मन्त्रार्थवादानां, तात्पर्यमेव कल्प्यते। न चान्वर्थाप्रधानैस्तैस्तदस्तित्वं विधीयते ॥१॥ न चानुवदितुं शक्यं, पूर्वमन्यैरबोधितम्। अनादिरागमस्यार्थः, सर्वज्ञोऽनादिमान् न च ॥२॥ कृत्रिमेण त्वसत्येन, स कथं प्रतिपद्यते?। अथ तद्वचनेनैव, सर्वज्ञोऽन्यैः प्रतीयते ॥३॥ प्रकल्पने कथं सिद्धिरन्योऽन्याश्रययोस्तयोः?। सर्वज्ञोक्ततया वाक्यं, सत्यं तेन तदस्तिता ॥ ४ ॥ कथं तदुभयं सिद्ध्येत्सिद्धमूलान्तरादृते। असर्वज्ञप्रणीतात्तु, वचनान्मूलवर्जितात् ॥५॥ सर्वज्ञमवगच्छन्तः, स्ववाक्यात् किं न जानते?। सर्वज्ञसदृशं कश्चिद्, यदि पश्येम सम्प्रति ॥६॥ उपमानेन सर्वज्ञं, जानीयाम ततो वयम्। उपदेशो हि बुद्धादेर्धर्माधर्मादिगोचरः॥७॥ अन्यथा नोपपद्येत, सर्वज्ञो यदि नो भवेत्। बुद्धादयो ह्यवेदज्ञास्तेषां वेदादसम्भवः ॥८॥ उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात्। येऽपि मन्वादयः सिद्धाः, प्राधान्येन त्रयीविदः॥९॥ त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः।" तदेवं–प्रमाणपञ्चकं यत्र, वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं, तत्राभावप्रमाणता ॥ १ ॥" (षड्दर्शन०) तथोपमानबाधिता, तथाहि–"नरान् दृष्ट्वा त्वसर्वज्ञान्, सर्वानेवाधुनातनान्। तत्सादृश्योपमानेन, शेषासर्वज्ञसाधनम् ॥१॥" इति, तदेवमनुमानाभावप्रमाणोपमानबाधितेयं प्रतिज्ञेति, भवतु वा, तथाऽपि निष्फला, तथाहि–"समस्तावयवव्यक्तिविस्तरज्ञानसाधनम्। काकदन्तपरीक्षावत्क्रियमाणमनर्थकम् ॥१॥ यथा च चक्षुषा सर्वान्, भावान् वेत्तीति निष्फलम्। सर्वप्रत्यक्षदर्शित्वप्रतिज्ञाऽप्यफला तथा ॥२॥ स्वधर्माधर्ममात्रज्ञसाधनप्रतिषेधयोः। तत्प्रणीतागमग्राह्यहेयत्वे हि प्रसिध्यतः ॥३॥ तत्र सर्वजगत्सूक्ष्मभे-

दज्ञत्वप्रसाधने। अस्थाने क्लिश्यते लोकः, संरम्भाद्ग्रन्थवादयोः ॥४॥ एकं च फलवज्ज्ञानं, यावद्धर्मादिगोचरम्। न तु वृक्षादिभिर्ज्ञातैरस्ति किञ्चित्प्रयोजनम् ॥५॥ क्रत्वर्थाः पुरुषार्थाश्च, यावन्तः खदिरादयः। सर्ववृक्षज्ञता तावत्तावत्स्वेष्टं समाप्यते ॥६॥ लताः सोमगुरूव्याद्याः, काश्चिद्धर्मार्थहेतवः। सिद्धाः तज्ज्ञानमात्रेण, लतासर्वज्ञताऽपि न ॥७॥ व्रीहिव्यामाकनीवारग्राम्यारण्यौषधीरपि। ज्ञात्वा भवति सर्वज्ञो, नानर्थकशतान्यपि ॥८॥ तथा कतिपयेष्वेव, यज्ञाङ्गेषु तृणेष्वपि। दर्भादिषु च बुद्धेषु, तृणसर्वज्ञतेष्यते ॥९॥ तृणौषधिलतावृक्षाः, जातयोऽन्याः सहस्रशः। विविक्ता नोपयुज्यन्ते, तदज्ञानेन नाज्ञता ॥१०॥ यत्रापि चोपयुज्यन्ते, व्यक्तयो जातिलक्षिताः। जातिज्ञानोपसंहारात्तत्रापि व्याप्तिरस्ति नः ॥११॥ अतश्च व्यक्तिभेदानामनभिज्ञोऽपि यो नरः। स सर्वज्ञफले प्राप्ते, सर्वज्ञत्वं न वाञ्छति ॥१२॥ जरायुजाण्डजोद्भेदसंस्वेदजचतुर्विधम्। भूतग्रामेऽल्पकज्ञोऽपि, सर्वज्ञफलमश्नुते ॥१३॥ पृथिव्यादिमहाभूतसङ्क्षेपज्ञश्च यो नरः। स विस्तरानभिज्ञोऽपि, सर्वज्ञान्न विशिष्यते ॥१४॥ भूमेर्य एकदेशज्ञो, भूमिकार्येषु वर्त्तते। सप्तद्वीपमहीज्ञानं, क्व नु तस्योपयुज्यते ?॥१५॥ तथाऽल्पेनैव तोयेन, सिद्धं तोयप्रयोजनम्। तोयान्तराण्यविज्ञाय, नान्यदोषेण युज्यते ॥१६॥ वह्नेश्चानन्तभेदस्य, ज्ञातस्योपासनादिभिः। पञ्चभिः कृतकार्यत्वादन्याज्ञानमदूषणम् ॥१७॥ शरीरान्तर्गतस्यैव, वायोः प्राणादिपञ्चके। ज्ञाते शेषानभिज्ञत्वं, नोपालम्भाय जायते ॥ १८ ॥ व्योम्नश्च पृथुनः पारमज्ञात्वाऽप्येकदेशवित्। न च व्योमानभिज्ञत्वव्यपदेशेन दुष्यति ॥१९॥ धर्मकीर्त्तिनाऽप्युक्तम्–"ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये। यज्ञोपदेशकरणे, विप्रलम्भनशङ्किभिः ॥ १ ॥ तस्मादनुष्ठेयगतं, ज्ञानमस्य विचार्यताम्। कीटसङ्ख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते ?॥२॥ हेयोपादेयतत्त्वस्य, साभ्युपायस्य वेदकः। यः प्रमाणमसाविष्टो, न त्वतीन्द्रियवेदकः ॥३॥ दूरं पश्यतु वा मा वा, तत्त्वमिष्टं तु पश्यतु। प्रमाणं दूरदर्शी चेदेते गृध्रानुपास्महे

॥४॥ धर्मजत्वनिषेधस्तु, केवलोऽत्रोपयुज्यते। सर्वमन्यद्विजानंस्तु, पुरुषः केन वार्यते ? ॥५॥ सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात्। केवलागमगम्यत्वं, लप्स्यते पुण्यपापयोः ॥६॥ एतावतैव मीमांसापक्षे सिद्धेऽपि यः पुनः। सर्वज्ञवारणे यत्नस्तैः कृतं मृतमारणम् ॥७॥ येऽपि चाच्छिन्नमूलत्वाद्धर्मज्ञत्वे हते सति। सर्वज्ञान् पुरुषानाहुस्तैः कृतं तुषखण्डनम् ॥८॥" किञ्च–सर्वज्ञे सिद्धेऽपि न प्रतिज्ञातोऽर्थः सिध्यति, तथाहि–"यत्सत्यं नाम लोकेषु, प्रत्यक्षं तद्धि कस्यचित्। प्रमेयवस्तुत्वै(तत्त्वज्ञै)र्दधिरूपरसादिवत् ॥१॥ ज्ञातयत्रा(त्राऽन्येना)ऽपि निर्दिष्टे, पक्षे न्यूनत्वमापतेत्। यदि बुद्धातिरिक्तोऽन्यः, कश्चित् सर्वज्ञतां गतः ॥२॥ बुद्धवाक्यप्रमाणत्वे, तज्ज्ञानं क्वोपयुज्यते ?। सर्वज्ञो यस्त्वभिप्रेतो, न श्रुत्याऽर्थे न चापि सः ॥३॥ विज्ञायते यतः पक्षः, साध्यत्वेनेप्सितो भवेत्। यस्त्वीप्सिततमं पक्षं, विशिष्यात्तस्य सञ्ज्ञया ॥४॥ यावज्ज्ञेयं जगत्सर्वं, प्रत्यक्षं सुगतस्य तत्। तैरेव हेतुभिः पूर्वैर्घटकुड्यादिरूपवत् ॥५॥ तत्र नैवं विशिष्टोऽपि, पूर्वस्मादेष भिद्यते। विशिष्टग्रहमात्रेण, हेतोर्नैव विशिष्टता ॥६॥ शक्त्या हि (स)यदा हेतुर्दृष्टान्तानुग्रहेण वा। पक्षान्तरेण तुल्यः स्यात्तदा स्यात् का विशिष्टता ?॥७॥ सत्प्रमेयत्वमित्येतद्, यतोऽन्येष्वपि वर्त्तते। साधनं नियमाभावात्तेनाकिञ्चित्करं हि तत् ॥८॥ नरः कोऽप्यस्ति सर्वज्ञः, स तु सर्वज्ञ इत्यपि। साधनं यत् प्रसज्येत, प्रतिज्ञामात्रमेव तत् ॥९॥ सिसाधयिषितो योऽर्थः, सोऽनया नाभिधीयते। यस्तूच्यते न तत्सिद्धावस्ति किञ्चित्प्रयोजनम् ॥ १० ॥ यदीयागमसत्यत्वसिद्धौ सर्वज्ञतोच्यते। न सा सर्वज्ञताऽसिद्धेर्वचोमात्रेण लभ्यते ॥ ११ ॥ यावत्सिद्धो न सर्वज्ञस्तावत्तद्वचनं मृषा। यत्र क्वचन सर्वज्ञे, सिद्ध्येत् तत्सत्यता कुतः ? ॥१२॥ अन्यस्मिन्नप्यसर्वज्ञे, वचसोऽन्यस्य सत्यता। सामानाधिकरण्ये हि, तयोरङ्गाङ्गिता भवेत् ॥१३॥ तदेवं दोषदुष्टस्य, पक्षस्यास्य न पक्षता। इदानीं हेतुदोषेण, हेतोर्दूषणतोच्यते ॥ १४ ॥ वचसोऽपौरुषेयत्वं, पूर्वमेव स्थितं यदा। नष्टमुष्ट्यादिकं चैव,

कृतं पुंसाऽस्ति किञ्चन ॥१५॥ एवं तावदसिद्धत्वमनैकान्तिकता तथा। पारम्पर्योपदेशेन, वचसः संप्रवर्त्तनात् ॥१६॥ असत्यार्थं च तद्वाक्यं, तेन हेतोर्विरुद्धता। एवं सर्वज्ञतासिद्धिः कथञ्चिन्नोपपद्यत ॥१७॥" इत्यादिं विरोधोक्तिं प्रतिपादयन्ति तदिह प्रतिविधीयते, तत्र यदुक्तं 'देशान्तरे कालान्तरे च यद्रूपं तदिदानींतनप्रत्यक्षसजातीयप्रत्यक्षग्राह्यं रूपत्वादिदानींतनरूपवदि'त्यादि, तत्र विषयविषयिणोः परस्परमभेदो भेदो भेदाभेदो वा ?, यद्यभेदः कथं रूपग्राहिणि प्रत्यक्षे न रसादिप्र(त्यक्षं पूर्वं दृष्टे च)स्पृष्टे य एवाहमद्राक्षं स एवाहमस्प्राक्षमिति विषयस्य विषयिणश्च कथमेकत्वेन प्रतिसन्धानं ?, अथामीषां धर्मरूपतया भेदो धर्मिरूपतया चाभेदः, सर्वथैकत्वे ह्येकमेव रूपमिति कस्य केन प्रतिसन्धानम् ?, अत्यन्तभेदेऽपि घटपटयोरिव नैतदिति भेदाभेदपक्षः कक्षीक्रियते, तर्हि यदेव चक्षुर्द्वारेण विज्ञानं रूपे वर्त्तते कथञ्चिद्रसादिविषयमपि तदेव, आत्मरूपतया तदभेदात्, रूपरसादीनां वा कथञ्चिदेकस्वभावत्वात्, ततः कथं चक्षुर्जनितमध्यक्षमेकान्तेन रूपस्यैव ग्राहकं भवेत्, ननु यद्यपि तत्तस्य कथञ्चिद्ग्राहकं तथाऽपि सर्वथा नेन्द्रियान्तरविज्ञानमिन्द्रियान्तरविषयस्य ग्राहकमित्युच्यते,किमत्र कारणम् ? इति वाच्यं, चक्षुरादीनां प्रतिनियतविषयत्वमिति चेत्, नन्वात्मा ज्ञानस्वरूपः, स च सदा सन्निहित एवेति विनैवेन्द्रियव्यापारेण किं न वस्तु परिच्छिनत्ति ?, भवत्पक्षेऽपि किं नेति चेत् आवरणप्रतिबन्धात्, आवरणतिरस्कृतस्य हि जीवद्रव्यस्य येष्वेवानुपहतचक्षुरादिप्रदेशेषु तत्क्षयोपशमस्तद्द्वारेणैव विज्ञानप्रवृत्तिः, अस्थगितगवाक्षकल्पानि हीन्द्रियाण्यात्मनो ज्ञानोत्पत्तावुपकरणमात्रं कर्मवैचित्र्यात्, अथ भवद्भिरप्येष एव समाधिरास्थीयते तर्हि कर्मणः सर्वथाऽपगमे न काचिच्चक्षुराद्यपेक्षेत्येकदैव सर्वार्थग्रहणमनिवार्यमित्ययुक्तमुक्तं 'यज्जातीयैः प्रमाणैस्तु,यज्जातीयार्थदर्शन'मित्यादि, तथेदमप्ययुक्तं यदुक्तम्–"यत्राप्यतिशयो दृष्टः, स स्वार्थानतिलङ्घनात्। दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता॥ १ ॥" यत इन्द्रिय-

व्यापारनिरपेक्षमिदं विज्ञानमिति कुतोऽस्य दोषस्यावकाशः ? उक्तञ्च–"इन्द्रियान्तरविज्ञानं, नेन्द्रियान्तरवस्तुनः। ग्राहकं चेति यो दोषः, सोऽतीन्द्रियदृशः कुतः ?॥१॥" तथा–"येऽपि सातिशया दृष्टाः, प्रज्ञामेधाबलैर्नराः" इत्यादि 'शक्यते नत्वतीन्द्रियमित्येतत्पर्यन्तमप्यसङ्गतं, यतः कर्मापगमतार(त)म्यादेप तारतम्यभावः, सर्वथा तदपगमे तु यावज्ज्ञेयविषयतां विज्ञानस्य कः प्रतिषेद्धुमर्हति ?, सर्वथा कर्मणो नापगमः संभवतीति चेत्, न, प्रमाणभावात्, अपगमे किं प्रमाणम् ? इति चेत् अनुमानमिति ब्रूमः, तथाहि(विद्यमानशुद्ध्युपायं)संभवत्समस्तशुद्धिकमुपलब्धं, यथा विद्यमानक्षारमृत्पुटपाकादिशुद्ध्युपायो रत्नविशेषः, विद्यमानशुद्ध्युपायश्चात्मा, तस्मात्संभवत्समस्तशुद्धिकः, कोऽस्य शुद्ध्युपाय इति चेत् ज्ञानादिरत्नत्रयाभ्यासः, उक्तञ्च–"रत्नत्रयाख्यं कुशलमवाप्याभ्यस्यतः क्रमात्। ज्ञानावृत्तिक्षयाज्ज्ञानमर्हतो जायतेऽक्षतम् ॥१॥" तथाहि–भवताऽपि तावदज्ञाद्विज्ञः अतत्त्वज्ञात्तत्त्वज्ञो दुःशीलाच्च साधुसमाचारः किञ्चिद्विशुद्धतरोऽभ्युपगन्तव्य एव, अन्यथा न स्याच्चण्डालश्रोत्रियादेरधमोत्तमादिविशेषः, तस्माज्ज्ञानाद्यभ्यास एव शनैः शनैः शुद्धिमात्मन्यारम्भमाणः कदाचित् क्वचित्तामात्यन्तिकीमारभत इति सिद्धः सर्वथा कर्मणो विगमः, तस्यैवात्मरत्नमालिन्यहेतुत्वात्, तत्सिद्धौ च सिद्धं चक्षुरादीन्द्रियनिरपेक्षमात्ममात्राधीनं योगिज्ञानमिति, अथेदृशं विज्ञानं न केनचित् क्वचिदपि प्रतिषेध्यते,(किं तु तद्वान् प्रतिषिध्यते)तद् यदि सकलकालकलाकलापव्यापिपुरुषपरिषत्साक्षात्कारित्वं भवतस्तदा त्वमेव सर्वज्ञः, अथ नेदानीं त्वद्दर्शनं निवर्त्तमानमप्यनुमानादिप्रमाणप्रसिद्धमीदृशं विज्ञानं प्रतिषेद्धुं प्रभवति, पितृपितामहादेरात्मादृष्टादेश्च प्रतिषेधप्रसङ्गेनासमञ्जस्यप्राप्तेः, नन्वनाद्यशुद्धानामात्मनामाद्यो ज्ञानादिलाभः कथमिति वाच्यं, तथाभव्यत्वपरिपाकवशाद्गिरिसरिदुपलघोलनाकल्पेन यथाप्रवृत्तिकरणेन, अभ्युपगन्तव्यश्चेदृशः कश्चिद्विशेषो भवद्भिरपि, अन्यथा सर्वसंसारिणामासंसारमज्ञविज्ञादिव्यवस्थाभेदाभावप्रसङ्गः, तन्नानुमानबाधिता

प्रतिज्ञा, अभावाख्यं तु यादृशं परैरभ्युपगतं तादृशं प्रमाणमेव किञ्चिन्नास्तीति कुतस्तस्य बाधकत्वं?, किञ्च–'सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभि'रिति यदुक्तं तत्र यदि भवदादिप्रतिनियतपुरुषप्रत्यक्षं तत्र न प्रवृत्तमिति तावता तन्निषेधः कर्त्तुमशक्यः, सत्यपि वस्तुनि भवदादिप्रतिनियतपुरुषप्रत्यक्षस्याप्रवृत्तेः, अथ सर्वपुरुषसम्बन्ध्यध्यक्षं तत्र न प्रवृत्तमिति कश्चिन्निश्चित्य ब्रूयात्तर्हि स एव सर्वज्ञः, अथ नास्ति सर्वज्ञः प्रत्यक्षादिप्रमाणपञ्चकातिक्रान्तत्वात्, यद्यत्प्रत्यक्षादिप्रमाणपञ्चकातिक्रान्तं तत्तन्नास्ति यथा खरविषाणं, तथा चायमित्याद्यनुमानं तन्निषेधायादीयेत, इहापि सर्वज्ञलक्षणो धर्म्यसिद्धः सिद्धो वा भवतः?, तत्र धर्म्यसिद्धावाश्रयासिद्धता हेतोः, तत्सिद्धौ तु विरुद्धता, यत्प्रतिषेद्धुमुपन्यस्तं तत्सत्तामन्तरेणैव हेतुर्नोपपद्येतेति हेतोः, अनुपपद्यमानस्य च कस्यचिदर्थस्याभावादर्थापत्तिरपि न तत्प्रतिषेधिका, तथाहि–सर्वज्ञे सति कोऽर्थो नोपपद्यते येन तत्प्रतिषेधाय बद्धपरिकरस्त्वमसि, आगमापौरुषेयत्वमिति चेत् न, तस्यैकान्तेन प्रमाणबाधितत्वात्, कथञ्चिदपौरुषेयत्वस्य च प्रमाणभूतेषु वाक्येषु सर्वज्ञाविनाभावित्वाद्, अन्यथा सम्यक् तदर्थनिश्चयायोगादित्युक्तं, नाप्युपमानं तद्बाधकं, यतो दृष्टेष्वपि पुरुषेष्वनेकधा विशेषा दृश्यन्ते, तथाहि–केचित् सकलशास्त्रज्ञाः केचिन्न किञ्चिद्विदन्ति, केचिच्चतुर्वेदपाठकाः केचिद्गायत्रीमपि न पठन्ति, तेनादृष्टेषु कथं साम्यं सिद्ध्येत्?, ननु प्रागुक्तं 'दशहस्तान्तर'मित्यादि, उक्तमिदं, अयुक्तं तूक्तं, यतस्तुल्यजातीयपूर्वबीजप्रवृत्तयो ज्ञेयेषु बुद्धयस्तासामावरणविगमादभ्यासे सति कुतः स्थितिः?, न चैवं लङ्घनादेव लङ्घनं, तस्य बलयत्नसमुत्थत्वात्, तस्य च यथावीर्यान्तरायापगममेव भावात्, तथाहि–सन्त्येव तद्विशेषोपगमात्कामितोपप्लवनादिचेष्टाः पुरन्दरादयः, तस्माद्दशहस्तान्तरमित्यादि यत्किञ्चिदेतत्, न च कश्चिदागमस्तन्निषेधाय कक्षां बध्नाति, तन्न किञ्चित्सर्वज्ञबाधकं प्रमाणं, साधकं तु प्रदर्शितं, अतो 'दृष्टो न चैकदेशोऽस्ती'त्याद्यपि प्रलापमात्रं परस्य, यदपि–"वेदाहमग्रे पुरुषं

महान्त''मित्याद्याशङ्क्य स्तुतिमात्रत्वादेषां न प्रमाणमित्युक्तं तदप्यसङ्गतं, यतो द्विधा स्तुतिः—काचित्सद्भूतगुणोत्कीर्त्तनेन, यथा—''जयति विनिर्जितरागः सर्वज्ञस्त्रिदशनाथकृतपूजः। सद्भूतवस्तुवादी शिवगतिनाथो महावीरः ॥१॥'' काचिदन्यथा कविधर्ममात्रेण, यथा—सुसितवसनालङ्कारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः। तदनुभवतः कीर्त्तिं केनाप्यगीयत येन सा, प्रियगृहमगान् मुक्ताशङ्का क्व नास्ति सुखप्रदः? ॥१॥ तत्र या सद्भूतार्थविषया स्तुतिः सा नाप्रमाणं भवति, अथ विधिवाक्यादपरं सर्वमप्रमाणं, ननु विधिवाक्यस्य विधावेव प्रामाण्यं ? किं वा वस्तुस्वरूपमात्रेऽपि ?, यद्याद्यः पक्षस्तर्हि अग्निहोत्रशब्दादग्निहोत्रे स्वर्गकामशब्दाच्च स्वर्गे तत्कामे च न प्रतीतिरित्यभिधेयशून्यमिदमुन्मत्तप्रलापमात्रं, तथा च विषयाप्रतिपत्तौ नियोगोऽपि प्रत्येतुमशक्यः संपद्यते, अथ वस्तुस्वरूपविषयेऽपि प्रामाण्यमिष्यते शब्दानां, अन्यथा तत्तच्छब्दश्रवणात्तत्तदर्थाप्रतीतिप्रसङ्गः, एवं तर्हि न विधिवाक्यस्यैव प्रामाण्यं, वस्तुस्वरूपमात्रप्रत्यायकस्यापि प्रामाण्योपपत्तेः, ततश्च 'वेदाग्रे पुरुषं महान्त'मित्यादेरपि प्रामाण्यमस्तु, भगवत एव सद्भूतगुणोत्कीर्त्तनरूपत्वादस्य, तथाहि—वेदज्ञानवानमहमित्यात्मनिर्देशोल्लेखकथनं कस्यचित्, 'अग्रे'युगादौ पुरुषं महान्तं नाभिनन्दनमित्यर्थः, 'आदित्यवर्णं' आदित्यवद्भास्वरस्वरूपं, ज्ञानरूपोपलक्षणमेतत्, 'तमसः' अज्ञानात् परस्ताद्, अज्ञानं तिरस्कृत्य केवलात्मना स्थितमित्यर्थः, तमेव भगवन्तमेवंविधं ज्ञात्वा मृत्युम् 'अत्येति' अतिक्रामति, नान्यः पन्था विद्यते 'अयनाय' गमनाय, मोक्षायेत्यर्थः। अन्यत्राप्युक्तं—''त्वामामनन्ति मुनयः परमं पुमांसमादित्यवर्णममलं तमसः परस्तात्। त्वामेव सम्यगुपलभ्य जयन्ति मृत्युं, नान्यः शिवः शिवपदस्य मुनीन्द्र! पन्थाः ॥ १ ॥'' यतः—'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' तानि तत्स्वरूपपरिज्ञाने सति संभवन्ति, वर्द्धमानादिजिनोपलक्षणं चैतत्। तथा यतो भगवान् केवलज्ञानेन तन्नास्ति

यन्न पश्यति ततो 'विश्वतश्चक्षु'रित्युच्यते, विश्वतोमुखः पुनरेवं, यतः समस्तमपि वस्तु वक्तुं शक्नोति, विश्वतोबाहुस्तु विश्वप्राणिनामालम्बनदानात्, तथाहि-दुःखघोरगर्त्तान्तःपतिताः प्राणिनः कथं भवेयुः यदि भगवान् सद्देशनाहस्तावलम्बदायी न भवेत्?, यत्तु दत्तमपि भगवता सद्देशनाहस्तावलम्बं न समाश्रयन्ते स तेषामपराधः, विश्वतः पाच्च निःश्रेयसाभ्युदयमिच्छद्भिस्त्रिजगद्वर्त्तिभिरपि पुरन्दरप्रभृतिभिर्भव्यदेहिभिः संसेव्यमानत्वात्, ते हि भक्त्यतिशयाद्भगवत्पादारविन्दमनवरतं ध्यायन्ति स्तुवन्ति पूजयन्ति च, चित्रचित्रादिनिवेशितप्रतिमः स एव भगवान् समेकीभावेन बाहुभ्यामिव बाहुभ्यां पुण्यापुण्याभ्यां धमति-युनक्ति सत्त्वान्, यद्यप्ययं वीतरागतया न कमपि पुण्यापुण्ययुक्तं करोति तथाऽपि तद्भक्तिभाजः स्वकीयविशुद्धाध्यवसायवशात् पुण्येन युज्यन्ते, अपरे दुष्टात्मानस्तद्विशेष(रोध)माविशन्तः पापेन, तत एवमुच्यते, यथा कारीषोऽग्निरध्यापयतीत्यादि, ते च देहिनः पुण्यापुण्यसहायाः शरीरादियोग्यान् पुद्गलस्कन्धानादाय केचिद्दिवि केचिच्च भुवि प्रजायन्ते, ततस्तानाश्रित्य तत्तद्व्यपदेशेन संपतत्त्यैः(द्भिः)परमाणुभिर्द्यावाभूमी जनयन् देव एक आस्त इत्युच्यते उपचारात्, तदेवं व्याख्याने सर्वज्ञस्यैव सद्भूतगुणोत्कीर्त्तनमिदं वचः, इति सिद्धो वेदवाक्यादपि सर्वज्ञः, यत्पुनरुक्तं 'अनादिरागमस्यार्थो, न च सर्वज्ञोऽनादिमान्' तत्रैकान्तेनागमस्यानादित्वं सर्वज्ञस्य चादिमत्त्वमसिद्धं, यतो यद्यप्यागमोक्तानुष्ठानात्सर्वज्ञः सर्वज्ञभावं लप्स्यत इत्यभिप्रायवतेदमुच्यते तथाऽपि नैक एव प्रतिनियतः कश्चित् सर्वज्ञ इति नः सिद्धान्तः, किन्त्वनादौ संसारेऽनन्ता भगवन्तः सर्वज्ञाः, ततः पूर्वसर्वज्ञागमाद्विवक्षितपुरुषः सर्वज्ञभावं लभते, पूर्वसर्वज्ञस्तु पूर्वतरसर्वज्ञागमादित्यनादिसर्वज्ञागमपरम्परायामदोषः, पूर्वसर्वज्ञागमोऽक्षत एव, किमिदानीं ततः सर्वज्ञः कुर्यादिति चेत्, यदि नाक्षतः संभवति तदा का वार्त्ता?, कथं तस्य क्षयः? इति चेत् कालादिदोषात्प्रज्ञामेधाबलादि(हानेश्च) मनुष्याणां तद्धारण-

स्यासामर्थ्यात्, विप्रतिपन्नतायाः पराहतिस्तु सत्यत्वपरीक्षातः, न चागमस्यापि सर्वस्यासत्यत्वं, आप्तप्रणीतस्य सत्यत्वात्, न चेतरेतराश्रयत्वं, यतो नागमसत्यत्वं प्र(माणीकृत्यैव सर्वज्ञत्वमुररीक्रियते आगमे सत्यत्वमुररीकृत्यसर्वज्ञस्य प्रामाण्यं वा, किन्तु अनुभूयमानसंशयज्ञानादि)निधानमिति, ततो यदाऽसौ प्रत्यक्षेण पश्यति तदा तस्य सत्यत्वं निश्चिनोति,एवमेतदुक्तस्यासद्बाधत्वमवेक्ष्य निश्चीयते सर्वज्ञत्वस्य प्रामाण्यं बहुधा, सत्यत्वदर्शनं चादृष्टेऽपि विषये तथा क्षयोपशमवशान्निश्चयं जनयति, एतच्च भवताऽप्यभ्युगन्तव्यं, अन्यथोत्तमश्रोत्रियवचनादप्यदृष्टफले यागाद्यनुष्ठाने केनचित्प्रवर्त्तितव्यं न स्यात्, यन्मात्रे दृष्टसंवादं तन्मात्र एव तद्वचनस्य सत्यत्वनिश्चयात्, वचनसत्यत्वनिश्चयस्तु वक्तुः सत्यत्वमावेदयतीति तद्वचनादप्यपहस्तितेतरेतराश्रयदोषात्, 'न प्रतीमः सर्वज्ञसदृशं कश्चिदि'त्याद्यप्यसङ्गतं, यतः सर्वथा सादृश्यं गोगवयादीनामपि नास्ति, किञ्चित्सादृश्यं तत्रापि विद्यत एव, तथाहि—बहुश्रुतबुद्ध्यादिगुणं पुरुषमुपलभ्य वक्तारो भवन्ति—सर्वज्ञतुल्योऽयमिति, तत्रासति तस्मिन् कथमेष व्यवहारः?, न ह्यसति समुद्रे समुद्रवत्तडाग इति व्यवहारः प्रवर्त्तते, यत्तु 'उपदेशो हि बुद्धादे'रित्याद्यभ्यधायि तदयुक्तमेव,'बुद्धादयो ह्यवेदज्ञा'इत्यादि त्वयुक्तं, भवद्वचनमात्रादेव तेषां व्यामोहस्यासिद्धेः, तस्मात् 'तदेवं प्रमाणपञ्चकं यत्र वस्तुरूपे न जायत'इत्याद्यसङ्गतं, तथोपमानबाधितेत्यपि च, नहि यादृशाः संप्रत्येव नरास्तादृशा एव सर्वदा ते, जैमिन्यादेरविशेषज्ञत्वप्रसङ्गात्, तदेवं नानुमानाभावोपमानबाधितेयं प्रतिज्ञेति, नापि निष्फला, यतो वस्तुनि प्रवर्त्तमानं प्रमाणं न विभाषया प्रवर्त्तते, अनेनैव प्रयोजनं अत इदमेव मया प्रत्येतव्यमिति, ततः समस्तवस्तुविस्तारि सर्वज्ञज्ञानं क्रमेण जगतः कार्त्स्न्यं प्रतियत् किमन्यत् परिवर्जयेत्?, एतदेव कृत्स्नमिति कुतः प्रतीतिः?, यदि पुनरपरमपि किमप्यस्तीति चेत्, न चैवं सति क्वचिद्भूतलादिप्रदेशे घटादयः सन्ति न सर्पादय इति भवतोऽपि कथं परिज्ञानसम्भव?, अथ यदि

तत्र सर्पादयः स्युस्तदा यथा घटादयः समुपलभ्यन्ते तथा तेऽप्युपलभ्येरन्, तदेतदन्यत्रापि समानं, तथाहि–यदि लोके धर्मा-धर्माकाशपुद्गलात्माद्धासमयातिरिक्ताः केऽपि पदार्था भवेयुस्तदा तेऽपि तद्वदेवोपलभ्येरन्, अथ सन्तोऽपि नोपलप्स्यन्ते यथा पिशा-चपरमाण्वादयः, ननु पिशाचपरमाण्वादयः केनापि नोपलभ्यन्त इति नास्ति, यतो यद्यप्यस्मदादिभिर्नोपलभ्यन्ते तथाऽपि केनाप्यु-पलभ्यन्ते, अन्यथा तत्सत्त्वसिद्धेरेवायोगात्, अत्र तूक्ताऽतिरिक्तार्थसत्तास्थापनाय कोऽपि न प्रकारः संभवति, तथाविधार्थद्रष्टुः कस्य-चित्केनचिदनुपलम्भात्, तथाहि–विवक्षितेन भगवता ये केचनापरे केवलिनः समुपलब्धास्ते तन्मात्रार्थग्राहिणो दृष्टाः, अन्यैरप्ये-तदतिरिक्तमर्थं प्रतिपद्यमानः कदाचित् केनचित् कश्चिन्न दृष्ट इति द्रव्यषट्कं स्वपर्यायक्रोडीकृतस्वरूपमेतावदेव कृत्स्नमित्यवगम्यते, यदि पुनर्यथाकथञ्चिदेवापरमपि परिकल्प्यते स्वाभिसन्धिना तदपरिज्ञानाचायमसर्वज्ञ इष्यते तदा न नः काचित्क्षतिः, यदि नामोक्तपदार्थातिरिक्तमप्रमाणकं मीमांसकाशङ्कितं किमपि वस्तु न जानातीत्येतावताऽयमसर्वज्ञस्तदा सिद्धसाध्यता, धर्मास्तिकाया-दिषट्पदार्थपरिज्ञानेनास्मदिष्टसर्वज्ञसिद्धेः, न चैवं निष्फलता प्रतिज्ञायाः, यतो धर्माधर्मौ तत्कार्यादि च नासकलार्थविद्वेत्ति, तदु-क्तम्–"जो एगं जाणइ सो सव्वं जाणइ" अन्येनापि केनचिदुक्तम्–"एको भावः सर्वथा येन दृष्टः, सर्वे भावाः सर्वथा तेन दृष्टाः। सर्वे भावाः सर्वथा येन दृष्टा, एको भावः सर्वथा तेन दृष्टः ॥१॥" तथाहि–सकलहिंसाद्यशुभकर्मकारणं सर्वप्राणिनां ज्ञानावरणादि-कर्माणि तत्कार्यं नरकादि, तदेवं तत्कार्यकारणपरम्परया परमाण्वन्तपरिज्ञाने कष्टं न सर्वज्ञता, तस्मादावरणविगमादनन्तवस्तुज्ञानं न च वस्तुपरिसमाप्तिः, यथा हि वयमनाद्यनन्तरूपतां विकल्पविज्ञानेन रात्रिंदिवादीनां बुद्ध्यामहे, न च तत्परिसमाप्तिः, तथा भग-वतोऽप्यनाद्यनन्तरूपया साक्षात्कुर्वतो न विरोधः, अकरणाधीनतया न सास्वादप्रसङ्गः, अत एवापराधीनतयाऽनियतविषयं यत्, न

चातीतानागतस्य वस्तुन इदानींत्त्वेनासद्विषयत्वमस्य, तत्कालालिङ्गितत्वेन तस्य सत्त्वात्, यदाऽपि हि यदि तद्वस्तु न भवेत्तदा तन्निर्विषयं स्यात्, अन्यथा चोदनाबुद्धिरपि 'चोदनैव भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितमेवंजातीयमर्थमवयितुमलं, नान्यत् किञ्च-नेन्द्रिय'मित्यादिना कथं भूतभविष्यद्विषयिणी सत्याऽभ्युपगम्यते ?, तदुक्तम्-"किञ्च तत्कालयोगेन, तस्य साक्षात्क्रिया यदा। तदेदानीमसत्त्वेऽपि, तस्यास्तित्वमदुर्घटम् ॥१॥" अथ यस्य भावी सुतस्तदनुभूयमानतया दृष्टस्तेनाप्रतीयमानतायां कथमभ्रान्तता ?, तदप्यसत्, यथा स दृष्टः शरदादिकालयुक्तस्तथा तस्य न बाधितत्वं, तत्कालयोगस्तु न तेन दृष्टः, तथाऽप्रतीतावपि नास्ति दोषः तदविशेषापरिज्ञाने, किञ्च-सर्वज्ञे सिद्धेऽपि न प्रतिज्ञातोऽर्थः सिध्यतीत्यादि यद् दूषणमभाणि तदप्यसङ्गतं, यतः कश्चित्सर्वज्ञः समस्तीति तावत्सिद्धिसौधमध्यमध्यासीनं, तत्र च शशिशेखरः सर्वज्ञः स्यादुत सुगतः किं वा जिनेन्द्रः ? इति यदा संशेरते प्रेक्षापूर्वकारिणस्तदा तदुक्तवचनपरीक्षणात्तन्निश्चयः, तथाहि-शशिशेखरादिप्रतिपादितानां वचनानां दृष्टेऽप्यर्थे यदा प्रामाण्यव्याहतिस्तदा तत्सत्यत्वमदृष्टेऽप्यसम्भाव्यं, ततस्तथाभूतं वचनं प्रतिपादयन्तः सन्तःउत्पादव्ययध्रौव्ययुक्तं सदित्याद्युपदेशं प्रमाणोपपन्नमुपलभामहे, ततः पारिशेष्यात्तमेव भगवन्तं प्रमाणभूतं प्रतिपद्येमहि, ततः सुगतादिनिरासादस्यैव सर्वज्ञत्वं, न खल्वस्माकं भृङ्गग्राहिकयाऽयमेव सर्वज्ञ इति प्रतिज्ञा, किन्तु यः कश्चित् प्रमाणाव्याहतं समस्तवस्तुव्यापकं स्वतन्त्रमुपदेशं प्रवर्त्तयति, तथाभूतश्चाखिलसिद्धान्तसौधमूलबन्धभूतोऽयं भगवतो जिनेन्द्रस्यैवोपदेश इति कथं न विशेषसिद्धिः ?, अथवा मा भूज्जिनेन्द्रः, यद्यपरोऽपि कश्चिदीदृशस्तदा स एव नः सर्वज्ञः, केवलं बलादपि जिनेन्द्रशब्दस्तमाश्रयत इति, यदपि क्वचिदुच्यते-'सर्वज्ञोऽयमिति ह्येतत्तत्कालेऽपि बुभुत्सुभिः। तज्ज्ञानज्ञेयविज्ञानविकलैर्गम्यते कथम् ? ॥ १ ॥' तदप्यसत्, यतो यद्यपि प्रत्यक्षेण तदप्रतीतिस्तथाऽप्यनुमानादिप्रमाणा-

न्तरतस्तत्प्रतीतिरस्त्येव प्राकृतपुरुषाणां, यस्त्वपरः सर्वज्ञः स प्रत्यक्षादपि तत्प्रतीतिभाक्, न ह्यस्माकमेव कश्चित्सर्वज्ञः, किन्तु यस्य यस्यावरणप्रहाणसाकल्यं भवति स स तद्भावं प्रतिपद्यते, न ह्येकसर्वज्ञोपदेशप्रमाणत्वे तज्ज्ञानं क्वोपयोगि ?, नैकोपदेशस्यैव प्रमाणत्वं, तदुपदेशानां बहुमपिप्रमाणत्वाभ्युपगमात्, तर्हि कियद्भिरागमः प्रणेतव्य इति चेत् अनन्तैरिति ब्रूमः, एकेनैव तस्मिन्नागमे प्रणीते तदपरोऽपि तदेव तत्त्वं तत्र प्रकाशयन् कमर्थं पुष्णातीति चेत् येषां तदपरिज्ञानं तेषामेव बोधं, देशकालादिव्यवहिता हि क्वापि केचित् पुरुषा आगमाश्च, ततः कथमेकवचनादेव तेषामवबोधः संपद्यत इति ?, यदा तु नैवं तदैक एव भगवानुपदिशति, अपरे तु जानतोऽपि प्रयोजनाभावान्न किमपि प्रतिपादयन्ति, न चैतावता तज्ज्ञानमनुपयोगि, अर्थाधिगतेरेव ज्ञानसाध्यत्त्वात्, तस्याश्च सिद्धत्वात्, न ह्यनेकेषु वेदवित्स्वेकस्मिन्नेव वेदार्थं प्रकाशयति प्रयोजनाभावादपरे जोषमासीनाः क्वचिदनुपयोगिवेदविज्ञाना भवितुं युक्ताः, अथास्य वचने किं किमपि प्रयोजनमस्ति किं वा नास्ति ?, यद्यस्ति तदा यदस्य वीतरागत्वमभ्युपगम्यते यद्व्याहन्यते, अथ नास्ति तदा न प्रेक्षापूर्वकारी, अत्रोच्यते–अयं हि भगवान् शारीरमानसानेकदुःखपरम्परोपनिपातपीडितान् प्राणिनः समुपलभ्य विमलकेवलबलावलोकितसकललोकालोकस्वभावस्तेषां तत्परित्राणकारणमविकलमधिगम्य तात्त्विकतद्विषयकरुणापरीतचित्तः प्रयोजनमन्तरेणैव वचः प्रतिपादयति, न खलु महतां परोपकारकरणे ताच्छील्यादपरं विशिष्टतरं कारणं, ताच्छील्यं च फलनिरपेक्षा वृत्तिरिति नावसरस्तत्र प्रेक्षापूर्वकारितायाः, तर्ह्ययमप्रेक्षाकारी प्रेक्षावतामाराध्यः कथं संपद्यते ? इति चेदुच्यते, एवमप्रेक्षापूर्वकारितायामप्येतत्प्रभावात् तत्त्वज्ञानावाप्त्या सकलसमीहितसिद्धेः, तथाहि–ताच्छील्यमात्रप्रयुक्तादपि भगवद्वचनात्प्रेक्षावन्तः स्वर्गापवर्गादिसुखसंसर्गमात्मनि निश्चिन्वन्तस्तमेव शरणतया प्रतिपद्यन्त इति कमुपालभेमहि ?, किं प्रेक्षापूर्वकारितामन्तरेणाप्यभिलषितमर्थं संपा-

दयन्तं चिन्तामणिमवाप्याबालिशः कश्चित् परिहरति, एतेनैतदपि प्रत्युक्तं यदुच्यते क्वचित्–'अयमाराधयितुर्यदि फलं ददाति नेतरस्य तदा कथं वीतरागः ?, अथ न ददाति तदा किं तेनाराधितेने'ति, यतश्चिन्तामणिमाराधयन् फलं यदि कश्चिदाप्नोति अनाराधयंश्च नाप्नोति तदा किं चिन्तामणेः किञ्चिदवीतरागत्वम् ?'इत्यादि शास्त्रकारैरनेकशः समाहितमस्ति ॥ यत्पुनरपरमिहैव बहु प्रलपितं तद-संबद्धतयोपेक्षणीयं, अलं जाल्मजल्पितेषु विदुषामतिप्रयासेन, तदेवं सत्यत्वनिश्चयाद्वक्तृसत्यत्वं, ततोऽपि तस्य तत्साक्षात्कारि-ज्ञानयोगित्वं, ततोऽपि रागादिवियोगाविर्भूतमार्यस्वभावत्वं च सिद्धमिति, अत एव तदागमादपरागमानामनृतत्वं, उक्तश्च मल्लवा-दिना–"विधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकवचोवत् । जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम् ॥१॥" एतत्कारिकाविशे-षभावार्थः स्वस्थानादवसेयः । इति वस्तुतत्त्वपरिज्ञानादाप्तस्वरूपपरिज्ञानमप्यतः प्रकरणात्सिद्धमिति ॥

॥ इति सकलसङ्ग्रहाधिकारः, इति समर्थितमिदमुत्पादादिसिद्धिनामकं प्रकरणमिति ॥ श्रीः ॥

इत्युत्पादादिसिद्धिद्वात्रिंशिकाविवरणं समाप्तं ।

मायापरैर्हतपरैः स्फुटमिन्द्रकल्पैस्तीर्थ्यैरनकल्पकुविकल्पशतैर्विलुप्ता ।
दृष्टिर्यदीरितपदत्रयमात्रमन्त्रात्, सम्यक्त्वमेति भविनां जयताज्जिनोऽसौ ॥ १ ॥

कुदृष्टयो यद्वशतः सुदृष्टिभावं ययुस्त्यक्तविरोधसञ्ज्ञाः । शिवं शिवं तज्जिनशासनं नस्तनोतु निःशेषसमृद्धिहेतुः ॥ २ ॥

श्रीमांश्चान्द्रकुलेऽभवद्गुणनिधिः प्रद्युम्नसूरिप्रभुर्बन्धुर्यस्य स सिद्धहेमविषये श्रीहेमसूरिर्विधिः ।
तच्छिष्यावयवोऽत्र सूरिरजनि श्रीचन्द्रसेनाभिधस्तेनेदं रचितं प्रकाशपदवीं नेयं पुनः साधुभिः ॥ ३ ॥

कृत्वा प्रकरणमेतद् यत्कुशलमिहार्जितं मया किञ्चित् । तस्मात्तत्त्वैकरुचिर्भवतु जनः सिद्धसद्बोधः ॥ ४ ॥

द्वादशवर्षशतेषु श्रीविक्रमतो गतेषु मुनि(मुनि)भिः । चैत्रे संपन्नमिदं साहाय्यं चात्र मे नेमेः ॥ ५ ॥

॥ भद्रमस्तु जिनशासनाय जिनशासनस्य वा ॥

इति श्रीसिद्धहेमगुरुभ्रातृश्रीप्रद्युम्नसूरिशिष्यश्रीचन्द्रसेनाचार्यरचित
स्वोपज्ञं श्रीउत्पादादिसिद्धिद्वात्रिंशिकाविवरणं समाप्तं ।

